Reprint From The

# CHOWKHAMBA SANSKRIT SERIES

A

Collection of Rare & Extraordinary Sanskrit Works.

Nos. 3, 4, 5, 6.

# शब्दकौस्तुभः

श्रीमद्भट्टोजीदीक्षितविरचितः ।



प्रथमाध्यायस्य प्रथमपादो नवाह्निकपर्यन्तः

प्रथमो भागः ।





प्रकाशकः—

जयकृष्णदास हरिदासगुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

REPRINT FROM THE
CHOWKHAMBA SANSKRIT SERIES
A
COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.
Nos. 3, 4, 5, 6.

# THE S'ABDA KAUSTUBHA

By

S'RI BHAṬṬOJI DIKSHITA.

Vol. I. Fas. I to IV.

First Pāda of the First Adhyāya Complete.

EDITED BY

VYĀKARAṆĀCHĀRYA
Pandit GOPAL S'ASTRI NENE.
Professor, Govt. Sanskrit College, Benares.

and

VYĀKARAṆĀCHĀRYA
Pandit S'ri Mukund S'astri Puṇtamkar.

JAI KRISHNADAS-HARIDAS GUPTA,
*The Chowkhamba Sanskrit Series office,*
*Benares City.*

1933.

❀ श्री ❀

चौखम्बा-संस्कृत-ग्रन्थमाला

ग्रन्थ-संख्या २

नं० ३, ४, ५, ६.

# शब्दकौस्तुभः

श्रीमद्भट्टोजीदीक्षितविरचितः ।

प्रथमाध्यायस्य प्रथमपादो नवाह्निकपर्यन्तः

प्रथमो भागः ।

काशिकराजकीय संस्कृतप्रधान पाठशालाध्यापक-नेने-
इत्युपनामक गोपालशास्त्रिणा पुणतामकरो-
पाह्व पं० मुकुन्दशास्त्रिणा च संस्कृतः ।

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

विद्याविलास प्रेस, बनारस सिटी ।

१९९०

# भूमिका

अथैष शब्दकौस्तुभविषये प्रसङ्गात् कश्चन उदन्तविशेषः प्रकाश्यते—

तत्र स्वाध्यायोऽध्येतव्य इति विधिबोधितं वेदाध्ययनम्, ते च साङ्गा अध्येतव्या इति शिक्षादिपर्यालोचनेन स्पष्टं प्रतीयते—'तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते' इति। वेदाङ्गेषु मुखमिव प्रधानमिदं व्याकरणम्, 'तेषु च इन्द्रचन्द्रादिभेदेन अष्टधा भिन्नेषु महेश्वरप्रसादलब्धमिदं सर्वानतिशय्य वर्तमानमध्ययनाध्यापनाभ्यां सर्वत्र प्रसृतं सूत्रजातं 'दर्भपवित्रपाणिराचार्यः प्राङ्मुख उपविश्य महता प्रयत्नेन प्रणयति स्मेति तत्र २ आकरे भगवता अधिगतयाथातथ्येन विदितवेदितव्येन पतञ्जलिना प्रतिपादितम्'।

न खलु कश्चिदस्य पाणिनीयतन्त्रस्य सर्वशास्त्रोपकारकत्वे विप्रतिपन्नः नापि वेदाङ्गत्वे महेश्वरोपदिष्टाक्षरसमाम्नायापरपर्यायश्रुतिमूलकत्वात्।

गोनर्ददेशे भगवतः पाणिनेराचार्यस्याञ्जलौ यतोऽयं सन्ध्याकरणसमये पतितः, अतश्च पतञ्जलिरिति अभिधानमापन्नस्तत्रभवान् भुजगपतिरेव तद्रूपेणावतीर्णस्तपःप्रभावादिदं सूत्र जातं व्याख्यानेन समलञ्चकार। कस्को न जानात्यस्य जगतीतले आसेतुशीताचलं प्रथितस्य तपोविशेषस्य महिमातिशयम्, निखिलशब्दधर्मिकसाधुत्वप्रकारकयथार्थज्ञानवान् स एष योगाचार्यः, यदुक्तिजाते इदानीन्तनानामपि श्रुतितुल्यः समादरः। तत्प्रणीतो नितरामेषग म्भीरतरो भाष्याब्धिः। तत्सारमादित्सुना भट्टोजीदीक्षितेन बहुतरायाससहिष्णुना तत्रो पजायमानं श्रमातिशयमविगणय्य विष्णुनेव समुन्मथ्य भाष्योदधिं ततः समुद्धृतमिदं शब्दकौस्तुभो नाम ग्रन्थरत्नम्। अत्र च काशिकादितः महाभाष्यस्य गूढाभिप्रायवर्णने पूर्वोत्तरग्रन्थविरोधपरिहारे च ग्रन्थकर्तुः सातिशयोऽभिनिवेशो दरीदृश्यते। ग्रन्थप्रणयनकौशलं च विदुषां लोचनपथगोचरीभूतममन्दानन्दसन्दोहं जनयिष्यति इत्यत्र नास्तिसन्देहावसरः, तदवेक्षणस्यैव तन्निवर्तकत्वात्।

निखिलविद्यासंभारभासुरः पदवाक्यप्रमाणपारावारपारीणः श्रीमान् भट्टोजिदीक्षितः कदा कतमं देशमध्युवासेत्यादिकं यद्यपि बहुभिर्निर्णीतम्, अथाप्येतस्य द्राविडपञ्चकातिरिक्तत्वे न कमपि दृढतरं हेतुमुत्पश्यामः। प्रत्युत पृथ्वीमण्डलमौलिमण्डनमणेः काशीस्थस्य महाराष्ट्रज्ञातिसमुद्भूतस्य शेषोपाभिधस्य श्रीकृष्णपन्तस्यान्तेवासी इति।

"निर्विशेषमहं शेषाच्छेषकृष्णं गुरुं भजे।
योमामशेषाः शेषोक्तीर्विशिष्यैवाध्यजीगपत्॥ १॥

इति प्राचीनतरे गवर्नमेण्ट संस्कृतकालेजसरस्वतीभवनस्थिते शब्दकौस्तुभपुस्तके उपलम्भात्

वाग्देवी यस्य जिह्वाग्रे नरीनर्ति सदा मुदा॥
भट्टोजीदीक्षितमहं पितृव्यं नौमि सिद्धये॥

इत्यनेन रंगोजीभट्टस्य भ्राता इति वैयाकरणभूषणे कोण्डभट्टेन स्फुटं प्रतिपादितत्वात् स्वरवैदिकयोर्भागयोर्मध्ये विशेषेण ऋक्शाखोदाहरणदानाच्च तस्य द्राविडपञ्चकान्तर्भूतता दाक्षिणात्यता ऋक्शाखीयता च अस्मत्संमता॥ "शेणवई इति प्रसिद्धा काचन जातिरधुनापि दाक्षिणात्येषु वर्त्तमाना गौडसारस्वतापरपर्याया उपलभ्यते तस्यामेव जनिरेतेषां तेन गौडसारस्वतत्वं दाक्षिणात्यता ऋक्शाखीयता चेति सर्वमुपपद्यते

इति मान्याः ॥ तत्र गुरोरित्येकवचनेन सर्वविद्यालाभ एकस्मादेव गुरोरिति सूचितमिति वदता शब्दरत्नकृता निखिलविद्यालाभः शेषश्रीकृष्णादेवेत्यभिहितम्। नात्र कस्यापि वैमत्यम्। शेषश्रीकृष्णपन्तश्च निखिलपण्डितमण्डलाखण्डलः रामचन्द्रप्रणीतप्रक्रियाकौमुदीव्याख्यां प्रक्रियाप्रकाशाभिधां चकार। एवमेतत्प्रणीतो न्यासग्रन्थो गुरुचरणानां दृष्टिपथमुपागतोपि तल्लाभाय प्रयतमानैरस्माभिरनुष्ठितो भूयान् परिश्रमो विफलतामुपगत इति नितरां तेन दूयामहे वयम्। प्रथिता चैषां दाक्षिणात्येषु द्वितीयसपर्या ॥ करालेऽप्यस्मिन्कलिकालेऽनुदिनं तदन्वयसमुद्भूतैराहिताग्निभिरनुष्ठीयतेऽग्निहोत्रम् ॥ स्पर्धा निरस्यास्य भवने श्रियो वाग्देव्याश्च निवासः। एवमन्येपि तदन्वये सदसि वाक्पटवः धीरधिषणावधीरितवाचस्पतयः वेणीराम भाईराम भिकूजीशर्माणो विद्वत्तमाः समुद्भूताः। येषामद्यापि यशोराशिरुपवर्ण्यते काशीस्थैर्वृद्धसूरिभिः। वेणीरामछात्रेषु सदसि लब्धसंमानाः शब्दशास्त्रपारावारपारीणाश्चतुर्धरोपनामकदीक्षितवैद्यनाथशर्माणो मदीयमातामहचरणाः। यदीयतपःप्रभावादिदं दुष्करं शब्दकौस्तुभप्रकाशनकार्यं मयाऽकारि। 'भट्टोजिदीक्षितस्य पुत्रो वीरेश्वरदीक्षितः, 'तदीयः पुत्रो हरिदीक्षितः' 'तदीयशिष्यश्च नागेशभट्टः' 'तदीयः पायगुण्डोपाभिधो वैद्यनाथः' । 'तदीयाश्छात्रा घुलोपाभिध सदाशिवभट्टाः'। येषां सदसि उच्चासनोपवेशनं विप्रतिपत्तिनिर्णायकता च तदानीं प्रसिद्धा। गुरूणां प्रथमः अष्टपुत्रे इत्युपाभिधः अप्रतिमप्रतिभः काशीनाथशास्त्री पेशवामहोदयाश्रितश्रीमज्जगन्नाथशास्त्रिणामन्तेवासी सदसि तदीयं निर्णयं नाङ्गीकुरुते स्म। प्रत्याख्यातं च तेन तदुक्तम्। अथ तत्र समेतैः सभ्यैरन्याय्यमनेनानुष्ठितमिति सभायामनिमन्त्रणं निर्णीतम्। धीरेण निजेष्टदेवतासहायेन तेन धनिकानां साहाय्यं कालेनाऽऽसादितम्। तदानीं स्वयमेव सभाविधानं तेषां च तत्राह्वानं विप्रतिपत्तिप्रदर्शनं चेत्याद्यकारि। भट्टाश्च 'भोसले' इत्युपाभिध नागपूर महाराजाल्लब्धसंमानास्तत्सकाशात्संप्राप्य स्थिरतरां वृत्तिं तत्रैव जग्मुः। अधुनापि तदन्वयसंभूतास्तत्र विराजन्ते विद्वांसः। तदा प्रभृति काश्यामेकः काशीनाथ एवासीत्। य इमां परिष्कारशैलीमाततान ॥ जगन्नाथ शास्त्रिणामन्तेवासी अपरोऽपि गणेशशास्त्री सराफाभिधस्तत्सतीर्थ्यो गुरुकृपाभाजनं 'समधिकविभवसंपन्नः कालेनाहङ्कृतिमापन्नोऽयं' इत्येवं रूपेण गुरुदृष्टिपथमुपगतेन काशीनाथशास्त्रिणा सह शास्त्रविचारे प्रवृत्तस्तं विजिगायेति गुरुजनमुखाच्छ्रुतमस्माभिः। अथ काशीनाथशास्त्रिणामन्तेवासिनौ अशेषशास्त्राध्यापकौ यागेश्वरपण्डितकालेंकरराजारामशास्त्रिणौ। तेषु गवर्नमेण्टसंस्थापितसंस्कृतकालेज्प्रधानाध्यापकः पण्डितराजराजारामशास्त्री राजसंमानितः स इमां परिष्कारशैलीं समधिकामाततान। विद्याविनयवित्तेभ्यइव रम्यतरेण वपुषा विराजमानस्य तस्य 'बालशास्त्रीत्यभिधः' 'रानडे इत्युपाभिधश्च' एकश्छात्रोऽतिकृपाभाजनं सारस्वतसर्वस्वमिवासीत्। सोमयाजिनोऽस्य सदसि वाक्पटुता अनन्यसदृशी प्रथिता। तथा नीतिविशारदस्य राजगुरोरगाधमेधस्य तस्य चत्वारश्छात्रा आसन्। य एते महामहोपाध्यायपदवीभाजः पं० दामोदरशास्त्री पं० शिवकुमारशास्त्री पं० गुरुवरगङ्गाधरशास्त्री सी० आई० ई० पं० रामकृष्णशास्त्री इत्यभिधेयाः पण्डितशिरोमणयः, तदलङ्कृतेयं वाराणसी तदानीं हसन्तीवामरपुरीमासीदिति दृशानुभूतं निवेदयामः। अथैषां साक्षात्परम्परया वा सर्वेऽपि प्रायेण इदानींतना विद्वांसश्छात्रा एव। अनन्यसदृशां कुलपतिकल्पानामेषां भूयःसु छात्रेषु प्रथमाः महामहोपाध्यायपदवीभाजो मदीयगुरवः पण्डितवरनित्यानन्दपन्त पर्वतीयचरणाः। यत्सन्निधानेन तदीयगुणैकलेशभाजा मया समर्पितं।

शब्दकौस्तुभसंशोधनकार्यम् । इतरे च मदीयगुरवः काशीस्थराजकीयसंस्कृतविद्यालयप्रधानाध्यापका धर्माधिकारी इत्युपाभिध पण्डितप्रवरनागेश्वरपन्तमहोदयाः । यत्पादाम्बुजसेवया मया धीरधिगता ।

यद्यद् विभूतिमत्सत्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम् ॥

इति भगवदुक्तेस्तदवताररूपाणां गुरूणां यथामति संक्षेपेणोपवर्णितं तदीयचरितं

'यज्जुहोषि यदश्नासि यत्करोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥

इति च भगवदुक्तेस्तदीयचरणेष्वेव सनति समर्प्यते ॥ संप्रार्थये च मुहुस्तान्प्रत्युपचीयतां भवच्चरणेषु अनुदिनं मामकीनोऽनुराग इति । एवं महामहोपाध्यायपदवीभाजां अशेषशास्त्राध्यापकानां पण्डितप्रवरधर्मप्राणलक्ष्मणशास्त्रिचरणानामनुयायिना मया कृतज्ञेन तदीयचरणेषु विधीयन्ते कोटिशः प्रणामाञ्जलयः । यैरात्मानमिव नितरामुपकृतां मन्ये भरतभूमिम् । विद्यात्यागतपोमूर्तीनां येषांयशोराशिप्रकाशेन प्रकाशितमिदं करालकलिकालान्धीकृतमवनितलम् ।। नैसर्गिकी भूतदया प्राणाधिकश्च धर्मरक्षोद्यमः सर्वत्र एषां प्रथितः । विद्वन्मण्डलाखण्डलानां पुण्यचरितानामेषां समधिकाऽनुकम्पाऽनुचरे आसीत् । एवं काशीस्थराजकीयसंस्कृतपाठशालाप्रधानाध्यापकान् 'नेने' इत्युपाभिध मित्रवरपण्डितगोपालशास्त्रिणोऽनेके धन्यवादा वितीर्यन्ते । यैरत्राधिकतरसाहाय्यप्रदानेनानुगृहीतोऽस्मि । एवमितरानपि सर्वान् प्रियसुहृदो विचक्षणप्रवरान् मुहुः संप्रार्थये यदत्र मदीयदृष्टिपथमनागतं दोषं संशोधयन्तु, क्षाम्यन्तु च संशोधनकार्यप्रवृत्तिरूपं मदीयं साहसम् इति ।

विदुषामनुचरः

**नित्यानन्दपन्तगुरुचरणान्तेवासी**

**पुणताम्करोपाभिधो मुकुन्दपन्तः**

---

॥ श्रीः ॥

# शब्दकौस्तुभनवाह्निकविषयसूची



इति ।

॥ श्रीः ॥

भट्टोजिदीक्षितविरचितः ।

# शब्दकौस्तुभः ।



॥ श्रीगणेशाय नमः ॥

विश्वेशं सच्चिदानन्दं वन्देऽहं योऽखिलं जगत् ॥
चरीकर्त्ति वरीभर्त्ति संजरीहर्ति लीलया ॥ १ ॥
नमस्कुर्वे जगद्वन्द्यं पाणिन्यादिमुनित्रयम् ॥
श्रीभर्तृहरिमुख्यांश्च सिद्धान्तस्थापकान्बुधान् ॥ २ ॥
नत्वा लक्ष्मीधरं तातं सुमनोवृन्दवन्दितम् ॥
फणिभाषितभाष्याब्धेः शब्दकौस्तुभमुद्धरे ॥ ३ ॥
परिभाव्य बहून् ग्रन्थान्योऽर्थः क्लेशेन लभ्यते ॥
तमशेषमनायासादितो गृह्णीत सज्जनाः ॥ ४ ॥
समर्प्य लक्ष्मीरमणे भक्त्या श्रीशब्दकौस्तुभम् ॥
भट्टोजिभट्टो जनुषः साफल्यं लब्धुमीहते ॥ ५ ॥

प्रेक्षावत्प्रवृत्तये व्याकरणस्य विषयं भगवान् भाष्यकारः प्रादर्शयत् "अथ शब्दानुशासनम्" इति । अथशब्दः प्रारम्भस्य द्योतको न तु वाचकः, निपातत्वात् उपसर्गवत् । न च तेऽपि वाचका एवेति वाच्यम्, 'उपास्यते गुरुः' 'अनुभूयते सुखम्' इत्यादौ धातोः सकर्मकक्रियापरत्वं विना कर्मणि लकारायोगेन वाचकत्वे स्थिते उपसर्गाणां द्योतकत्वस्यैव युक्तत्वात् । ननूक्तयुक्त्याऽस्तूपसर्गाणां द्योतकता निपातान्तरं तु वाचकमेवेति चेत् ? न, साक्षात्क्रियते अलंक्रियते ऊरीक्रियते इत्यादौ कर्मणि लकारेण कर्मीभूतस्य गुर्वादेरभिधानसिद्धये धात्वर्थं प्रति कर्मत्वस्य वाच्यत्वात्, उपसर्गत्वापेक्षया निपातत्वस्याधिकवृत्तितया तदवच्छेदेनैव द्योतकताकल्पनाच्च । सामान्ये प्रमाणानां पक्षपातात् । निपातत्वं चाऽखण्डोपाधिरूपं जातिरूपं शब्दस्वरूपमेव चेति पक्षत्रयेऽपि प्रादिचादिसाधारणमेव । प्रत्वादिप्रत्येकपर्यवसन्नं तदिति पक्षेऽपि प्रादीनां चादिभ्यो वैलक्ष-

ण्यानिरुक्तेः केवलानामप्रयोगेण अन्यलभ्यताऽपि तुल्यैव । विजयते इत्यत्र धातोर्विशिष्टजय इव घटश्चेत्यत्र समुच्चितघटे घटशब्दस्यापि लक्षणायाः संभवात् । किञ्च चादीनां वाचकत्वे समानाधिकरणप्रातिपदिकार्थयोरभेदान्वय इति व्युत्पत्तिर्निपातेतरविषयकतया विना प्रमाणं संकोचनीया स्यात्, स्याच्च समुच्चयादिशब्दयोग इव चादियोगेऽपि घटादेः षष्ठी । किञ्च समुच्चयादिपदैरुपस्थिते यथा विशेषणसम्बन्धस्तथा चादिभिरुपस्थितेऽपि स्यात् । द्योतकत्वपक्षे तु पदार्थैकदेशत्वान्न तत्र विशेषणान्वयः । अपि च—

शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव ।

इत्यादौ उस्रसदृशैः शरैः रससदृशानुदीच्यानुद्धरिष्यन्नित्यादिरर्थः । स च उस्रादिशब्दानां तत्सदृशपरत्वे इवशब्दस्य च तात्पर्यग्राहकत्वे सत्येव लभ्यते । अन्यथा प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधजनकताऽपि भज्येत । इवशब्दात्तु तृतीया दुर्लभा, असत्त्वार्थकतया कारकविभक्त्ययोगात् । एवमप्युस्रादिभ्यस्तृतीयायाऽनन्वयस्यानुद्धाराच्च । नन्वेवं नञ्तत्पुरुषस्योत्तरपदार्थादिप्राधान्यमित्यादिसिद्धान्ता भज्येरन्निति चेत् ? न, पूर्वपदद्योत्यं प्रति प्राधान्यमिति तदर्थात् । द्योत्यार्थेना(१)प्यर्थवत्तेति प्रातिपदिकत्वसिद्धिः । अत एव येषां द्योत्योऽप्यर्थो नास्ति "तु हि च स्म ह वै पादपूरणे" इत्यमरकोशात् "कमीमिद्विति पादपूरणार्थाः" इति निरुक्ताच्च, तदर्थं "निपातस्यानर्थकस्य" इति वार्तिकारम्भ इत्यवधेयम् । स्फुटश्चेदङ्कैयटादिग्रन्थेषु । अत एवाऽऽकृत्यधिकरणे भट्टैरुक्तम्—

चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः ।
क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः ॥
तयोरर्थाभिधाने हि व्यापारो नैव विद्यते ।
यदर्थद्योतकौ तौ तु वाचकः स विचार्यते ॥ इति ॥

यत्तु अर्थवत्सूत्रे 'अधीते' इत्यादौ धातोरनर्थकता उपसर्गविशिष्टस्य वाचकतेति कैश्चिदुक्तं, तदभ्युच्चयमात्रम् । "सर्वस्य द्वे" इति सूत्रे कैयटादिग्रन्थोऽप्येवमेव । पूर्वोत्तरमीमांसयोस्तत्रतत्र नञः पर्युदासे लक्षणेति ग्रन्थः अप्येवमेव, उक्तयुक्तेः । अस्तु वा मतान्तरं निपाता वाचका इति, सर्वथापि प्रादयो द्योतकाश्चादयस्तु वाचका इत्येवंरूपमर्द्धजरतीयं नैयायिकाभ्युपगतमप्रामाणिकमेवेति दिक् ।

(१) 'द्योत्यार्थे नैवार्थवत्ता' क० ।

अनुपूर्वकः शासिर्विविच्य ज्ञापने दृष्टः । तद्यथा–"अक्षेत्रवित् क्षेत्रविदं ह्यप्राट् स प्रैति क्षेत्रविदानुशिष्टः" । यथा वा–"संपूषन्विदुषा नय यो अञ्जसाऽनुशासति । य एवेदमिति ब्रवत्" । अत्र हि गुणत्रयोपेतेन सद्गुरुणाऽस्मान् शिक्षयेति पूषा प्रार्थ्यते । तत्र अञ्जसेति शैघ्र्यमुक्तम् । अनुशासतीति विविच्य बोधकत्वम् । "बहुलञ्छन्दसि" इति शपो न लुक् । इदमित्थमेवेति यो ब्रूयादिति प्रमेयनिष्कर्ष उक्तः । ब्रवदित्यत्र "लेटोऽडाटौ" इत्यट् । तथाच अनुशिष्यन्ते विविच्य असाधुभ्यो विभज्य बोध्यन्ते येनेति करणे ल्युट् । ततश्शब्दानामिति कर्मणि षष्ठी, तदन्तेन समासः । न च "कर्मणि च" इति सूत्रेण समासनिषेधः शङ्क्यः, तत्र च श(१)ब्दार्थतया कर्मणीति शब्दवता "उभयप्राप्तौ" इतिसूत्रेण या षष्ठी तदन्तं न समस्यते इत्यर्थात् । इयं तु "कर्तृकर्मणोः" इति विहिता षष्ठी, न तु "उभयप्राप्तौ" इति, आचार्यस्य कर्त्तुर्वस्तुतः सत्त्वेऽपीहानुपादानात् । 'चित्रं गवां दोहो ऽगोपेन' इत्यत्र हि आश्चर्यं प्रतिपाद्यं, तच्च यद्यशिक्षितो दोग्धा दुर्दोहा गावश्च दोग्धव्यास्तदैव निर्वहति, न त्वन्यथा । अतः कर्तृकर्मणोर्विशिष्योपादानादस्त्युभयप्राप्तिः । इह तु शब्दानामिदमनुशासनं न त्वर्थानामित्यर्थनिवृत्तिपरं वाक्यं न तु कर्तृविशेषनिवृत्तिपरमतो नास्त्युभयप्राप्तिः । अस्तु वा यथाकथञ्चिदुभयप्राप्तिः । तथापि न क्षतिः, "उभयप्राप्तौ" इतिसूत्रे अविशेषेण विभाषेति पक्षस्यापि वक्ष्यमाणतया नियमाप्रवृत्तिपक्षे आचार्यस्य शब्दानुशासनमिति प्रयोगसंभवात् । शेषलक्षणा षष्ठी वाऽस्तु । तस्माद्वैदिका लौकिकाश्च साधवः शब्दा इह विषय इति स्थितम् । वेदे भवा वैदिकाः, अध्यात्मादित्वाट्ठञ् । एवं लोके भवा लौकिकाः । यद्वा लोके विदिता लौकिकाः "तत्र विदित" इति वर्त्तमाने "लोकसर्वलोकाट्ठञ्" । प्रातिशाख्येष्विव न वैदिकैकदेशमात्रमिह विषयः । न वा व्याकरणान्तरेष्विव छान्दसपरित्याग इति सूचयितुमुभयोपादानम् ॥

॥ इति विषयनिरूपणम् ॥



(१) 'चशब्दस्य इतिशब्दार्थकतया' क० ।

स्यादेतत्, गौरित्यादिः शब्द इह विषयः। तत्र च गकार औकारो विसर्गश्च घटकः। व्युत्पाद्यते तु डोप्रत्ययसुप्रत्ययर्वादेशादिकम्। न चैतद्गौरिति बोधे भासते। तथाचार्थान्तरता। गौरित्यनेन परिनिष्ठितेन सह डोप्रभृतीनां सम्बन्धविशेषस्तत्प्रतिपत्त्युपयोगिता चास्तीति तद्व्युत्पादनमिति चेत्? न, शब्दान्तरव्यावृत्तस्य सम्बन्धस्य उपयोगस्य च दुर्वचत्वात् द्रव्यगुणादिपदार्थानामिह व्युत्पाद्यतापत्तेश्च। अस्ति हि तेषां गौरित्यनेन वाच्यवाचकभावादिः सम्बन्धः। अत एव शाब्दबोधे गवि समवायेन गोत्वमिव शक्त्याख्यसम्बन्धेन शब्दो विशेषणतया भासते। चाक्षुषबोधेऽपि व्यक्त्या स्मारितः शब्दो विशेषणमित्यभ्युपगमः। आह च—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥
ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा।
तथैव सर्वशब्दानामेते पृथगवस्थिते॥ इति।
यत्संज्ञास्मरणं तत्र न तदप्यन्यहेतुकम्॥
पिण्ड एव हि दृष्टः सन् संज्ञां स्मारयितुं क्षमः॥

इति च।

युक्तं चैतत्, गृहीतशक्तिकं प्रति शब्देनार्थस्येव अर्थेन शब्दस्यापि स्मरणे बाधकाभावात्। अत एव गोत्वस्येव गोशब्दस्यापि व्यक्तिविशेषणत्वाविशेषात्संसर्गोऽपि तादात्म्यमेवास्तु। एवं गोगुणादिभिरपि तदभिन्नाभिन्नस्य तदभेदादित्याशयेन "अथ गौरित्यत्र कः शब्दः" इति प्रघट्टके द्रव्यगुणकर्मसामान्यैः सह शब्दस्याभेदो भाष्यकृद्भिराशङ्क्य निराकृतः। तत्र निराकरणग्रन्थस्यायमाशयः—समसत्ताकभेदाभेदौ विरुद्धावेव। अन्यथा त्वदुक्तरीत्या सत्तागुणत्वाद्यभेदात्सुखदुःखस्वर्गनरकादेरप्यभेदापत्तौ प्रवृत्तिनिवृत्तिव्यवस्था न स्यात्, न स्याच्च भेदग्रहाद् भ्रमनिवृत्तिः। जातिव्यक्त्यादिसम्बन्धस्त्वतिरिक्त एवेति। एवमेव शब्देनापि सहास्त्येव सम्बन्धो द्रव्यादीनामिति स्थितम्। अस्ति च द्रव्यादिव्युत्पादनस्य प्रकृते उपयोगोऽपि। अस्मिन्नर्थेऽयं साधुरित्यर्थविशेषं पुरस्कृत्यैव साधुत्वस्य वक्तव्यत्वात्। अत एव वाजिनि दरिद्रे च क्रमेण अश्वशब्दो अस्वशब्दश्च साधुर्व्युत्क्रमेण त्वसाधुरिति सिद्धान्तः।

ननु यथा वैशेषिकादीनामेतच्छास्त्रसिद्धमेव प्रकृतिप्रत्ययविभागमुपजीव्य पदार्थव्युत्पादनाय प्रवृत्तिः, प्रकृतिप्रत्ययादिविचारस्तु

काचित्कः प्रासङ्गिकस्तथेहापि लोकप्रसिद्धं दर्शनान्तरसिद्धं च पदार्थजातमुपजीव्य शब्दमात्रव्युत्पादनं न विरुध्यते इति चेत्? अस्तु तावदेवं, तथापि डोंप्रभृतिव्युत्पादनं निष्फलमेव; इति चेत्? अत्रोच्यते, गौस्तिष्ठति देवदत्तः पचतीत्यादयः शृङ्गग्राहिकया तावज्जन्मसहस्रेणापि बोधयितुं बोद्धुं चाशक्याः, आनन्त्यात्। अतः प्रकृतिप्रत्ययविभागकल्पनारूपो लघुभूत उपायः समाश्रीयते लिपिवत्। आरोपित एव च तत्र सम्बन्धः। प्रसिद्धो हि स्थूलारुन्धतीशाखाचन्द्रादिन्यायो लोके, पञ्चकोशावतरणन्यायश्चोत्तरमीमांसायाम्। तात्पर्यविषयाबाधाच्च प्रामाण्यम्। एषैव ह्यर्थवादेष्वपि गतिः। आत्मवपोत्खेदनप्रभृतीनां बाधेऽपि तात्पर्यविषयीभूतस्य प्राशस्त्यस्याबाधितत्वात्। उक्तं च हरिणा—

उपायाः शिक्षमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥ इति॥
उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः। इति च।

अत एव हि केचित्सुप्रत्ययं विदधति, अपरे सिम्। तथा सूत्ररीत्या 'पाठितम्' इत्यत्र इतप्रत्ययः, भाष्यरीत्या तप्रत्ययः; सूत्ररीत्या तावानिति वतुप् "डावतावर्थवैशेष्यात्" इति वार्त्तिकोक्तरीत्या डावतुरिति दिक्।

एतेन 'पचति' इत्यादौ आदेशैः स्मार्यमाणा लडादयो बोधका इति वदन्तः परास्ताः। तथा हि, वृद्धव्यवहाराच्छक्तिग्रह इति निर्विवादम्। ततश्च प्रयोगसमवायिनामेव तिप्रभृतीनां शक्तिः सिध्यति, न त्वलौकिकानां लादीनाम्। एवं डुपचष् डुकृञ् इत्यादिप्रकृतयो विच्क्विबादिप्रत्ययाश्च न शक्ताः किन्तु अपाक्षीत् पपाच पापच्यते करोति चर्करीति इत्यादिप्रयोगसमवायिनः अपाक् पपाच् इत्यादय एव।

श्रूयमाणेन डुपचष्प्रभृतीनां स्मरणं तेनार्थबोध इति चेत्? न, लाघवाद्व्यवस्थितत्वाच्च श्रूयमाणानामेवार्थसम्बन्धकल्पनात्, औत्प्रेक्षिकस्य स्मरणकल्पने गौरवात्, अव्यवस्थापत्तेश्च। 'पचति(१) देवदत्तः', 'पचन्तं तं पश्य' इति तिप्शतृभ्यां स्मारितस्य लट एव बोधकत्वे एकत्र आधाराधेयभावेन संसर्गेण देवदत्ते आख्यातार्थो यत्नो विशेषणमितरत्र तु अभेदेन संसर्गेण कृदर्थः कर्त्ता विशेषणमिति त्वात्सिद्धान्तभङ्गापत्तेश्च। एतेन कर्त्रधिकरणे आख्यातार्थत्वं कर्तुर्निरस्य जङ्घन्यमानाधिकरणे शानजर्थत्वं स्वीकुर्वन्तो मीमांसका अपि परास्ताः।

(१) 'देवदत्तम्' क.

यत्तु तैरुक्तं शानजंशे "कर्त्तरि कृत्" इति व्याकरणं शक्तिग्राहकमस्तीति; तदप्यापाततः, कृद्वाक्यशेषोऽयमनिर्दिष्टार्थेषु ण्वुलादिषूपतिष्ठते न तु शत्रादिषु स्थान्यर्थेन निराकाङ्क्षत्वादिति वक्ष्यमाणत्वात्। आकाङ्क्षितविधानं ज्याय इति न्यायात्। अन्यथा क्रियमाण इति कर्मणि शानचो दौर्लभ्यापत्तेश्च। किञ्च "कर्त्तरि कृत्" इति यत्कर्तृग्रहणं तदेव "लः कर्मणि" इत्यत्राप्यनुवृत्तं, तत्कथं कृतां तिङां च वैलक्षण्यम्? अन्यलभ्यत्वादेरुभयत्र साम्यात्।

यत्तु नामार्थयोरभेद एव संसर्ग इति हि शानजादौ कर्त्ता वाच्य इत्युक्तम्, तत्तु पचतिकल्पं पचतिरूपं देवदत्त इत्याद्यनुरोधात्तिङ्क्ष्वपि तुल्यम्। तस्मात्परीत्या न कश्चिच्छत्रन्तात्तिङन्ते वैषम्यहेतुः। अस्मद्रीत्या तु "भावप्रधानमाख्यातं, सत्त्वप्रधानानि नामानि" इति निरुक्तकारोक्तेः प्रत्ययार्थप्राधान्यमौत्सर्गिकं तिङ्षु त्यज्यते, 'प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात" इति सूत्राच्च। शतृशानज्विधौ रूपविधौ च भाष्येऽपि स्फुटमेतत्। 'पाचको व्रजति' इतिवत् 'पचतिव्रजति' इति प्रयोगोऽप्यत एव नोपपद्यते, पचतोरूपं पचन्ति रूपमित्यादौ रूपबाधन्ते द्विवचनादिकञ्च न भवति। तस्मात्तिङ्षु कृत्सु च विशेषणविशेष्यभावव्यत्यासमात्रमस्तीति वक्ष्यते।

यत्तु भट्टैरुक्तं—कर्त्तरि यदेकत्वं तत्रैकवचनं तिबिति लादिविधेः "द्व्येकयोः" इत्यादेश्चैकवाक्यतया व्याख्यानान्न कर्तुर्वाच्यता सूत्रादायातीति, तदप्यापाततः। द्विवचनादिसंज्ञा ह्यादेशनिष्ठा, ततश्च तद्विधिना "द्व्येकयोः" इत्यस्य एकवाक्यता, न च तत्र कर्त्तरीत्यस्ति, यद् द्वित्वादिविशेषणतया कथञ्चिद्योज्येत। लविधितिबादिविध्योरप्येकवाक्यतास्तीति चेत्? सत्यम्, वाक्यैकवाक्यता सा, न तु पदैकवाक्यता आदेशविधेर्लविधिलभ्यलकारानुवादेन प्रवृत्तेः। लविधौ कर्तृग्रहणम्। स च द्विवचनादिसंज्ञाविनिर्मुक्त एव। अत एव आदेशस्मारिता लकारा बोधका इति पक्षे एकत्वादिभानायाऽऽदेशा एव शरणीकर्तव्याः। एवं णलादौ तिबादिद्वारकं लिडादिस्मरणं कल्प्यमिति महदेव गौरवम्। न च परम्परासम्बन्धेन णलेव बोधकः, वृत्तिशून्यत्वात्। अत एवापभ्रंशानां साधुस्मारकताभ्युपगमस्तवापीति दिक्।

तस्माद् "पूर्वत्रासिद्धम्" इत्यादौ यथा आहार्यारोपेणैव व्याख्यानं सर्वसंमतं तथा शास्त्रीयप्रक्रियायां सर्वत्र।

वस्तुतस्तु वाचकता स्फोटैकनिष्ठा। तत्र चाष्टौ पक्षाः—वर्णस्फोटः १, पदस्फोटः २, वाक्यस्फोटः ३, अखण्डपदस्फोटः ४, तादृग्वाक्यस्फोटः ५, इत्थं पञ्च व्यक्तिस्फोटाः, वर्णपदवाक्यभेदेन त्रिविधो जातिस्फोट इति। तथा हि, किञ्चिद्वर्णव्यत्यासादिना शक्ततावच्छेदकानुपूर्वीभङ्गस्य प्रतिपदमौत्सर्गिकत्वात्तत्र च केनचित्क्वचित्प्रथमं शक्तिग्रहात्केन कस्य स्मारणमित्यत्र विनिगमनाविरहादृषभो वृषभो वृष इत्यादाविव कर् कार् कुर् चकर् इत्यादीनां प्रयोगसमवायिनां सर्वेषामेव वर्णानां तत्तदानुपूर्व्यवच्छिन्नानां वाचकतेति वर्णस्फोटपक्षः। करप्रभृतयो वाचका न वेति चेह विप्रतिपत्तिशरीरम् ॥१॥ 'रामं रामेण रामाय हरये हरौ हरीन्' इत्यादौ परिनिष्ठिते रूपे कियानंशो द्रव्यादिवाचकः कियांश्च कर्मत्वादेरित्यस्य विनिगन्तुमशक्यतया राममित्यादिपरिनिष्ठितं पदमेव वाचकं कर्मत्वादिविशिष्टस्येति पदस्फोटपक्षः ॥ २ ॥ दधीदं, हरेव, विष्णोव, इत्यादावपि विनिगमनाविरहतौल्याद्वाक्यमेव विशिष्टार्थे शक्तमिति वाक्यस्फोटः ॥ ३ ॥ एकः पट इति वदेकं पदं वाक्यं वेत्यबाधितप्रतीतेर्वर्णातिरिक्तमेव पदं वाक्यं वा अखण्डं वर्णव्यङ्ग्यम्। एकत्वप्रतीतिरौपाधिकीति चेत्? पटेऽपि तथात्वापत्तेः ॥ कः पदार्थोऽसाविति चेत्? भावः। भावविशेषेषु क्वान्तर्भवतीति चेत्? त्वत्परिभाषितेषु द्रव्यादिषु मान्तर्भूत्। नह्येतावता प्रमाणसिद्धं प्रत्याख्यातुं शक्यते। अनियतपदार्थवादे गौरवमिति चेत्? व्यक्तीयत्ता तवापि नास्ति। उपाधीयत्ता तु सर्वैः सुवचा। भावत्वाभावत्वाभ्यां नित्यत्वानित्यत्वादिना वा विभजनात्। भावविभाजकोपाधयस्तु घटविभाजकोपाधिवदेवाऽनावश्यकाः। अस्मिंश्च पक्षद्वये वर्णा अप्यनावश्यकाः। नन्वनुभवसिद्धास्ते इति चेत्? व्यञ्जकध्वनिविशेषोपहितस्फोट एव ककाराद्यात्मना व्यवह्रियते इत्यभ्युपगमात्। भाट्टमते तारो मन्दो गकार इतिवत् अद्वैतसिद्धान्ते विषयसंबन्धजन्यवृत्तिवैचित्र्येण व्यङ्ग्ये स्वरूपसुखे वैचित्र्यवच्च। अत एव वाचस्पतिमिश्रास्तत्त्वबिन्दौ "वस्तुतः ककारादतिरिच्यमानमूर्तैर्गकारस्याभावात्" इति स्फोटवादिमतमुपन्यास्थत्। यथा वा अखण्डेष्वपि ऋकारादिषु वर्णेषु वर्णान्तरसमानाकारैकदेशावभासः, तथाऽत्र पक्षे वर्णावभासोऽपि भविष्यति। उक्तं च बोपदेवेन—

> शक्यत्व इव शक्तत्वे जातेर्लाघवमीक्ष्यताम्।
> औपाधिको वा भेदोऽस्तु वर्णानां तारमन्दवत् ॥ इति ॥

भर्तृहरिरप्याह—

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन॥ इति।

तस्मादखण्डं पदं वाक्यं वेति॥ ५॥ पञ्चापि व्यक्तिस्फोटावान्तरभेदाः।

जातिस्फोटवादिनस्तु घोत्तरटत्वादिकं शक्ततावच्छेदकतया आद्यपक्षत्रयेऽपि यथायथं वाच्यम्। अन्यथा सरो रस इत्यादावर्थविशेषप्रतीत्यनापत्तेः। तच्च उपाधिरूपम्। उपाधिश्च परम्परासंबद्धा जातिरेव। सा च सर्वाधिष्ठानब्रह्मस्वरूपात्मिका। तथा च शक्यांश इव शक्तांशेऽपि न्यायसाम्येनाकृत्यधिकरणरीत्या ब्रह्मतत्त्वमेव तत्तदुपहितं वाच्यं वाचकं च। अविद्याविद्यकधर्मविशेषो वा जातिरिति पक्षे तु सैव वाचिकाऽस्त्वित्याहुः॥ ८॥

अष्टावप्येते पक्षाः सिद्धान्तग्रन्थेषु तत्रतत्रोपनिबद्धाः। तथा हि, स्थानिवत्सूत्रे "सर्वे सर्वपदादेशाः" इतिभाष्यग्रन्थः। पद्यतेऽर्थोऽनेनेति अर्थवदिह पदं न तु सुप्तिङन्तमेव। तथाच "एरुः" इत्यस्य तेस्तुरित्यर्थ इति टीकाग्रन्थश्च वर्णस्फोटेऽनुकूलः। तथा स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वमिति स्थानेन्तरतमपरिभाषयैव "तस्थस्थमिपाम्" इत्यादिषु निर्वाहात्तदर्थं यथासंख्यसूत्रं नारब्धव्यमिति भाष्यमपि। पदस्फोटवाक्यस्फोटौ तु इहैव प्रघट्टके "येनोच्चारितेन" इति भाष्यप्रतीकमुपादाय कैयटेन भाष्यार्थतया वर्णितौ। वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वेति वदता तयोरखण्डताप्युक्ता। "नित्येषु शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यम्" इति तत्रतत्र भाष्ये सखण्डतोक्ता।

मायानिश्चलयन्त्रेषु कैतवानृतराशिषु।
अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्॥

इत्यमरः। पस्पशायामेव प्रघट्टकान्तरे "किंपुनः" इत्यादि भाष्यमुपादाय 'केचिद्वर्णस्फोटमपरे पदस्फोटं वाक्यस्फोटं चाहुः' इति वदता कैयटेन "अइउण्" इत्यत्र व्यक्तिस्फोटजातिस्फोटयोर्बलाबलं चिन्तयता प्रत्याहाराह्निकान्ते "अक्षरं न क्षरं विद्यात्" इति भाष्यव्याख्यावसरे व्यवहारनित्यता तु वर्णपदवाक्यस्फोटानां, नित्यत्वं तु जातिस्फोटस्येति प्रतिपादयता, अनुपदमेव ब्रह्मतत्त्वमेव हि शब्दरूपतया प्रतिभातीत्यर्थ इति व्याचक्षाणेन सर्वे पक्षाः सूचिता एव। यदा तु अविद्यैव जातिरिति पक्षस्तदभिप्रायेण जातिस्फोटस्यापि व्यवहारनित्यतेति

"अक्षरं न क्षरं विद्यात्" इत्यस्य कैयटीये पाठान्तरम्। "आद्यन्तौ टकितौ" इतिसूत्रे च भाष्य एव वर्णस्फोटपदस्फोटावुक्तौ। असत्यमेव प्रकृतिप्रत्ययविभागं तदर्थं चाश्रित्य रेखागवयन्यायेन सत्यस्य पदस्फोटस्य व्युत्पादनमभिप्रेतमिति तत्रैव कैयटः। "अर्थवदधातुः" "स्वं रूपं शब्दस्य" "तपरस्तत्कालस्य" इत्यादिसूत्रेष्वपि स्पष्टमिदं भाष्यकैयटादावित्यलं बहुना। जातेश्च ब्रह्मात्मकत्वमुक्तं हरिणा—

सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिषु।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः॥
तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः॥ इति।

जातेः स्फोटत्वमपि प्रघट्टकान्तरे स एवाह—

अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता।
कैश्चिद्व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः॥ इति।

यद्यपीहाष्टौ पक्षा उक्तास्तथापि वाक्यस्फोटपक्षे तात्पर्यं ग्रन्थकृताम्। तत्रापि जातिस्फोटे इत्यवधेयम्, पूर्वपूर्वोपमर्देनैवोत्तरोत्तरोपन्यासात्। तथाच प्रथमव्युत्पत्तेर्व्यवहाराधीनतया संपूर्णस्य वाक्यस्य विशिष्टे प्राथमिकः शक्तिग्रह इति निर्विवादम्। स चावापोद्वापाभ्यामवयवानां शक्तिरिति न्यायोपष्टम्भेन त्यज्यत इति दर्शनान्तराणां पन्थाः। एकादेशादिस्थले उक्तरीत्या विनिगमनाविरहेण कैश्चित्पररूपादिस्थले पूर्वलोपाद्यभ्युपगमेन च व्याकरणानां कलहे सति अवयवशक्तेर्दुरुपपादतया प्राथमिकशक्तिग्रह एव प्रमारूप इति तु सैद्धान्तिकः पन्थाः। उक्तं च हरिणा—

तत्र यन्मुख्यमेकेषां तत्रैतेषां विपर्ययः॥ इति।
ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले।
देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः॥ इति च।

एवंस्थिते निपाता द्योतका विकरणा अनर्थका इत्यादिविचारोऽपि प्रक्रियादशायामेव। आह च—

अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पनम्।
धातूपसर्गयोः शास्त्रे धातुरेव तु तादृशः॥ इति।

तादृशोऽखण्ड इत्यर्थः। एवञ्च 'नामार्थयोरभेद एव संसर्गः' 'प्रत्ययार्थः प्रधानम्' इत्यादिव्युत्पत्तयोऽपि प्रक्रियाश्रया एव। उक्तं च—

किंगर्भजन्ये किंगर्भःकीदृग्भातीति नो मते।
विचारः फलितः सर्वः प्रकृतिप्रत्ययाश्रयः॥ इति।

आरोपितस्यापि पारमार्थिके उपायता न विरुद्धा। लिपिस्थूलारुन्धतीशाखाचन्द्रादीनां लौकिकदृष्टान्तानामर्थवादवाक्यपञ्चकोशावेतरणादीनां तन्त्रान्तरसिद्धानां पूर्वत्रासिद्धादीनां चैतच्छास्त्रसिद्धानां प्रागेव दर्शितत्वात्। तदेवं पक्षभेदेन अविद्यैव ब्रह्मैव वा स्फुटत्यर्थोऽस्मादिति व्युत्पत्त्या स्फोट इति स्थितम्। आह च—

शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते। इति।

समारम्भस्तु भावानामनादि ब्रह्म शाश्वतम्। इति च।

तदेवं वराटिकान्वेषणाय प्रवृत्तश्चिन्तामणिं लब्धवानिति वासिष्ठरामायणोक्ताभाणकन्यायेन शब्दविचाराय प्रवृत्तः सन् प्रसङ्गादद्वैते औपनिषदे ब्रह्मण्यपि व्युत्पद्यतामित्यभिप्रायेण भगवान्भर्तृहरिर्विवर्तवादादिकमपि प्रसङ्गाद् व्युदपादयत्, तत्तु तन्त्रान्तरे स्फुटं प्रकृते नातीवोपयुक्तं चेति नेह तन्यते।

इति स्फोटस्वरूपव्युत्पादनम्॥

स्यादेतत्, चं लिख चकारस्त्रुटित इत्यादिव्यवहाराल्लिपावेव शब्दभ्रमवतां तत्रैव वाचकत्वाभिमानजुषां बालानां पुस्तकमुपयुज्यते यथा, तथैव भेदग्रहवतामपीति वस्तुस्थितिः। एवमिहापि प्रकृत्यादिविभागे पारमार्थिकत्वाभिमानवतामपि उपयुज्यते एव शास्त्रं तत्किमर्थं कल्पनाव्युत्पादनक्लेशः। अत एव हि भाष्यकारोऽपि शब्दो नित्योऽनित्यो वेति विकल्प्य उभयथापि व्याकरणारम्भस्य निष्प्रत्यूहत्वाद्यथातथास्त्वित्युदासिष्यतेति चेत्? सत्यं, व्युत्पत्त्यर्थं वस्तुस्थितिः कथिता। पक्षभेदेषु हि गौणमुख्येषु व्युत्पादितेषु तत्र परस्परविरुद्धतया भासमाना अपि सिद्धान्तग्रन्था व्यवस्थापयितुं शक्यन्ते। स्वार्थद्रव्यादीनां पञ्चानां क्रमेण भानमित्यादिवक्ष्यमाणमपि कल्पनयैवोपपादयितुं शक्ष्यते इति दिक्।

नन्वस्तु साधुशब्दो विषयः, अस्तु च प्रकृतिप्रत्ययादिकल्पनया तद्व्युत्पादनोपपत्तिः, तथापि व्याकरणाध्ययनस्यानुष्ठापकं किमिति चेत्? नित्याध्ययनविधिरिति गृहाण। श्रूयते हि "ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति। निष्कारणो दृष्टकारणनिरपेक्षो नित्य इति यावत्। कार्यतेऽनुष्ठाप्यतेऽनेनेति कारणं फलम्। ब्राह्मणेन षडङ्गो वेदोऽध्येयो ज्ञेयश्चेत्यन्वयः। तथाच साङ्गवेदाध्ययनतदर्थज्ञानरूपोऽयं धर्मो नित्यः सन्ध्योपासनादिवदित्यर्थः। श्रुतिरेवेति हरदत्तादयः। स्मृतिरिति तु भट्टाचार्याः। तत्र यदि स्मृतिरेवेति प्रामाणिकं तर्हि "आगमः खल्वपि" इति भाष्येप्यागममूलकत्वादागमः

स्मृतिरेवेति व्याख्येयम् । अङ्गत्वं चाङ्गत्वेन संस्तवात् । उक्तं हि शिक्षायाम्—

मुखं व्याकरणं तस्य ज्योतिषं नेत्रमुच्यते ।
निरुक्तं श्रोत्रमुद्दिष्टं छन्दसां विचितिः पदे ॥
शिक्षा घ्राणं तु वेदस्य हस्तौ कल्पान्प्रचक्षते ॥ इति ।

उपकारकतयाऽप्यङ्गत्वम् । व्याकरणं हि अर्थविशेषमाश्रित्य स्वरविशेषादीन् विदधत् पदार्थविशेषनिर्णये उपयुज्यते । ज्योतिषमपि स्वाध्यायोपयोगिनमनुष्ठानोपयोगिनं च कालविशेषं प्रतिपादयति । निरुक्तं तु व्याकरणस्यैव परिशिष्टप्रायं बाहुलकादिसाध्यानां लोपागमविकारादीनां प्रायशस्तत्र सङ्ग्रहात् । छन्दोविचितिरपि गायत्र्यादिलक्षणद्वारा गायत्र्या यजतीत्यादिविध्यर्थनिर्णये उपयुज्यते । शिक्षापि वर्णोच्चारणप्रकारं दर्शयति । कल्पसूत्राण्यपि प्रकरणान्तरपठितस्य न्यायलभ्यस्य शाखान्तराधीतस्य चाङ्गजातस्योपसंहारेण प्रयोगं दर्शयन्ति । तस्मात्षडङ्गानि । तेष्वपि प्रधानं व्याकरणम्, पदपदार्थावगमस्य व्याकरणाधीनत्वात्; वाक्यार्थज्ञानस्य तन्मूलकत्वात् । अत एव तस्य शिक्षायां मुखत्वेन निरूपणं कृतम् । मन्वादिस्मृतिष्वपि अङ्गाध्ययनविधयः प्रसिद्धा एव । तथा चाध्ययनविधिर्व्याकरणाध्ययनस्यानुष्ठापक इति स्थितम् । तथाच सन्ध्योपासनादेरभावे प्रत्यवायोऽनुष्ठाने च पापक्षय इति यथाभ्युपेयते तथा व्याकरणाध्ययनस्याप्यननुष्ठाने अनुष्ठाने च बोध्यम् ।

रक्षाप्रभृतीनि फलान्तराण्यपि सन्ति । तथा च भाष्यम्—"कानि पुनरस्य प्रयोजनानि । रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" इति । अत्र प्रयुज्यते प्रवर्त्यतेऽनेनेति करणल्युडन्तः प्रयोजयतीति कर्तृव्युत्पत्त्या बाहुलकात्कर्तृल्युडन्तो वा, उभयथापि प्रवर्त्तकविधिपरः पुल्लिङ्गः प्रयोजनशब्द एकः । फलपरः क्लीबोऽपरः । उभयोः "नपुंसकम्" इति नपुंसकैकशेषे एकवद्भावस्य वैकल्पिकतया प्रश्ने बहुवचनमुत्तरे एकवचनं च बोध्यम् । तत्र आगमः प्रवर्त्तकः, रक्षोहलाघवासन्देहास्तु फलानीति विवेकः । तत्र प्रवर्त्तक आगमो व्याख्यातः । फलानि व्याख्यायन्ते ।

तत्र रक्षा वेदसंरक्षणम् । तथाहि, भाषायामदृष्टा लोपागमवर्णविकाराश्छन्दसि दृश्यन्ते । ते केवलप्रयोगशरणैः प्रामादिकाः सम्भाव्येरन् । वैयाकरणस्तु लक्षणदर्शी तदेव रूपं स्थापयति ।

तत्र लोपोदाहरणम्—त्मना देवेषु विविदे मितद्रुः । त्मना आत्म-

नेत्यर्थः। "मन्त्रेष्वाङ्यादेरात्मनः" इत्याकारलोपः।

आगमो यथा—देवासः, ब्राह्मणासः। "आज्जसेरसुक्" इत्यसुगागमः।

लोपागमौ यथा—देवा अदुह्र। अदुहतेत्यर्थः। दुहेर्लङो झस्यादादेशे कृते "लोपस्त आत्मनेपदेषु" इति तलोपः, "बहुलं छन्दसि" इति रुडागमः। एतेन 'नाशिरं दुह्रे' 'विश्वा इत्ते' 'धेनवो दुह्रे' इत्यादिलडन्तमपि व्याख्यातम्।

वर्णविकारो यथा—गृभ्णामि ते सौभगत्वाय। "हृग्रहोर्भश्छन्दसि" "हस्येति वक्तव्यम्" इति भकारः।

प्रत्ययोऽपि छान्दसोऽस्ति। यथा—उद्ग्राभं च निग्राभं चेति। "उदि ग्रह" इतिसूत्रे "उद्ग्राभनिग्राभौ च च्छन्दसि स्रुगुद्यमननिपातनयोः" इति वचनादुन्निपूर्वाद्ग्रहेर्घञ्। तत्र उत्पूर्वात्सूत्रेण लोकेऽपि सिद्धो घञ्। निपूर्वात्तु वार्तिकोक्तश्छन्दस्येव। सन्निवेशविशेषयुक्ताः पात्रविशेषाः स्रुचः। इह तु जुहूपभृतोरेव ग्रहणम् "उद्ग्राभं चेति जुहूमुद्यच्छति, निग्राभञ्चेत्युपभृतं नियच्छति" इति वचनात्। भकारादेशः प्राग्वत्।

ऊहोऽपि प्रयोजनम्। तथाहि, यत्राङ्गजातं सम्पूर्णमुपदिष्टं सा प्रकृतिः। यथा—दर्शपूर्णमासौ। यत्र नोपदिष्टं सा विकृतिः यथा—"सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः" इति विहितो यागः। अत्र वैकृतस्य विधेर्विषयभूतायां भावनायां करणीभूते यागे उपकारकाकाङ्क्षायां तन्मुखेन प्राकृतमङ्गजातं प्राप्यते। वैदिके करणे तादृशानामेवाङ्गानामपेक्षितत्वात्। तेषामेव प्रकृतौ क्लृप्तसामर्थ्यात्। तद्विशेषस्य चैकदेवतात्वादिना शक्यज्ञानत्वात्। तस्मात् "प्रकृतिवद्विकृतिः कर्त्तव्या" इति पूर्वमीमांसायां स्थितम्। तत्र यस्याङ्गस्य प्रकृतौ य उपकारः क्लृप्तस्तस्य विकृतावसंभवे निवृत्तिः। यथा प्रकृताववघातस्य वैतुष्यमुपकारतया क्लृप्तं तस्य कृष्णलेष्वसंभवादवघातस्य निवृत्तिः। मन्त्रा अप्यङ्गम्। तेषां चानुष्ठेयार्थप्रकाशनं कार्यम्। तत्र प्रकृतौ यस्य मन्त्रस्य यदभिधेयं तच्चेद्विकृतौ साकल्येन नास्ति तदा कृत्स्नस्य मन्त्रस्य निवृत्तिः। यथा—"अवरक्षो दिवः सपत्नं वध्यासम्" इत्यवघातमन्त्रस्य कृष्णलेषु। यस्य त्वेकदेशस्याभिधेयं नास्ति तस्य तावन्मात्रं निवर्तते। यथा—"अग्नये त्वा जुष्टं निर्वपामि" इत्यस्य मन्त्रस्यावयवभूतं देवताभिधायि पदमौषधद्रव्यकत्वेन एकदेवताकत्वेन चाग्नेयविकारभूते सौर्ये निवर्त्तते अग्निशब्दे च लुप्तद्वारकतया निवर्तमाने एकारोऽपि निवर्त्तते। अकारान्तेतरप्रकृतिसन्निधानेनैव हि एकारस्य सम्प्रदानं वाच्यम्, अकारान्तात्तु यशब्दस्य। ततश्चतुर्थ्यन्तसूर्यायेत्याद्युदात्तमग्नय इत्यस्य मध्योदात्त-

स्थ स्थाने ऊह्यम्। सोऽयं प्रकृत्यूहः।

लिङ्गस्य क्वचिदूहः। यथा–"देवीरापः शुद्धाः स्थ" इत्यप्सु विनियुक्तो मन्त्रः। तस्याज्ये ऊहः देवाज्यशुद्धमसीति।

प्रत्ययमात्रस्य क्वचिदूहः। यथा–"मा भेर्मा संविक्थाः" इति पुरोडाशेऽवदानमन्त्रः। तस्य धानासूहः–"माभैष्ट मा संविजिध्वम्" इत्यादिरिति हरदत्तादयः। याज्ञिकास्तु संविग्ध्वमित्यूहमाहुः। युक्तं चैतत्, प्रकृतावनिट्कतया "विजिर् पृथग्भावे" इत्यस्य प्रयोगो न तु "ओविजी भयचलनयोः" इत्यस्येत्यवधारणात्।

लाघवमपि प्रयोजनम्। तथाहि; अध्यापनं ब्राह्मणस्य वृत्तिः। तन्निर्वाहश्च वैदुष्याधीनः। वैदुष्यं च साध्वसाधुविवेकः। स च न प्रतिपदपाठादिना सम्भवति, शब्दानामानन्त्यात्। तस्मादुत्सर्गापवादरूपलक्षणद्वारा तद्बोधने लाघवम्। अन्यथा तु गौरवम्।

असन्देहोऽपि प्रयोजनम्। तथाहि, "स्थूलपृषतीमनड्वाहीमालभेत" इति श्रूयते। तत्र सन्देहः—कर्मधारयोऽयं बहुव्रीहिर्वेति। तत्र कर्मधारयपक्षे पृषतीशब्देन मत्वर्थलक्षणया पृषत्वती विन्दुमती गौरेवाभिधीयते, स्थूलापि सैव, विन्दूनां स्थौल्यं तानवं वा यथा तथाऽस्तु। बहुव्रीहौ तु स्थौल्यं पृषत्स्वेवेति। गौस्तु स्थूला कृशा वेत्यत्रानादरः। तत्र लकाराकारे उदात्तत्वं दृष्ट्वा पूर्वपदप्रकृतिस्वरेण बहुव्रीहिं वैयाकरणो निश्चिनोति। ततश्च निश्चयेन प्रतिबन्धात्संशयानुत्पादः। स एवासन्देहः। अर्थाभावेऽव्ययीभावादसन्देहामिति स्यादिति चेत्? न, पर्यायेणाव्ययीभावतत्पुरुषसंज्ञाद्वयमपीह भवतीति द्वितीये उपपादयिष्यमाणत्वात्। अत एवोभयथा मुनिप्रयोगः—अद्भुतायामसंहितमिति, अथासंहितयेति च। एवं "इन्द्रपीतस्योपहूतो भक्षयामि" इत्यादावपि स्वरेणैव बहुव्रीहिनिर्णये इन्द्रपीताधिकरणमवैयाकरणान्प्रति सार्थकम्। कृत्वाचिन्तान्यायेन वा नेयमिति दिक्।

तदेवं रक्षोहलाघवासन्देहाख्यानि चत्वारि फलानि व्याख्यातानि। आगमस्तु प्रवर्तक इत्युक्तम्। भाष्ये तु सन्दर्भशुद्ध्यर्थं फलचतुष्टयस्य प्राक् पश्चाद्वा प्रवर्त्तके वक्तव्ये मध्ये तदुक्त्या फलसन्दंशेन नित्यानामपि फलपर्यवसानमस्तीति सूचितम्। फलं तु पापक्षयः प्रत्यवायानुत्पत्तिर्वा, "धर्मेण पापमपनुदति"—

> विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।
> अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति॥

इत्यादिवचनानीह साधकानीति दिक्।

"इमानि च भूयः" इत्यादिभाष्येण प्रवर्त्तकवचनान्तराणि उदाहृत्य व्याख्यातानि। तद्यथा— "तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुस्तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः" इति ब्राह्मणम्। अत्र न म्लेच्छितवै एतस्य विवरणं नापभाषितवै इति। उभयत्रापि "कृत्यार्थे तवैकेन्केन्यत्वनः" इति तवैप्रत्ययः। धातूनामनेकार्थतया निन्दावचनान्म्लेच्छधातोः कर्मणि घञ्। तेनापशब्दसामानाधिकरण्यं न विरुध्यते। अत्र 'न म्लेच्छितव्यम्' इति निषेधस्य "तेऽसुराः" इत्यर्थवादः। न चेह रात्रिसत्रन्यायेन आर्थवादिकं फलमस्त्विति वाच्यं, "द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्" इति न्यायेन अपापश्लोकश्रवणवत्प्राशस्त्यमात्रपरत्वात्। प्रकरणात्क्रत्वङ्गो ह्ययं निषेध इति "यर्वाणस्तर्वाणो नाम" इत्यादावुत्तरग्रन्थे भाष्यकारैरेव स्फुटीकरिष्यते। अत एव इहापि पराभूता मा भूमेत्यध्येयं व्याकरणमिति नोपसंहृतं, किन्तु म्लेच्छा मा भूमेत्येव। म्लेच्छा निन्द्याः, शास्त्रबोधितविपरीतानुष्ठानादिति भावः। अत्र "हैहेप्रयोगे हैहयोः" इति प्लुते प्लुतत्वप्रयुक्ते प्रकृतिभावे च कर्त्तव्ये तदकरणं म्लेच्छनमित्येके। ननु "सर्वः प्लुतः साहसमनिच्छता विभाषा कर्त्तव्यः" इति भाष्यकृता वक्ष्यमाणत्वान्नैष दोष इति चेत्? सत्यम्, अत एवापरितोषाद् 'वाक्यद्विर्वचनं म्लेच्छनम्' इत्यपरैर्व्याख्यातम्। "सर्वस्य द्वे" इत्यत्र पदग्रहणस्य चोदितत्वादिति तेषां भावः।

ननु नेदं शास्त्रीयं द्विर्वचनं किन्तु तात्पर्यद्योतनार्थमैच्छिकः पुनः प्रयोगः 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्' इतिवदिति चेत्? तर्ह्याम्रेडितस्वरानुपपत्तिः। यदि तु तत्राम्रेडितस्वरविनिर्मुक्त एव पाठस्तर्हि अरिशब्दे रेफस्य लत्वमपशब्द इत्यवधेयम्। इदं च भाष्यादिषु प्रसिद्धं श्रुतिपाठमनुसृत्य व्याख्यातम्। अयं च पाठः क्वचिच्छाखायामन्वेषणीयः। माध्यन्दिनानां शतपथब्राह्मणे तु "हेलवो हेलव इति वदतः" इति पठित्वा "तस्माद् ब्राह्मणो न म्लेच्छेत्" इति पठ्यते। तत्र यकारस्थाने वकारोऽपशब्द इति स्पष्टमेव।

तथा शिक्षासु पठ्यते—

> मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
> स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोपराधात्॥ इति।

स्वरेण स्वरतः "हीयमानपापयोगाच्च" इति तसिः। मिथ्याप्रयुक्तः यदर्थप्रतिपादनाय प्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात्प्रतिपादयन्

अत एव तमर्थं नाहेत्यर्थः । वागेव वज्रः हिंसकत्वात् । यजमानं हिनस्तीति । यथाध्वर्युकृताद्धोमाद्यजमाने धर्मोत्पत्तिः एवमध्वर्युकृतादपशब्दप्रयोगाद्यजमाने प्रत्यवाय इत्यर्थः । यथेत्युदाहरणे । इन्द्रशत्रुः इन्द्रशत्रुशब्दः । पुरा किल विश्वरूपाख्ये त्वष्टुः पुत्रे इन्द्रेण हते सति कुपितस्त्वष्टा इन्द्रस्य हन्तारं वृत्राख्यं पुत्रान्तरमुत्पिपादयिषुराभिचारिकं यागं कृतवान् । तत्र च इन्द्रस्य शातयिता शत्रुः हिंसक इति यावत् तथाभूतः सन् वर्धस्वेति प्रतिपादितुं 'इन्द्रशत्रुर्वर्धस्व' इति प्रयुक्तम् । ण्यन्ताच्छदेरौणादिकः क्रुन्प्रत्ययः । प्रज्ञादिगणे निपातनाद् ह्रस्वः। इन्द्रशत्रुत्वस्य विधेयत्वान्न सम्बोधनविभक्तिः तस्या अनुवाद्यविषयकत्वात् । अत एव राजन् युध्यस्व राजा भव युध्यस्वेत्यनयोर्व्यवस्थयैव प्रयोगः । राजत्वस्य सिद्धत्वे सम्बोधनविभक्तिर्न तु विधेयत्वेऽपीति । एवं स्थिते इन्द्रशत्रुशब्दे तत्पुरुषसमासप्रयुक्तेऽन्तोदात्ते वक्तव्ये प्रमादादाद्युदात्तः किलोक्तः । तथाच पूर्वपदप्रकृतिस्वरेण बहुव्रीह्यर्थो लब्धः । इन्देर्हि धातोरौणादिके "ऋज्रेन्द्र" इत्यादिना रन्प्रत्यये कृते इन्द्रशब्द आद्युदात्तो व्युत्पादितः । तेनेन्द्र एवास्य हिंसकः सम्पन्न इति श्रुतीतिहासपुराणादिषु प्रसिद्धम् । तदिहोदाहरणतयोक्तम् ।

स्यादेतत्, "यज्ञकर्मणि" इत्येकश्रुत्येह भवितव्यम् । सा च तत्पुरुषबहुव्रीह्योराविशिष्टेति । अत्राहुः–जपादिपर्युदासेन मन्त्रेष्वेव एकश्रुतिर्विधीयते । स्वेच्छया प्रयुज्यमानश्च मन्त्रो न भवति । तदुक्तं भेदलक्षणे जैमिनिना—"अनाम्नातेष्वमन्त्रत्वम्" इति । आपस्तम्बश्चाह–अनाम्नाता अमन्त्रा यथा प्रवरोहनामधेयग्रहणानि" इति । अत एव "मन्त्रो हीनः" इति पाठस्य शिक्षायां प्रसिद्धत्वेऽपि ऊह्यमानस्यामन्त्रतया यथेन्द्रशत्रुरिति वाक्यशेषोऽसङ्गतः स्यादतो मन्त्रशब्दः शब्दमात्रपर इत्याशयेन भाष्ये "दुष्टः शब्दः" इति पठितम् । ननु स्वाहेन्द्रशत्रुर्वर्द्धस्वेति वेदे पठ्यत एवेति ? सत्यम्, ऊहितं यदमन्त्रभूतम् अनुकार्यं तदनुकरणस्य पाठेऽपि अर्थपरस्यानुकार्यस्य लौकिकत्वानपायात् । नन्विन्द्रशत्रुशब्दस्य लौकिकत्वे कथं स्वरप्रयुक्तयोर्गुणदोषयोः प्रसक्तिः स्वरस्य वेदमात्रविषयकत्वादिति चेत् ? न, स्वरविधौ छन्दोधिकाराभावात् । एतावानेव हि भेदः—यच्छन्दसि त्रैस्वर्यमेकश्रुतिश्च व्यवस्थयाऽऽश्रीयते, लोके त्वैच्छिको विकल्पः । अत एव एकश्रुत्या सूत्रपाठस्त्रैस्वर्येण वेति पक्षद्वयमपि तत्रतत्रोपन्यस्तमिति वक्ष्यामः ।

नन्वेवं "उच्चैस्तरांवा" इतिसूत्राद्विकल्पानुवृत्त्यैव सिद्धौ "विभाषाछन्दसि" इत्यत्र विभाषाग्रहो व्यर्थः स्यात् । प्रसज्यप्रतिषेधे तु नायं

दोषः। यज्ञकर्मणीत्यस्य निवृत्तये पुनर्विभाषाग्रहणात्। न च पर्युदास-पक्षेऽप्येवमेवास्त्विति वाच्यं, नित्याविकल्पविध्योर्विषयभेदस्यावश्य-कतया आरम्भसामर्थ्यादेव तन्निवृत्तिसिद्धेः। प्रसज्यप्रतिषेधे तु नार-म्भसामर्थ्यं, ऊहादिष्वमन्त्रेषु चरितार्थस्य पूर्वविधेरुत्तरेण छन्दोमात्र-विषयकेण बाधसम्भवात्। न ह्यूहादीनां छन्दस्त्वमस्ति, मन्त्रब्राह्म-णेतरत्वात। तस्मादसमर्थसमासमाश्रित्यापि प्रसज्यप्रतिषेध एवाग-त्या स्वीकर्त्तुमुचित इति चेत्? न, पर्युदासपक्षेऽपि मन्त्रे नित्यं ब्रा-ह्मणे वेति विषयविभागसंभवेन यज्ञकर्मनिवृत्तये विभाषाग्रहणसम्भ-वात्। उक्तापरितोषादेव तु केचिज्जपादिषु प्रसज्यप्रतिषेधमाश्रित्य इहाप्येकश्रुतेः प्राप्तौ सत्यां तदकरणं बहुव्रीहिस्वरकरणं च स्वरतोऽप-राधादित्यस्यार्थ इत्याहुः।

श्रूयते च—

यदधीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्॥

निगदेन पाठमात्रेण। शुष्कैध इति सान्तेन क्लीबेन एधस्शब्देन अकारान्तेन वा पुल्लिङ्गेन निर्वाह्यम्। न ज्वलति न प्रकाशते निष्फलं भवतीत्यर्थः। निरुक्ते तु—"अथापि ज्ञानप्रशंसा भवत्यज्ञाननिन्दा च" इत्युपक्रम्य—

"स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा॥"

इति मन्त्रमुदाहृत्य "यद्गृहीतमविज्ञातम्" इत्यादि पठितम्। तत्रा-पि गृहीतं शब्दतः, अविज्ञातं तु अर्थतः प्रकृतिप्रत्ययादिविभागेन वेत्यादि; शेषं प्राग्वत्।

अन्यत्रापि श्रूयते—"एकः शब्दः सम्यक् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवति" इति। एतच्च "एकः पूर्वपरयोः" इति सूत्रे भाष्यकृद्वक्ष्यति। एतन्मूलकमेव कात्यायनप्रणीतेषु भ्राजाख्येषु श्लोकेषु स्मर्यते—

यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद्व्यवहारकाले।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः॥इति।

दुष्यति चापशब्दैरित्यत्र अवैयाकरणः कर्त्ता सामर्थ्याद् बोध्यः।

तथा—

अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः।
कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत्॥

अयमहमित्यस्य "अनुकरणं चानितिपरम्" इति गतिसंज्ञा। ततो गतिसमासेऽपि 'अस्यवामीयम्' इत्यादाविवानुकरणत्वादेव विभक्तेर्लुङ् न।

याज्ञिकाः पठन्ति प्रयाजाः सविभक्तिकाः कार्या इति ॥ यद्यपि प्रकृतौ प्रयाजमन्त्राः सविभक्तिका एव पठ्यन्ते, तथापि यदि आधानादनन्तरं यजमान उदरव्यथावान् स्याद्यदि वा संवत्सरमध्ये तस्य महती विपत्स्यात्तदा नैमित्तिकीं पुनराधेयेष्टिं विधाय तत्रेदमाम्नातं—"प्रयाजाः सविभक्तिकाः" इति। तत्र केवलविभक्तेः प्रयोगानर्हत्वात्प्रकृतिराक्षिप्यते। सा चाग्निशब्दरूपा न तु या काचित्। निरुक्ते देवताकाण्डे—"अथ किंदेवताः प्रयाजानुयाजाः" इति प्रश्नमवतार्य मन्त्रवर्णादीनुदाहृत्य "आग्नेया इति तु स्थितिः" इत्युपसंहारात्। तस्मादादितश्चतुर्षु प्रयाजेषु चतस्रो विभक्तयोऽग्निशब्दप्रकृतिकाः पठ्यन्ते इत्यादि श्रौतग्रन्थेषु द्रष्टव्यम्।

तथान्यत्रापि "यो वा इमां पदशः स्वरशोऽक्षरशो वाचं विदधाति स आर्त्विजीनः" इति। पदंपदमिति "संख्यैकवचनाच्च वीप्सायाम्" इति शस्। स्वर उदात्तादिः। अक्षरं व्यञ्जनसहितोऽच्। ऋत्विजमर्हतीत्यार्त्विजीनो यजमानः, ऋत्विक्कर्मार्हतीत्यार्त्विजीनो याजकः, "यज्ञर्त्विग्भ्यां घखञौ" इतिसूत्रेण "यज्ञर्त्विग्भ्यां तत्कर्मार्हतीति चोपसंख्यानम्" इतिवार्त्तिकेन च खञ्। यजने याजने च विदुष एवाधिकार इति भावः।

ऋग्वेदेऽपि बहवो मन्त्रवर्णाः—चत्वारिशृङ्गा, चत्वारिवाक्, उतत्वः पश्यन्, सक्तुमिव, इत्यादयः। "तितउ परिपवनं भवति" इति भाष्यम्। "चालनी तितउः पुमान्" इति तु अमरस्य प्रमाद इत्येके। वस्तुतस्तु-ऋभाष्यानुरोधादमरग्रन्थे पुंस्त्वायोगमात्रं व्यवच्छेद्यं न त्वन्ययोगोऽपि। तथा च पुंनपुंसकवर्गे—"स्याद्वास्तु हिंगु तितउ" इति त्रिकाण्डशेषः। अत एव 'तितउमाचष्टे तितापयति' इत्यभियुक्तग्रन्था अपि संगच्छन्ते इति दिक्।

याज्ञिकाः पठन्ति—"आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत्" इति।

तथा—दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्याद्घोषवदाद्यन्तरन्तस्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितं तद्धि प्रतिष्ठिततमं भवति द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितमिति। नामकरणे अधिकारिणः पितुर्ये त्रयः पुरुषास्ताननु कायति अभिधत्ते इति त्रिपुरुषा-

नूकम्। "अन्येषामपि दृश्यते" इति दीर्घः। त्रिपुरुषेत्यत्र पात्रादित्वा-त्स्त्रीत्वाभावः, मूलविभुजादित्वात्कः। यत्तु उपपदाविवक्षया "आत-श्चोपसर्गे" इति कं कृत्वा ततः षष्ठीतत्पुरुष इति, तत्तु "कर्मण्यण्" इति-सूत्रे "अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन" इति वार्त्तिकस्य न-दीसूत्रे स्त्रथाख्याविति मूलविभुजादित्वात्क इति भाष्यस्य च अननुगु-णम्। अत एव गङ्गाधरादिशब्दानां संज्ञाशब्दत्वमिति प्राञ्चः। वस्तु-तस्तु प्रथमं कर्माविवक्षायामनूकपदं व्युत्पाद्य पश्चात्कर्मसम्बन्धेऽप्य-दोषः। वार्त्तिकादिकं तु प्रथममेव कर्मविवक्षामभिप्रेत्य। अन्यथा कृत-पूर्व्यादिषु का गतिः? अत एव "शक्यं च क्षुदुपहन्तुम्" इति भाष्यव्या-ख्यायां बहिरङ्गस्त्रीत्वप्रतीत्या अन्तरङ्गः पदसंस्कारो न विहन्यते इति कैयटोपि वक्ष्यति। विवक्षा च लोकप्रसिद्ध्यनुसारिणी न तु स्वायत्तेति "विपराभ्यांजेः" इत्यादावपि पूर्वं धातुः साधनेन युज्यत इति पक्षमुपष्ट-भ्य विजयतीत्यादि नापादनीयमिति दिक्।

तथा च ऋग्वेदे एव पठ्यते—"सुदेवो असि वरुण यस्य ते सप्त सिन्धवः। अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव" इति। अस्यार्थः—हे वरुण! सत्यदेवोऽसि। यस्य ते काकुदं तालु काकुर्जिह्वा सा उद्यते उत्क्षिप्यतेऽस्मिन्निति काकुदम्। वदेरुत्क्षेपणमर्थो धातूनामनेकार्थत्वा-त्। ततो घञर्थे कविधानमित्यधिकरणे कः, सम्प्रसारणं, षष्ठीतत्पुरुषे शकन्ध्वादित्वात्पररूपम्। तुद प्रेरणे इत्यस्मादधिकरणे कः पृषोदरा-दित्वान्नुशब्दस्य लोप इत्यन्ये। निरुक्तस्वरसोऽप्येवम्। सप्तसिन्धव इव सिन्धवो विभक्तयः। अनुक्षरन्ति तालु प्राप्य प्रकाशन्ते इत्यर्थः। अत्र दृष्टान्तः—यथा सच्छिद्रां लोहमयीं प्रतिमां प्रविश्याग्निः प्रकाशते तथेति। अग्निर्हि तत्रत्यं मलं भस्मीकृत्य प्रतिमां शुद्धां करोति तथा विभक्तयोऽपि शारीरं पापमपाकुर्वन्तीति भावः। सूर्मी स्थूणाऽयःप्रति-मेत्यमरः। स्मर्यते च—

सूर्मीं ज्वलन्तीमालिङ्गन्मृत्यवे गुरुतल्पगः। इति।

"अमि पूर्वः" इत्यत्र "वा छन्दसि" इत्यनुवृत्तेर्यणादेशः। सुषिरामि-त्यत्रार्शआद्यच् अभेदोपचारो वेत्याहुः। वस्तुतस्तु "ऊषसुषिमुष्कमधो-रः" इति मत्वर्थीयो रप्रत्ययः। "रन्ध्रं श्वभ्रं वपा सुषिः" इत्यमरः "सरन्ध्रे सुषिरं त्रिषु" इति च। सुष्ठु स्यतीति सुषिरिति क्षीरस्वामी।

गर्ते गर्तान्विते वाद्ये विशेषे सुषिरं त्रिषु।

इति शाश्वतः॥

इति प्रयोजनप्रपञ्चः॥

इत्येवं विषयप्रयोजनयोरुक्तयोः सम्बन्धाधिकारिणावुक्तप्रायावेवेति पृथङ्नोक्तौ ।

इह येन प्रयोजनं पृष्टं ततोऽन्य एव तटस्थ इत्थं प्रत्यवतिष्ठते । ननु यथा 'अधीष्व' इत्याचार्येणोक्ते प्रयोजनप्रश्नमकृत्वैव वेदमधीयते, तद्वदङ्गभूतं व्याकरणमप्यध्येष्यन्ते तत्किं प्रयोजनवर्णनक्लेशेनेति ? अत्रेदमुत्तरम्, प्रायेणेदानीन्तनानामल्पायुष्कत्वाद्विघ्नबहुलत्वाच्च प्रधानभूतो वेदस्तावत्पाठ्यते । तदध्ययनकाले च बाल्यात्प्रयोजनादिकं प्रष्टुमसमर्थाः शिष्या गुरुणा उपदिश्यमानं वेदं गृह्णन्तीति युक्तम् । ततो गृहीतवेदाः प्रौढिमापन्ना विवाहार्थं त्वरमाणा व्याकरणाध्ययनाय गुरुणा प्रेर्यमाणा अपि न सहसा प्रवर्त्तन्ते । "वेदान्नो वैदिकाः शब्दाः सिद्धा लोकाच्च लौकिकाः, अनर्थकं व्याकरणम्" इति प्रत्यवतिष्ठन्ते । तान्प्रति युक्तमेव प्रयोजनादिवर्णनम् । पूर्वकल्पेषु व्याकरणशिक्षादीनि लक्षणानि प्रथमं पाठयित्वा तत्तल्लक्षणानुसन्धापनपूर्वकं लक्ष्यभूतं वेदं ग्राहयन्तः स्थिताः । तदा परं बाल्यावस्थायां व्याकरणपाठात्प्रयोजनप्रश्नविरहे तत्प्रतिपादनमपि न कर्त्तव्यमेवेति । यद्यपि—

श्रावण्यां प्रौष्ठपद्यां वाऽप्युपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्द्धपञ्चमान् ॥
ततः परं तु छन्दांसि शुक्लेषु नियतः पठेत् ।
वेदाङ्गानि रहस्यं च कृष्णपक्षेषु सम्पठेत् ॥

इति मनुवचनस्य "इत ऊर्ध्वमनध्यायेष्वङ्गान्यधीयीत" इत्यादिस्मृत्यन्तराणां च पर्यालोचनया वेदवेदाङ्गाध्ययनसमकालता लभ्यते; तथापि ऋषिवचनत्वाविशेषाद्भाष्यकारोक्तेर्मानवादेश्च व्रीहियववद्विकल्प एवेति तत्त्वम् । तदेवमनुबन्धचतुष्टयस्य सुस्थत्वात्साधुशब्दव्युत्पादनं कर्त्तव्यमिति स्थितम् ।

ननु किमिदं साधुत्वम् ? साधयति बोधयतीति साधुरिति व्युत्पत्त्या बोधकत्वं तदिति चेत ? गाव्यादावपि तत्सत्त्वात् । शक्तत्वं तदिति चेत् ? न, 'पचति' इत्यादौ विकरणानामसाधुतापत्तेः, तेषामनर्थकत्वात्; डुपचष् लट् इत्यादीनां साधुतापत्तेश्च, लाक्षणिकेष्वव्याप्तेश्च तेषामपि लक्ष्येऽर्थे ऽशक्तेः । क्वचिच्छक्ततायास्तु अश्वास्वादिष्वतिप्रसक्तेः । वृत्तिमत्त्वं तदिति चेत् ? न, द्योतकेषु निपातेष्वव्याप्तेः । औपसंदानिकी शक्तिरेव द्योतनेति चेत् ? न, प्रोत्तरजित्वघोत्तरटत्वयोरविशेषेण विनिगमनाविरहाच्छक्ततापत्तौ व्यासज्यवृत्तिशक्तौ विश्रान्तेः । ततश्च अट्द्विवचनाद्यव्यवस्थापत्तिः । न च जातिविशेषे एव साधुतेति वाच्यं,

कत्वादिना सङ्करापत्तेरिति।

अत्राहुः—

अनपभ्रष्टताऽनादिर्यद्वाऽभ्युदययोग्यता।
व्याक्रिया व्यञ्जनाया वा जातिः काऽपीह साधुता॥ इति॥

अस्यार्थः—शक्तिवैकल्यादिप्रयुक्तमन्यथोच्चारणमपभ्रष्टता, तद्विरहोऽनपभ्रष्टता, सैव साधुता। सा चार्थविशेषान्तर्भावेणैव। तथाहि, यमर्थं शक्त्या लक्षणया वा बोधयितुं द्योतयितुं वा यादृक्शब्दोऽनादिः प्रयुक्तस्तस्मिन्नर्थे दोषादन्यथात्वं प्राप्तः सोऽसाधुः, अन्यथा तु साधुरिति। येऽपि गाव्यादिष्वेवं प्रथमं व्युत्पन्नाः सन्तस्तान्प्रयुञ्जते तेषामप्यन्यथोच्चारणमस्त्येव। तत्र च दोषप्रयोज्यतास्त्येव, मूलप्रयोक्तुर्भ्रमाद्यन्यतमत्वात्।

यद्वा, अनादिता साधुता। अनादिरिति तु श्लोके भावप्रधानो निर्देशः। आदेरभावोऽनादिरिति वा। असन्देह इतिवत्तत्पुरुषः।

अभ्युदययोग्यता वाऽस्तु साधुता।

रत्नतत्त्ववच्छास्त्रपरिशीलनशालिभिर्गम्यो जातिविशेषो वेति। यत्तु जातिसङ्कर इत्युक्तम्। तन्न; गुणगतजातौ तस्यादोषत्वात्। तथाहि, यस्य देवदत्तादेरनोष्ठ्या वर्णा एव पूर्वं श्रुतास्तस्य कुड्यादिव्यवहितस्य ओष्ठ्यवर्णेषु श्रुतेषु यदनुमानं जायते तदोष्ठ्यानोष्ठ्यसाधारणतदनुमापकजात्यङ्गीकारे सत्येव घटते न तु तत्तद्व्याप्यनानाजातिस्वीकारे, ओष्ठ्यवर्णवृत्त्यसाधारणजातेः प्रागगृहीतत्वेनानुमितिसामग्रीवैकल्यात्। वस्तुतस्तु उपाधिसङ्करवदेव जातिसङ्करोऽपि सर्वत्रास्तु, दूषकताबीजानिरुक्तेः, विनिगमकाभावेन भूतत्वमूर्तत्वयोरिव शरीरत्वपृथिवीत्वयोर्द्वयोरपि जातित्वभङ्गापत्तेश्च। तस्माच्चतुर्विधमपि साधुत्वं निर्दोषं व्याकरणैकगम्यं च।

एवमसाधुत्वमपि चतुर्द्धा—अपभ्रष्टता, सादिता, प्रत्यवाययोग्यता, तदवच्छेदकजातिविशेषो वेति। टिघुभादिसंज्ञासु यद्यपि पुण्यपापजनकतारूपे साधुत्वासाधुत्वे नस्तस्तथापि अनपभ्रष्टत्वरूपं साधुत्वमस्त्येव। तदेवानुशासनप्रवृत्तावुपयोगि, "भय" इत्यादिसौत्रनिर्देशात् "कुत्वं कस्मान्न भवति" इत्यादिभाष्याच्चेत्याहुः। एवं चानादित्वमभ्युदययोग्यत्वं वा अनपभ्रष्टतामात्रेण न सिध्यति, किन्तु पौरुषेयसङ्केतविरहविशिष्टेनेत्यवधेयम्। तदेतदुक्तम्—

यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते टिघुभादयः।
कथं नु तासां साधुत्वं नैव ताः साधवो मताः॥

अनपभ्रंशरूपत्वान्नाप्यासामपशब्दता ।
हस्तचेष्टा यथा लोके तथा सङ्केतिता इमाः ॥

ततश्च—

नासां प्रयोगेऽभ्युदयः प्रत्यवायोऽपि वा भवेत् ।
लाघवेनार्थबोधार्थं प्रयुज्यन्ते तु केवलम् ॥ इति ।

तदयं निर्गलितोऽर्थः—

यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्त इति पक्षे
अनिदंप्रथमाः शब्दाः साधवः परिकीर्त्तिताः ।
त एव शक्तिवैकल्यप्रमादालसतादिभिः ।
अन्यथोच्चारिताः पुम्भिरपशब्दा इतीरिताः ॥

इति च साध्वसाधुलक्षणे आश्रीयमाणे टिघुभादीनां साध्वसाधुबहिर्भावः स्पष्ट एव । तेषामप्यनादितेति पक्षे तु चतुर्विधाऽपि प्रागुक्ता साधुताऽस्त्येव । उक्तश्च—

व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचित् ।
नित्य एव तु सम्बन्धो डित्थादिषु गवादिवत् ॥
वृद्ध्यादीनां च शास्त्रेऽस्मिञ्छक्त्यवच्छेदलक्षणः ।
अकृत्रिमोऽभिसम्बन्धो विशेषणविशेष्यवत् ॥

पक्षद्वयेऽप्यनुशासनविषयता निर्विवादेति । नामकरणे स्वयं विशेषः–कृतं कुर्यान्न तद्धितमित्यादिगृह्यसूत्राविरोधिनामेव साधुता । तद्विरोधिनां तु देशभाषानुसारेण क्रियमाणानां कूचीमञ्चीत्यादिनामधेयानामसाधुतैव । तदेतद् ऋलृक्सूत्रे वार्तिकव्याख्यावसरे स्फुटीकरिष्यते ॥

इति साधुत्वनिर्वचनम् ॥

व्युत्पादनं च प्रकृतिप्रत्ययादिकल्पनया उत्सर्गापवादरूपलक्षणैरेव, न तु साध्वसाध्वोर्वा अन्यतरस्य वा प्रतिपदपाठेन, शब्दानामानन्त्येन तदसम्भवादित्युक्तम् । स्यादेतत्, लक्षणप्रणयनमपि किं जातिपक्षमाश्रित्य उत व्यक्तिपक्षम् ? आद्ये सकृद्गतौ यद्बाधितं तद्बाधितमेवेति न सिद्ध्येत् । तथाहि, जातौ पदार्थे द्वयोर्विध्योः परस्परपरिहारेण तत्तज्जात्याक्रान्तव्यक्तिविशेषे चरितार्थयोः क्वचिदेकत्र प्रसङ्गे परस्परप्रतिबन्धादप्रतिपत्तिरेव स्यात् सत्प्रतिपक्षवत् । तथा च वक्ष्यति–"अप्रतिपत्तिर्वोभयोस्तुल्यबलत्वात्" इति । तत्र च विप्रतिषेधसूत्रं विध्यर्थं–परं तावद्भवतीति । तस्मिंश्च कृते यदि पूर्वस्य निमित्तमस्ति तर्हि भवत्येव तत् । यथा 'भिन्धकि' इत्यत्र भिनद् हि इति स्थिते परत्वाद्धिभावे कृते

"अतो गुणे" (पा०सू०६-१-९७) इत्यत्रापि पर इत्येव सिद्धे रूपग्रहणसामर्थ्याद्यादृशः, परस्तादृश एवादेशो न तु तद्भिलक्षणः। तेन 'पचन्ति' इत्यपि सिद्धम्। तस्माद्योगविभागेन एकादेशो दीर्घो भवतीति पक्षो निर्दोष एवेति चेत्? न, एवं सति 'कृष्णर्द्धिः' 'तवल्कारः' इत्याद्यसिद्धिप्रसङ्गात्। इह हि दीर्घवचनादकारो न। अनान्तर्यादेदोतौ न। तस्माद्दीर्घ इति योगविभागो दुष्ट एव। तेन 'गङ्गोदकं' 'रमेशः' इत्यत्र त्रिमात्रचतुर्मात्रप्रसक्तिर्दुर्वारैवेति। न च प्लुतश्च विषये स्मृत इति वाच्यम्, प्लुताप्लुतप्रसङ्गे सत्येव तदिति वक्ष्यमाणत्वात्। ननु तथापि चतुर्मात्रः कथमापद्यते? तस्य लोकवेदयोरप्रसिद्धेरिति चेत्? न, छान्दोग्ये प्रसिद्धेरित्याहुः। वस्तुतस्तु लोकेऽप्यस्ति प्रसिद्धिः तथाच "प्लुतावैच इदुतौ" (पा०सू०८-२-१०६) इति सूत्रे भाष्यकारो वक्ष्यति-"इष्यत एव चतुर्मात्रः प्लुतः" इति। अत्रोच्यते-गुणसंज्ञायां वृद्धिसंज्ञायां च तपरनिर्देशान्नोक्तदोषः। तदेतदुक्तं वार्त्तिककृता-"एकादेशे दीर्घग्रहणम्" इति। तस्यैव संज्ञित्वादिति भावः। न त्वेतद्वार्त्तिकं दीर्घग्रहणान्तरकर्त्तव्यतापरं नापि योगविभागपरम्, उक्तयुक्तेः।

स्यादेतत्, संज्ञासूत्रे अदातोस्तपरकरणेऽपि एङैचोः कथं तत्कालग्राहकता। "सहिवहोरोत" (पा०सू०६-३-११२) इति सूत्रे वर्णग्रहणन तात्पर इति पञ्चमीसमासस्यापि ज्ञापितत्वादिति चेत्? एवमपि तात्पराभ्यामेङैच्छब्दाभ्यामस्तु दीर्घाणामेवोपस्थितिरुपस्थितैस्तु दीर्घैः स्वसवर्णानामशेषाणां ग्रहणं दुर्वारमेव। नहि तेऽपि तात्पराः, अनुच्चारितत्वात्। ग्राहकत्वं परमनुच्चारितानामपि प्रत्याहारैरुपस्थितानामस्त्येव "दीर्घाज्जसि च" (पा०सू०६-१-१०५) इति ज्ञापकात्। "ष्वादिभ्यः" (पा०सू०८-२-४४) "ष्वादीनाम्" (पा०सू०७-३-८०) इत्यादिनिर्देशाच्च। तेन चमूष्वित्यादिषु षत्वादिकं सिध्यतीति वक्ष्यते। तात्परस्तत्कालस्येति तु उच्चारितेष्वेव स्यादिति चेत्? सत्यम्, "ङमो ह्रस्वाद्" (पा०सू०८-३-३२) इति सूत्रे ङमुडिति प्रत्याहारे कृतं टित्त्वं संज्ञायां व्यर्थं तत्सामर्थ्यात्संज्ञिषु ङादिषु उपकरोतीति यथा स्वीकृतं, तथेहापि तात्परत्वं संज्ञायामनुपयुज्यमानं तदुपस्थाप्येषु संज्ञिषु तत्कालावधारणं सामर्थ्यात्करोतीति न कश्चिद्दोषः। यद्वा, अणुदित्सूत्रेऽशब्दसंज्ञेत्यनुवर्त्तते "ऊकालोज्" (पा०सू०१-२-२७) इत्यत्र भाष्ये स्फुटम्। उपपादयिष्यामश्चेदं तत्रैव। अतो गुणवृद्धिसंज्ञाविधावपि न सवर्णग्रहणम्। तपरकरणं तु स्पष्टार्थम्, "ईदूदेद्" (पा०सू०१-१-११) इतिवत्। अन्यथा हि किमेवावेवेह निर्दिष्टौ किं

वा आकारोपीत्यादिसन्देहः स्यात्। तत्र च "मालादीनां (पा०सू० ६-२-८८) इत्यादिज्ञापकानुसरणक्लेशः स्यादिति दिक्।

युक्ततरश्चायमेव पक्षः। आद्यपक्षे हि वृद्धिसंज्ञायाम् आ इति दीर्घस्यानण्त्वेन सवर्णाग्राहकतया तपरकरणमैजर्थमिति स्थिते ङमुटीव सामर्थ्यमस्तु, गुणसंज्ञायां तु तपरकरणस्योभयार्थताभ्युपगमात्पूर्वत्र चरितार्थस्य क्व सामर्थ्यं येनेदं संज्ञिनोरेदोतोरुपकुर्यादिति तत्र सवर्णग्रहणं स्यादेव। अस्मिन्नपि पक्षे "एकादेशे दीर्घग्रहणम्" इति वार्त्तिकं दीर्घस्यैव संज्ञित्वादिति पूर्ववदेव व्याख्येयम्।

स्यादेतत्, प्रथमपक्षे तादपि परस्य तत्कालग्राहकत्वाद् "ॠदोरप्" (पा०सू०३-३-५७) 'यवः' 'स्तवः' इत्यादावेव स्यान्न तु 'लवः 'पवः' इत्यादावपीति चेत्? अत्र भाष्यम्, नायं तकारः किं तर्हि असन्देहार्थौ मुखसुखार्थौ वा दकारोऽयमिति। नन्वेतद्भाष्यं "तितिप्रत्ययग्रहणम्" ( का०वा० ) इत्येतद्वार्त्तिकप्रत्याख्यानपरेण "तित्स्वरितम्" ( पा०सू०६-१-१८५ ) इत्यत्रत्यभाष्येण सह विरुध्येत। तथाहि, तत्र तिति प्रत्ययग्रहणं कर्त्तव्यम्। इह मा भूत्—"दिव उत्" (पा०सू०६-१-१३१ ) 'द्युभिरक्तुभिः' इति पूर्वपक्षयित्वा दित्त्वमाश्रित्य समाहितम्। ततो भाव्यमानस्याप्युकारस्य "अदसोसेर्दाद्" ( पा०सू०८-२-८० ) इत्यत्रेव सवर्णग्राहकता स्यादित्याशङ्क्य तपरसूत्रे दकारस्यापि चर्त्वभूतस्य निर्देशाद्दपरोऽपि तत्कालग्राहक इति परिहृतम्। एवञ्च "ऊॠत्" (पा०सू०७-४-७) इत्यादावपि दपरत्वमेव। अन्यथा स्वरितप्रसङ्गात्। अयमेव च दपरनिर्देशो भाव्यमानस्याप्युकारस्य सवर्णग्राहकतां ज्ञापयतीति स्थितम्। इह तु 'ॠदोः' (पा०सू०३-३-५७) इति दकारनिर्देशात् 'लवः 'पवः' इत्यादौ दीर्घेऽपीष्टं साध्यते।

अत्र प्राञ्चः—थकारस्थानिको धकारस्थानिको वा दकारोऽत्र भाष्यकृतो विवक्षितः, अतो न पूर्वोत्तरविरोध इति। ऋजवस्तु वार्त्तिकमते स्थित्वेदं भाष्यमतो न विरोध इत्याहुः। वस्तुतस्तु "तपरस्तत्कालस्य" (पा०सू०१-१-७०) इत्यत्र दकारो न निर्द्दिश्यते प्रयोजनाभावात्। "दिवउत्" (पा०सू०६-१-१३१) "ऋतउत्" (पा०सू०६-१-१११) इत्यादौ तु तपरत्वादेवेष्टसिद्धिः। नन्वेवं "तित्स्वरितम्" (पा०सू०६-१-१८५) इत्यस्य प्रसङ्ग इति चेत्? न, "प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम्" (प०भा०१००) इति परिभाषया तत्समाधानात्। यत्तु "तित्स्वरितम्" (पा०सू०६-१-१८५) इति सूत्रे हरदत्तेनोक्तम्—"तस्यास्तु परिभाषाया भाष्यवार्त्तिकयोरिहादर्शनादयं यत्नो महानस्माभिराहतः"

इति, तत्रेदं वक्तव्यम्–थकारस्थानिको धकारस्थानिको वा दकार इत्येवंरूपो यत्नस्तावदेओङ्सूत्रे स्थित्वा पूर्वाचार्यैरेवोक्त इत्यत्रत्यकैयटग्रन्थ एव स्फुटम्। नन्वत एवास्माभिरादृत इति ब्रूमो नतूक्तीत इतीति चेत्? सत्यमादृतः, तथापि परिभाषाया अदर्शनादित्यसिद्धो हेतुः "अङ्गस्य" (पा०सू०६–४–१) इति सूत्रप्रत्याख्यानाय भाष्ये कण्ठरवेणैव एतत्परिभाषोपन्यासात्। 'निरुतं' 'दुरुतम्' इत्यादिसिद्धये सूत्रं कर्त्तव्यमिति स्थिते व्यर्थेयं परिभाषेत्याशय इति चेत्? तथापि थकारधकारस्थानिको दकार इत्यर्थ इति व्याख्यानक्लेशो निष्फलतया मूलस्वरसविरुद्धतया चादरणानर्ह एव। "दिव उत्" (पा०सू०६–१–१३१) इत्यादौ "तित्स्वरितम्" (पा०सू०६–१–१८५) इत्यस्य प्राप्तेरेव विरहेण दकारप्रश्लेषादेर्निर्बीजत्वात्। तथाहि उदित्येषा उकारस्य संज्ञा तया प्रत्यायित उकारस्तु विधीयते। तथाच संज्ञायास्तित्त्वेऽपि संज्ञिनः किमायातम्? वस्तुतस्तु संज्ञापि तान्ता न तु तित्। "तपरः" (पा० सू०१–१–७०) इति हि सूत्रितं न तु तिदिति। यदि हि संज्ञावत् संज्ञ्यपि तान्त एव तर्हि "अतो भिस ऐस्" (पा०सू०७–१–९) 'भवद्भिः' इत्यादावेव स्यान्न तु 'वृक्षैः' इत्यादौ। "तपरस्तत्कालस्य" (पा०सू०१–१–७०) इति सूत्रं च व्यर्थमेव स्यात् "स्वं रूपं शब्दस्य" (पा०सू०१–१–६८) इत्यनेनैव गतार्थत्वात्। न च ङमुडादाविव संज्ञायां कृतं लिङ्गं संज्ञिनि लब्धुं शक्यम्, तद्वदिह सामर्थ्यविरहात्। एवञ्च "तित्स्वरितम्" (पा०सू०६–१–१८५) इति सूत्रे भाष्यवार्त्तिकग्रन्थः सर्वोऽप्यभ्युपेत्यवाद एव। "स्थाध्वोरिच्च" (पा०सू०१–२–१७) इति सूत्रे इच्च कस्य तकारेत्त्वमित्यादिग्रन्थोऽप्येवमेव। तस्मान्नायं तकारः किन्तर्हि दकार इति इहत्यभाष्यग्रन्थो यथाश्रुत एव साधुरिति सहृदयैराकलनीयम्। अयमेव च ग्रन्थोऽभ्युपेत्यवादरूपतामुत्तरग्रन्थानां गमयति। एतेन "औत्"(पा०सू०७–३–११८)"इटोऽत्" (पा०सू०३–४–१०६) इत्यादिष्वपि विधेयस्य तपरत्वाभावो व्याख्यातः। तित्त्वं तु दूरापास्तमिति दिक्।

इह अकारादयो वर्णाः सांशा इष्यन्ते। यदाह "तस्यादित उदात्तमर्द्धह्रस्वम्।" (पा०सू०१–२–३२) पूर्वस्यार्द्धस्यादुत्तरस्येदुताविति। वार्त्तिककारोऽप्याह–"एचोश्चोत्तरभूयस्त्वात्" इति। तत्र सन्ति केचिदंशाः स्वतन्त्रवर्णान्तरसदृशाः, यथा आकारादिष्वकारस्य सदृशौ भागौ, एक्षु पूर्वभागोऽकारस्य उत्तर इवर्णोवर्णयोः, ऋकारे उभयतोऽज्भक्तेरर्द्धमात्रा मध्ये रेफस्य सदृशोऽर्द्धमात्राभागः, ऌकारेऽप्युभयतोऽज्भक्तिः मध्ये स्वतन्त्रलकारसदृशो भागः। तत्र स्वतन्त्रतत्तद्वर्णग्रहणेन

विधीयमानं कार्यं तत्तत्सदृशेष्वंशेषु न प्रवर्त्तते । तत्सदृशा हीमे न तु त एव नरसिंहवज्जात्यन्तराक्रान्तत्वात् । गोनौग्रहणं चात्र ज्ञापकम् । यदि हि भागा अपि स्वतन्त्रवर्णप्रयुक्तं कार्यं प्रवर्तयेयुस्तर्हि "गोद्यचोऽसंख्यापरिमाणाश्वादेर्यत्" (पा०सू०५-१-३९) इति "नौद्व्यचष्ठन्" (पा०सू०४-४-७) इति च सूत्रद्वये द्यज्ग्रहणेनैव गतार्थत्वाद्गोशब्दं नौशब्दं च नोपाददीत । तेन 'अग्ने इन्द्र', 'वायो उदकम्'इत्यत्र सवर्णदीर्घो न । न च "एचोऽयवायावः" (पा०सू०६-१-७८) इत्यनेन तस्य बाधोऽस्त्विति वाच्यम्, अयादयो हि येन नाप्राप्तिन्यायेन मध्येपवादन्यायेन वा यण एव बाधकतया 'अग्न आयाहि' इत्यादौ चरितार्था 'अग्ने इन्द्रम्' इत्यादौ परेण दीर्घेण बाध्येरन् । अन्तरङ्गोऽपि दीर्घोऽवयवमात्रापेक्षत्वात । तथा 'अग्न एति' इति "एङः पदान्तात्" (पा०सू०६-१-१०९) इत्येतन्न, 'आलूय' 'प्रमाथ' इत्यत्र तुङ् न, 'मालाभिः' इत्यत्र ऐस्न, 'याता' इत्यादावतोलोपो न, 'वाचा तरति' 'वाचो निमित्तम्' इत्यत्र झज्लक्षणौ ठन्यतौ नेति दिक् ।

नुड्विधिलादेशविनामेषु तु प्रतिविधेयम् । तथाहि, द्विहल्ग्रहणमपनीय "तस्मान्नुड्" इत्येव सूत्रं कर्त्तव्यम् । नचैवम् 'आनृधतुः' इत्यत्रेव 'आटतुः' इत्यादावपि नुट्प्रसङ्गः "अश्नोतेश्च" (पा०सू०७-४-७२) इत्यस्य नियमार्थत्वात् । नियमश्च सामान्यापेक्षः—अकारोपधस्य यदि भवत्यश्नोतेरेव न तु अटत्यादेरिति । यदि त्वश्नातिमात्रं निवर्त्यं स्यात्तर्हि 'नाश्नः' इत्येव ब्रूयात् ।

'रोलः' इत्यत्र स्वतन्त्रास्वतन्त्रसाधारणी जातिरनुवाद्ये विधेये च विवक्षिता । एकादेशस्य च पृथङ्निष्कर्षायोगात्तद्द्वारा ऋकारस्यैव लकारादेशः फलति । स्वतन्त्रवर्णवृत्तिजातेर्नायं निर्देशः किन्तु अशांशिसाधारण्या एवेति । अत्र ज्ञापकं तु "लुटि च क्लृपः" (पा०सू०१-३-९३) "तासि च क्लृपः" (पा०सू०७-२-६०) "ऋदुपधाच्चाक्लृपिचृतेः" (पा०सू०३-१-११०) इति निर्देशाः । यद्वा, कृप उः रः ल इति छेदः, कृप इति लुप्तषष्ठीकं पदम् । तच्चि तन्त्रेणाऽऽवृत्त्या वा योज्यम् । कृपेर्यो रेफस्तस्य लः कृपेरृकारस्यावयवो यो रेफः रेफसदृश इति यावत्, तस्य च लकार इति । तेन 'चलीक्लृप्यते' इत्यादि सिद्धम् । ईदृशपदविभागप्रदर्शनपरभाष्यादेव कृपेरिति सूत्रपाठस्य प्रामादिकत्वं निर्णीयते । तदेवं नुड्विधिलादेशयोः समाहितम् ।

विनामो नतिः, तल्लक्षणं चोक्तं प्रातिशाख्ये—"नतिर्दन्त्यमूर्द्धन्य-

भावः" (ऋ०प्रा०५-५७) इति । प्रकृते तु नस्य णत्वं नतिः, तत्रेदं प्रतिविधानम्—"छन्दस्यृदवग्रहात्" ( पा०सू०८-४-२६ ) इत्यत्र योगविभागः कार्यः, ऋतः, ऋतः परस्य 'नस्य णः स्यात्, 'गृणाति' 'वृणोति' इत्यादि । ततः—छन्दस्यवग्रहात् । ऋत इत्येव, 'पितृयाणं' 'द्युमत्' इत्यादि । नन्वेवमपि तपरकरणात् 'पितॄणाम्' इत्यादौ णत्वं न स्यादिति चेत् । एवं तर्हि लत्वविधाविवेहापि 'रषाभ्याम्' इति रेफतत्सदृशभागसाधारणी जातिर्निर्दिश्यते क्षुभ्नादिषु तृप्नोतिशब्दपाठाज्ज्ञापकात् । न च परयाऽज्भक्त्या व्यवधानं, 'व्यवायेऽपि' इति विभज्य सामान्येन व्यवायेऽपि णत्वविधानात् । न चैवं 'कृतेन' इत्यादावतिप्रसङ्गः, "अट्कुप्वाङ्नुम्भिः" इति नियमात् । आक्षरसमाम्नायिकैस्तत्प्रत्यायितैर्वा व्यवाये यदि भवति तर्ह्येतैरेवेति नियमसूत्रस्यार्थः । यद्वा तृप्नोतिशब्दपाठेन "होतृपोतृप्रशास्तॄणाम्" (पा०सू०६-४-११) इत्यादिनिर्देशेन च ऋवर्णान्नस्य णत्वमेव ज्ञाप्यते लाघवात् । एवं हि व्यवायेऽपीति योगविभागोऽपि न कर्त्तव्यो भवतीति । भाष्ये तु "वर्णैकदेशा वर्णग्रहणेन न गृह्यन्ते" इति द्वितीयोऽपि पक्षः समर्थितः । स तु बहुप्रतिविधेयत्वेन गौरवभयान्नेह प्रपञ्च्यते ।

ननु यदि वर्णैकदेशा वर्णग्रहणेन न गृह्यन्ते तर्हि 'कुक्कुटः' 'पिप्पली' 'पित्तम्' इत्यादौ संयोगसंज्ञा न स्यात् अखण्डस्य मात्राकालस्य कक्प्त् इत्यस्य एकहल्त्वात् । तदवयवयोश्च हल्ग्रहणेनाग्रहणात् । नन्वखण्डस्यानुपदेशात् कथं हल्त्वमिति चेत् ? मा भूत्तर्हि तदपि । अवयवानां हल्त्वं तु कुतः? 'सँय्यन्ता' 'सँवत्सरः' 'यँल्लोकम्' इत्यादौ तु एकवर्णानामपि हल्त्वं भविष्यति, अण्सूपदिष्टैर्ग्रहणात् । तदवयवयोस्तु हल्त्वं न स्यादेव । ततश्च संयोगसंज्ञाविरहे ततः पूर्वस्य गुरुत्वाभावे प्लुतो न स्यादिति । अत्राहुः, व्यञ्जनमर्धमात्रमेव । आशूच्चारणात्तु तुल्यरूपयोर्द्वयोरेकत्वभ्रमः । इदं च शिष्टसमाचारात् प्रक्रियादशायामवश्यं स्वीकार्यम् । परमार्थदशायां तु—

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ।
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन ॥

इति वाक्यपदीयोक्तरीत्या स्फोटं सिद्धान्तयतां क्वास्य पूर्वपक्षस्यावसरः ॥

हयवरट् (मा०सू०५) हकारोऽयं द्विरुपदिश्यते । यदि तु परत्रैवोपदिश्यते अडश्हश्इण्ग्रहणेषु न गृह्येत । ततश्च 'अर्हेण' इत्यत्राड्(१)व्य·

(१) "अट्कुप्वाङ्नुम्व्यवायेऽपि" (पा०सू०८-४-२) इति सूत्रेणेत्यर्थः ।

वायेऽपीति णत्वं न स्यात्। 'महान् हि' इति स्थिते 'महाँहि' इति न स्यात्। अत्र हि "दीर्घादटि समानपादे" (पा०सू०८-३-९) इति रुः, "आतोऽटि नित्यम्" (पा०सू०८-३-३) इत्यनुनासिकः, "भो भगो अघो अपूर्वस्य (पा० सू०८-३-१७) इति यत्वम्, "हलि सर्वेषाम्" (पा०सू०८-३-२२) इति यलोपः । तत्राप्यशीत्यनुवर्त्तत इति वक्ष्यते। 'ब्राह्मणो हसति' इत्यत्र "हशि च" (पा०सू०६-१-११४) इत्युत्वं न स्यात्। तथा 'लिलिहिढ्वे, लिलिहिध्वे, इत्यत्र "विभाषेटः" (पा०सू०८-३-७९) इति मूर्द्धन्यविकल्पो न स्यात्। तत्र हि "इणः षीध्वम्" (पा०सू०८-३-७८) इतिसूत्रादिण इत्यनुवर्त्तते । तदेवमटि अशि हशि इणि चेति चतुर्षु ग्रहणं प्रथमोपदेशस्य फलमिति स्थितम् ।

यदि तु परत्र नोपदिश्येत, वल्रल्झल्शल्ग्रहणेषु न गृह्येत। ततश्च 'रुदिहि' 'स्वपिहि' इत्यत्र "रुदादिभ्यः सार्वधातुके" (पा०सू०७-२-७६) इति वलादित्वप्रयुक्त इण्न स्यात्। "ष्णिह प्रीतौ" (दि०प०) 'स्निहित्वा, स्नेहित्वा' 'सिस्निहिषति, सिस्नेहिषति' इत्यत्र "रलो व्युपधात्" (पा०सू०१-२-२६) इति कित्त्वं न स्यात्। 'अदाग्धाम्' 'अदाग्धम्' इत्यत्र घत्वस्यासिद्धत्वाद्धकारादझलः परः सिजिति "झलो झलि"(पा०सू०८-२-२६) इति न प्रवर्त्तेत । 'अधुक्षत्' 'अलिक्षत्' इत्यत्र "शल इगुपधादनिटः" (पा०सू०३-१-४५) इति क्सो न स्यात् ।

तस्मात्प्रत्याहाराणां चतुष्टये प्रथमोपदेशस्य चतुष्टये च द्वितीयोपदेशस्य फलमस्तीति स्थितम् ।

स्यादेतत्, रेफस्य यर्कार्याणि प्राप्नुवन्ति । तद्यथा 'भद्रह्रदो' 'भद्रह्रदः' इत्यत्र अचः पराद्धकारात् परस्य यर इति विधीयमानं द्वित्वं 'नह्यस्ति' इत्यादौ यकारस्येव प्राप्नोति। न च "रोरि" (पा०सू० ८-३-१४) इति लोपः सुकरः, लोपं प्रति द्वित्वस्यासिद्धेः। "हलो यमाम्" (पा०सू०८-४-६४) इति लोपस्तु वैकल्पिक इति वक्ष्यमाणत्वात् पक्षे रेफद्वयं श्रूयेत । न च व्यञ्जनपरस्यैकस्यानेकस्य वा उच्चारणे विशेषो नास्तीत्यसिद्धवत्सूत्रे भाष्यकृता वक्ष्यमाणत्वान्नायं दोष इति वाच्यम्, सूक्ष्मत्वाद्दुर्लक्ष्यो विशेष इति तदर्थात्। न तु सर्वथा विशेषविरहोऽभिप्रेतः। "शरोचि" (पा०सू०८-४-४९) "हलो यमाम्" (पा०सू०८-४-६४) इत्यादिशास्त्रवैयर्थ्यापत्तेः। तथा 'चतुर्मुखः' इत्यादौ "यरोऽनुनासिकेऽनुनासिको वा" (पा०सू०८-४-४५) इति पक्षे णकारः प्रवर्त्तेत, स्थानसाम्यात्। 'कुण्डं रथेन' इत्यादौ "वा पदान्तस्य" (पा० सू०८-४-५९) इति पक्षे रेफः प्रवर्त्तेत। "रेफोष्मणां सवर्णा न सन्ति"

(भा०३०) इत्येतद्विजातीयः सवर्णो नास्तीत्येवं परम् । स्वस्य स्वयं सवर्णो भवत्येव, तुल्यास्यप्रयत्नत्वात् । "रो रि" (पा०सू०८-३-१४) इति लोपस्तु नास्ति तं प्रति परसवर्णस्यासिद्धत्वात् । अथ द्वित्वानुनासिकपरसवर्णनिवृत्तये यवाभ्यां पूर्वत्र रेफोऽनुकृष्येत—"हरयवट्" इति ? तर्हि "रलो व्युपधाद्" (पा०सू०१-२-२६) इत्येतद्वकारान्तेष्वपि प्रवर्त्तेत । ततश्च 'देवित्वा' 'दिदेविषति' इत्यत्र पक्षे गुणो निषिध्येत । नन्वव्युपधादिति छित्वा अवकारान्ताद् व्युपधादिति व्याख्यास्यते इति चेत् ? एवमपि 'गौधेरः' 'पचेरन्' इत्यादौ "लोपो व्योः" (पा०सू०६-१-७६) इति न प्रवर्त्तेत, रेफस्य वल्यनन्तर्भावात् । 'रलि' इति वक्ष्यामीति चेत् ? "हय गतौ" (भ्वा०प०) 'हय्यात्' इत्यादौ यकारेऽतिप्रसङ्गः । ननु यथाश्रुते एव सूत्रे 'वलि' इति सरेफं पदं छित्वा रेफे वलि चेति व्याख्यानान्नोक्तदोष इति चेत् ? एवमपि "इको रणचि" (पा०सू०६-१-७७) "संयोगादेरातो धातोरण्वतः" (पा०सू०८-२-४३) "उदात्तरणो हल्पूर्वात्" (पा०सू०१-१-४५) "इग्रणः सम्प्रसारणम्" (पा०सू०१-१-४५) इत्यादिक्रमेण यण्ग्रहणानि सर्वाणि रेफेण ग्राह्याणि स्युः । न चैतावतापीष्टनिर्वाहः "इको रण्" इत्यत्र संख्यातानुदेशेनेकारस्य रेफः उकारस्य यकारः ऋकारस्य वकार इति बहूपप्लवप्रसङ्गात् । ननु यथाश्रुतेऽपि यथासंख्येन निर्वाहो दुरुपपादः । तथाहि विधीयमानतया यवलाः सवर्णान्न गृह्णन्तीति चत्वारस्तावद् यणः, गुणानामभेदकतयाऽनुनासिकसङ्ग्रहेऽपि पृथग्गणनाविरहात् । इकस्तु सवर्णग्रहणात् षट्षष्टिः । न च षट्षष्टेरुपस्थापकानामिक्शब्दवाच्यानामिकारादीनां चतुष्ट्वमस्त्येवेति वाच्यम्, तृतीयचतुर्थाभ्यामृकाराभ्यां प्रत्येकं तस्या एव त्रिंशत उपस्थितौ सत्याम् ऌकारे रेफादेशस्य ऋकारे च लकारादेशस्य दुर्वारत्वात् । तस्मात् "स्थानेऽन्तरतमः"(पा०सू०१-१-५०) इत्यनेनैव प्रकृते निर्वाहः। यथासङ्ख्यसूत्रं तु "नन्दिग्रहिपचादिभ्यः" (पा०सू०३-१-१३४) इत्यादिषूपयोक्ष्यते इत्येव निष्कर्षः । तथा च 'इकोरण्' इति न्यासेऽपि तेनैव निर्वाहोऽस्त्विति चेत् ? न, वैषम्यात् । यथाश्रुते ह्यविरोधात्परिभाषाद्वयमपि "इको यण्" (पा०सू०६-१-७७) इत्यत्र प्रवर्त्तते । इको यथासंख्यमन्तरतमो यण् स्यादिति । रणिति न्यासे तु परिभाषयोर्विरोधात् परत्वेन यथासंख्यमेव प्रवर्त्तेत । तस्मादनुचितो रेफस्य स्वस्थानादपकर्षः । यथाश्रुते तु द्वित्वादिदोषत्रयं दुर्वारमिति ।

अत्रोच्यते, रेफस्याविशेषतः श्रुतेन द्वित्वं प्रति निमित्तत्वेन सामा-

न्यतः श्रुतं कार्यित्वं बाध्यते। यथा 'ब्राह्मणा भोज्यन्तां, माठरकौण्डिन्यौ परिवेविषाताम्, इति विशेषतः श्रुतेन परिवेषणेन माठरकौण्डिन्ययोः सामान्यतः प्राप्तं भोजनं बाध्यते, तद्वत्। यद्यपीह लक्ष्यव्यक्तिभेदेनोभयं सम्भवति, सत्यपि सम्भवे सामान्यतः प्राप्तं विशेषप्राप्तेन बाध्यते इत्यभ्युपगमान्न दोषः। एवञ्च "अचो रहाभ्याम्" (पा० सू० ८-४-४६) इति सूत्रे यर इति रेफभिन्नपरमेवेति स्थिते "अनचि च" (पा०सू०८-४-४७) इत्यत्रापि तथैव अर्थाधिकाराश्रयणात्। तेन 'हर्यनुभवः' इत्यादावपि रेफस्य न द्वित्वम्। नन्वेवं दध्युदकादौ यण् न स्यात, विशेषतः श्रुतेन स्थानित्वेनेकां निमित्तत्वस्य बाधादिति चेत्? न, तत्र लक्ष्यानुरोधेन व्यक्तिपक्षाश्रयणात्। व्यक्तिपक्षे हि प्रतिलक्ष्यमसकृल्लक्षणं प्रवर्त्तते। यद्वा, प्रतिलक्ष्यं भिन्नानां सर्वेषां लक्षणानां तन्त्रेणोच्चारणम् "इको यणचि" (पा सू०६-१-७७) इति। ततश्चेकामपि तात्पर्यतो निमित्तत्वप्रतिपादनाददोषः। नचैवं 'श्रीशः' इत्यादावपि यण्प्रसङ्गः, व्यक्तिपक्षे विप्रतिषेधे परमेवेति नियमबलेन तद्व्यक्तिविषयकशास्त्रस्यैव विरहकल्पनात्। एवमपवादविषयेऽपि 'सुश्रियौ' इत्यादौ बोध्यम्। "परिहृत्यापवादविषयं तत उत्सर्गो ऽभिनिविशते" इति न्यायात्। जातिव्यक्तिपक्षौ च लक्ष्यानुरोधाद्व्यवस्थयाऽऽश्रीयेते इति पस्पशायामेवोक्तम्। "तस्मादित्युत्तरस्य" (पा०सू०१-१-६७) "पत्युत्तरपदाण्ण्यः" (पा०सू०प०४-१-८५) इत्यादिनिर्देशाश्चेह लिङ्गम्। भाष्ये तु "नेमौ रहौ कार्यिणौ द्विर्वचनस्य, किं तर्हि निमित्तमिमौ" इत्युक्तम्। तत्र हकारग्रहणं दृष्टान्तार्थं, तस्य यर्बहिर्भूततया यथा न द्वित्वे कार्यिता तथा यरन्तर्भूतस्यापि रेफस्येति। एवमनुनासिकपरसवर्णविधी अपि स्थानेन्तरतमपरिभाषासंस्कृतौ स्थानप्रयत्नोभयान्तरतमे 'एतन्मुरारिः' 'त्वङ्करोषि' इत्यादौ क्वचिल्लब्धावकाशौ अनन्तरतमे प्रागुक्ते न प्रवर्त्तेते जातिपक्षाश्रयणादेवेति संक्षेपः। अत्र वार्त्तिकम्—"अयोगवाहानामट्सु णत्वं, शर्षु जश्भावषत्वे, अविशेषेण संयोगोपधसंज्ञाऽलोन्त्यविधिद्विर्वचनस्थानिवत्त्वनिषेधाः" इति। अस्यार्थः—अविद्यमानो योगः प्रत्याहारेषु सम्बन्धो येषां तेऽयोगाः अनुपदिष्टत्वादुपदिष्टैरगृहीतत्वाच्च प्रत्याहारसम्बन्धशून्या इत्यर्थः। वाहयन्ति निर्वाहयन्ति प्रयोगमिति वाहाः, अयोगाश्च ते वाहाश्चेति कर्मधारयः। अनुपदिष्टत्वे उपदिष्टैरगृहीतत्वे च सति श्रूयमाणा इत्यर्थः। "ते च विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारयमाः" इति भाष्यम्। एतच्च "ऋति ऋ वा" (का०वा०) "ऌति ऌ वा" (का०वा०) इति विहितयोरीषत्स्पृष्टयोरण्यु-

पलक्षणम् । तथाच तुल्यास्यसूत्रे भाष्यम्—'तयोश्चत्वं वक्ष्यामि' इति । तत्फलं तु तत्रैव स्पष्टम् । तत्र यमानां लक्षणमनुनासिकसंज्ञासूत्रे प्रपञ्चयिष्यामः । एषामट्सूपदेशः कर्त्तव्यः, णत्वं फलम् । 'उरःकेण' 'उरःपेण' 'उर ᳲ केण' 'उर ᳲ पेण' अड्व्यवाये इति णत्वं विसर्जनीयजिह्वामूलीयोपध्मानीयैर्व्यवायेऽपि सिध्यति । नायमज्ञाताद्यर्थे कः, "सोऽपदादौ" (पा०सू०८-३-३८) इति सत्वप्रसङ्गात्; किन्तु उरः कायति उरःपातीति विग्रहः । "कै शब्दे" "पा रक्षणे" (अ०प०) आभ्याम् "आतोऽनुपसर्गे कः" (पा०सू०३-२-३) "कुप्वोᳲकᳲपौ च" (पा०सू०८-३-३७) इति चकारात् पाक्षिको विसर्गः । न चैवमपि गतिकारकोपपदानां प्राक्सुबुत्पत्तेः समासाभ्युपगमात् "सोपदादौ" (पा०सू०८-३-३८) इति प्रवर्त्तेतेति वाच्यम्, तस्य 'दधिसेचौ' 'धनक्रीता' इत्यादिसिद्ध्यर्थमनित्यताया वक्ष्यमाणत्वात् "पाशकल्प" (का० वा०) इत्यादिपरिगणनाच्च । 'प्रोम्भणम्' "अट्कुप्वाङ्"(पा०सू०८-४-२) इतिसूत्रे नुमग्रहणं न कर्त्तव्यं भवति ।

अत्रेदमवधेयम्—अट्सु क्रियमाण उपदेशोऽकारानन्तरमिकारात् प्राक्कर्त्तव्यः । तेनेण्सु अनन्तर्भावात् 'पयः सु यशःसु' इत्यादौ "इण् कोः" (पा०सू०८-३-५७) इत्यधिकृत्य विधीयमानम् "आदेशप्रत्यययोः" (पा० सू०८-३-५९) इति षत्वं न भवति । अक्षु चान्तर्भावात् 'संस्कर्त्ता' इत्यत्रानुस्वारादचः परत्वमाश्रित्य सकारस्य द्वित्वं कैयटेनाष्टमे वक्ष्यमाणं संगच्छते । न चैवं 'हरिः करोति' इत्यादौ "इको यणचि" (पा०सू० ६-१-७७) इति यणप्रसङ्गः, विसर्गस्यासिद्धत्वात् । एवं 'हरिः पश्यति' इत्यादावनुस्वारस्यासिद्धत्वं बोध्यम् ।

शर्षु चोपदेशः कर्त्तव्यः । जश्भावस्तावत्प्रयोजनम् । तथाहि, वार्त्तिकमते "उब्ज आर्जवे" (तु०प०) इति धातुरुपध्मानीयोपधः पठ्यते । तत्र "झलां जश् झशि" (पा०सू०८-४-५३) इति जश्भावे आन्तरतम्याद्बकारादेशः—"'उब्जिता' 'उब्जितुम्' शर्षूपदेशाद्धि नान्तरीयकत्वादेव झल्त्वमप्यायाति "। भाष्यकारस्तु नैतन्मेने । तथाहि, उपध्मानीयोपधत्वपक्षे 'उब्जिजिषति' इति न सिध्यति, अभ्यासे बकारमात्रश्रवणप्रसङ्गात् । हलादिःशेषेण जकारस्य निवृत्तिः । यदि तु "पूर्वत्रासिद्धमद्विर्वचने" (प०आ०१२५) इत्युक्तेः सबकारस्य द्वित्वं तदा स्पष्ट एव बकारस्य शेषः । अथ "उभौ साभ्यासस्य" (पा०सू०८-४-२१) इत्यनेनानित्यताज्ञापनाद् द्विर्वचनेऽप्यसिद्धत्वमाश्रीयते, 'औजिढत्' इत्यत्र यथा; तथाप्यभ्यासे उपध्मानीयस्य शेषे "अभ्यासे चर्च" (पा०सू०८-

४-५४) इति जश्त्वेन बकार एव श्रूयेत। इष्यते त्वभ्यासे जकार इति प्राञ्चः। वस्तुतस्तु द्वितीयपक्षे उपध्मानीयमात्रमभ्यासे श्रूयेत तच्चोच्चारयितुमप्यशक्यम्। जश्त्वं तु दुर्लभं, प्रकृतिचरां प्रकृतिचर इत्यष्टमे सिद्धान्तयिष्यमाणत्वात् उपध्मानीयेऽच्त्वस्यापि सत्त्वेन तावन्मात्रद्वित्वापत्त्याऽभ्यासे दकारदौर्लभ्याच्च। किञ्च अत्र पक्षे अस्मात् घञि कृते उपध्मानीयस्य जश्त्वे 'अभ्युब्जाः' 'समुब्जाः' इति स्यात्। इष्यते तु 'अभ्युद्गः' 'समुद्गः' इति। नन्वत एव "कुप्वोः" (पा०सू०८-३-३७) इत्यधिकारे "सोपदादौ" (पा०सू०८-३-३८) इति सूत्रे 'उपध्मानीयस्य च' इति वार्त्तिकेन कवर्गे परत उपध्मानीयस्य सकारो विधीयते। ततो जश्त्वेन दत्वं विधीयत इति चेत्? सत्यम्, 'उपध्मानीयस्य च' इति वार्त्तिकारम्भ एव तु गौरवार्हं इति ब्रूमः। बकारोपधोऽयमिति वृत्तिकारमते तु बकारस्य द्वित्वनिषेधः 'समुद्गः' इत्यादौ दकारादेशश्चेत्युभयमपि वचनेनैव साधनीयं स्यात्। तस्माद्दकारोपध एवायम् 'अभ्युद्गः' 'समुद्गः' इति यथा स्यात्। कथं तर्हि 'उब्जिता' 'उब्जितुम्' इत्यादि सिध्यतीति चेत्? शृणु, "भुजन्युब्जौ पाण्युपतापयोः" (पा०सू०७-३-६१) इत्यस्मिन्कुत्वाभावनिपातनार्थे सूत्रे बकारोच्चारणेनानुमीयते—उब्जेरकुत्वविषये दकारस्य भकारविधायकं बकारविधायकं वा वचनमस्तीति तच्चानुमीयमानं वचनं 'भ उद्जेः' इति वा 'ब उद्जेः' इति वा। उभयथापि "स्तोः श्चुना श्चुः" (पा०सू०८-४-४०) इत्यस्यानन्तरं कल्पते। उद्जेः स्तोर्दकारस्येति यावत्। श्चुना योगे भकारो बकारो वा भवतीति सूत्रार्थः। उद्जेरिति किम्? तज्जः। श्चुनेति किम्? अभ्युद्गः, समुद्गः। इह हि "चजोः कुघिण्ण्यतोः" (पा०सू०७-३-५२) इति कुत्वे कृते श्चुना योगो नास्ति, 'स्तोः' श्चुना' इति पदद्वयोपजीवनार्थं चोक्तस्थले एव कल्पनं युक्तम्। अन्यथा बहुतरकल्पने गौरवं स्यात्। एवम् 'उब्जिजिषति' इत्यपि सिद्धम् "नन्द्राः" (पा०सू०६-१-३) इति दकारस्य द्वित्वनिषेधात्। न च परत्वाज्झत्वबत्वे "पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य" (भा०इ०) इति वक्ष्यमाणत्वात्। अन्तरङ्गत्वाज्झत्वबत्वे इत्यपि न, असिद्धत्वादेव। न च "पूर्वत्रासिद्धीयमद्विर्वचने" (प०भा०१२५) इत्यसिद्धत्वप्रतिषेधः शङ्क्यः, द्वित्वे कर्त्तव्ये सति हि स निषेधः, न तु द्वित्वनिषेधेऽपि। इह तु "नन्द्राः" (पा०सू०६-१-३) इति सूत्रेण द्वित्वनिषेधे कर्त्तव्ये निर्बाधमेवासिद्धत्वमिति दिक्।

अथवा माऽस्तु वाक्यशेषानुमानं, "भुजन्युब्जौ (पा०सू०७-३-६१) इति निपातनादेव बकारोऽस्तु। न चैवमसिद्धताविरहाद्दकारस्यैव

द्वित्वं स्यादिति वाच्यम्, दकारोपधनिर्देशसामर्थ्याज्जिशब्दस्य द्वित्वे कृते ततो दकारस्य बकारप्रवृत्तेः। न चास्मिन्पक्षे 'अभ्युद्रः' इत्यादावपि बकारप्रसङ्गः, अकुत्वविषये एव बकारो निपात्यते इत्यभ्युपगमात। नन्वेवं कुत्वविषये चरितार्थत्वात्कथं दकारोपदेशस्य सामर्थ्यमुक्तम्। येन द्वित्वानन्तरमेव बकारः प्रवर्त्तेतेति चेत् ? अनभिधानात। अतो घञादि माऽस्तु, निपातनं चैवमविशेषेणास्तु। 'अभ्युद्रः' 'समुद्रः' इत्येतन्नोब्जे रूपम्, किन्तु उपसर्गद्वयपूर्वकाद्रमेः "अन्येष्वपि दृश्यते" (पा०सू०३-२-१०१) इति डप्रत्ययः। व्युत्पत्तिमात्रं चेदम, रूढिशब्दत्वात। "समुद्रकः सम्पुटकः" (अ०को०२-६-१३९) इत्यमरः। तदेवमयोगवाहानां शर्षूपदेशस्य जश्त्वाभावरूपं प्रयोजनं वार्त्तिकमतेऽस्ति। भाष्यकारमते तु नास्तीति स्थितम्। तथाः षत्वमपि प्रयोजनं 'सर्पिःषु' 'धनुःषु'। "नुम्विसर्जनीयशर्व्यवायेपि" (पा०सू०८-३-५८) इति सूत्रे विसर्जनीयग्रहणं न कर्त्तव्यं भवति शर्व्यवाये इत्येव सिद्धत्वात्। नुम्ग्रहणं तूभयथाऽपि कर्त्तव्यमेव। नुम्स्थानिकेनैवानुस्वारेण व्यवधाने यथा स्यात्, इह मा भूत् 'पुंसु' इति। नुम्ग्रहणं हि स्वस्थानिकस्यानुस्वारस्य लक्षकम्, अन्यथाऽसम्भवात्। न हि इण्कवर्गाभ्यामुत्तरः सकारो नुमा व्यवहितः षत्वविधौ सम्भवति, अनुस्वारे षत्वस्यासिद्धत्वादित्याहुः। अस्तु वा स्थानिवद्भावेन नुम्त्वम्, तथापि स्वाश्रयस्यानुस्वारत्वस्यापि सत्त्वात शर्त्वेनैव सिद्धे नियमार्थता युक्ता। नियमश्च सजातीयापेक्ष इत्यनुस्वारेण व्यवाये चेद्भवति तर्हि नुमैव न त्वन्येनेति फलितम्। वस्तुतस्त्वतिदेशं प्रति अनुस्वारस्यासिद्धत्वादतिदेश एव दुर्लभः 'सुहिन्सु' इत्यादौ विधायकत्वसम्भवे नियामकत्वानुपपत्तिश्च, तथापि लक्ष्यानुरोधाल्लक्षणेत्येव शरणम्, यथाऽट्कुप्वाङ्सूत्रे। तत्र प्रेन्वनादौ णत्वं मा भूत् प्रोम्भणादौ च स्यादित्येवमर्थं लक्षणेति चेत् ? इहापि 'सुहिन्सु' 'पुंसु' इत्यादौ मा भूदिति तुल्यम्। णत्वविधावनुस्वारमात्रे लक्षणा षत्वे तु नुम्स्थानिक एवेत्यन्यदेतत्। अस्मिंश्च पक्षे शर्षूपदेशेऽपि झल्त्वमिव हल्त्वयत्वे अपि नान्तरीयकत्वादेव सिद्धे। तत्फलं तूत्तरवार्त्तिकव्याख्यानात्समनन्तरमेव स्फुटी भविष्यति। तथा खर्त्वमपि। तेन "कुप्वोः ≍क≍पौ च" (पा०सू०८-३-३७) इति सूत्रान्तर्गतो विसर्गः सिद्धः। एवञ्च सौत्रनिर्देशेनैवोक्तवार्त्तिकस्यार्थो ज्ञाप्यते इति बोध्यम्। अनेन सौत्रं विसर्गग्रहणमेवोपष्टभ्य शर्षूपदेशं प्रत्याचक्षाणा यथाश्रुतमट्सूपदेशपरं वृत्तिग्रन्थं व्याचक्षाणाः परास्ताः, अट्सूपदेशेनाल्त्वाच्त्वयोर्लाभेऽपि

हल्त्वयत्वालाभात्, तत्फलस्य च वक्ष्यमाणत्वात्। न चाट्स्वेव यकारोत्तरमुपदेशात्तल्लाभ इति वाच्यम्, तथा सति 'पयःसु' इत्यादाविणः परत्वेन षत्वापत्तेः, अचत्वासिद्ध्या "समः सुटि" (पा०सू०८-३-५) इत्यत्रत्यकैयटादिग्रन्थविरोधापत्तेश्चेति दिक्।

अविशेषेणेत्यादि वार्त्तिकस्यायमर्थः—यत्र यत्र प्रदेशे प्रयोजनं दृश्यते तत्र तत्रोपदेशः कर्त्तव्यः, प्रयोजनानि तु संयोगसंज्ञादीनि पञ्चेति। तथाहि, वार्त्तिकमते उब्जेरुपध्मानीयोपधतया उपध्मानीयस्य हल्संज्ञां विना संयोगसंज्ञा न सिध्यति। जश्त्वं त्वसिद्धम्। ततश्च "संयोगे गुरु" [पा०सू०१-४-११] इति गुरुसंज्ञाया अपि विरहाद् 'उ३ब्जक' इत्यत्र "गुरोरनृतः" [पा०सू०८-२-८६] इति प्लुतो न स्यात्। तस्मात्प्लुतगुरुसंज्ञाहल्संज्ञानामुत्तरोत्तरसापेक्षतया प्लुतसिद्ध्यर्थं हल्संज्ञा एषितव्या। तदेतदभिप्रेत्योक्तम्—"संयोगसंज्ञा प्रयोजनम्" इति। तथोपधासंज्ञाऽपि प्रयोजनम्—'निष्कृतं' 'दुष्कृतम्' "इदुदुपधस्य च" [पा०सू०८-३-४१] इति षत्वं यथा स्यात्। भाष्यकारस्त्वाह—इदुदुपधस्थानिको यो विसर्ग इति व्याख्यानान्नेदं प्रयोजनम्, उपधाग्रहणप्रत्याख्यानाद्वा। इदुद्भ्यां परस्य विसर्गस्येत्येवेष्टसिद्धिरिति। अलोन्त्यविधिश्च प्रयोजनम्—'वृक्षस्तरति'। विसर्जनीयान्तस्य पदस्य स इति पक्षे अन्त्यस्य सत्वं यथा स्यात्। पदस्य यो विसर्जनीय इति व्याख्यानात् "निर्दिश्यमानस्य"[पा०सू०१२] इति परिभाषया वा सिद्धत्वादिदमपि न प्रयोजनम्। द्विर्वचनं च प्रयोजनम्। 'उरः कः, उरः पः' "अनचि च" [पा०सू०८-४-४७] इत्यच उत्तरस्य यरो विधीयमानं द्वित्वं सिद्धं भवति। तथा स्थानिवद्भावप्रतिषेधोऽपि प्रयोजनम्। यथा 'उरः केण' इत्यादौ अड्व्यवायेति णत्वं सिद्धं भवति। एवं 'व्यूढोरस्केन' इत्यादावपि प्राप्नोति स्थानिवद्भावात्सकारस्य तत्र "अनल्विधौ" [पा०सू०प०१-१-५६] इति प्रतिषेधोऽल्त्वे सति सिध्यति। न च "पूर्वत्रासिद्धे न स्थानिवत्" [भा०इ०] इति निषेधोऽस्त्विति वाच्यम्, न पदान्तसूत्रशेषभूतस्य तस्य "अचः परस्मिन्" [पा०सू०१-१-५७] इत्येतद्विषयकत्वात्। स्थानिवद्भावं प्रति त्रिपादीस्थस्यासिद्धतया न्यायसिद्धं तदिति पक्षे तु नेदं प्रयोजनम्। 'उरः केण' इति णत्वं 'संस्कर्ता' इत्यत्र सकारस्य द्वित्वं चाधिकं प्रयोजनं बोध्यमिति दिक्। यद्यपि सर्वमिदमट्शरोरुपदेशेन सिद्ध्यत्येव, तथापि वार्त्तिकाक्षररचनाया द्वेधाऽपि सम्भव इति भावः॥

लण् [मा०सू०६]। अत्राकारोऽनुनासिकः प्रतिज्ञायते, न तु हका-

रादिष्विवोच्चारणार्थः। तेन "उरण् रपरः" [पा०सू०१-१-५१] इत्यत्र प्रत्याहारग्रहणं भवति। प्रत्याहारग्रहणे ज्ञापकस्तु "ऋकारलृकारयोः सवर्णविधिः" [का०वा०] इति वार्तिकनिर्देशः। ननु "अइउण्" [मा० सू०१] इत्यत्रानुबद्धो णकारः स एवेहानुबध्यते। तेनाण्ग्रहणेष्विण्ग्रहणेषु च पूर्वेण परेण वेति सन्देहः प्राप्नोति। तस्मादसन्देहायेहानुबन्धान्तरमेव कुतो न कृतमिति चेत्? न, "व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्" [प०भा०१] इति परिभाषां ज्ञापयितुमनुबद्धस्यैव पुनरनुबन्धात्।

ञमङणनम्। झभञ् [मा०सू०७-८]। अत्र मकारानुबन्धो भाष्ये प्रत्याख्यातः। स हि प्रत्याहारत्रये उपयुज्यते—अम् यम् ङमिति। तच्च त्रयं ञकारेणैव निर्वहति। तथाहि, "पुमः खय्यञ्परे" इत्येवास्तु। न च झकारभकारपरः खयस्ति, येनातिप्रसङ्गः स्यात्। तथा "हलो यञां यञि लोपः" इत्येव पाठ्यम्। न च झकारभकारौ झकारभकारपरौ स्तः। हल उत्तरयोस्तयोः सम्भवे तु "झरो झरि" [पा० सू०८-२-३९] इति लोपेन भाव्यमेव। तथा "ङञो ह्रस्वादचि ङञुण्नित्यम्" इति पाठ्यम्। न च झकारभकारौ पदान्तौ स्तः। उज्झेर्लभेश्च क्विपि तौ स्त एवेति चेत्? न, उज्झेर्दोपधतया संयोगान्तलोपे सति 'उद्' इति रूपाभ्युपगमात्, लभेस्तु जश्त्वविधानात्। नन्वेवमप्यागमिनस्त्रयो ङणनेभ्यः परे अचः, आगमास्तु पञ्चेति संख्यातानुदेशो न स्यादिति चेत्? न, "यथासंख्यम्" [पा०सू०१-३-१०] इत्यत्र हि विध्यर्थप्रमितिवेलायां निर्दिश्यमानगतसंख्यासाम्यमाश्रीयते, न तु लक्ष्यसंस्कारवेलायां प्रयोगगतम्। तस्मान्माऽस्तु मकारोऽनुबन्ध इति स्थितम्।

घढधष्॥ जबगडदश्॥ खफछठथचटतव्॥ कपय्॥ शषसर्॥ हल् [मा०सू०९।१०।११।१२।१३।१४)॥ इति माहेश्वराण्यक्षरसमाम्नायसूत्राणि। अत्रायं संग्रहः—

> एकस्मान्ङञणवटा द्वाभ्यां षस्त्रिभ्य एव कणमाःस्युः।
> ज्ञेयौ चयौ चतुर्भ्यो रः पञ्चभ्यः शलौ षड्भ्यः॥ इति।

अस्यार्थः—ङञणवटा एकस्मात्परं ग्राह्याः स्युः। तथाहि, ङकार एकारादेव परो ग्राह्यः "एङि पररूपम्" (पा०सू०६-१-९४) इति यथा। ननु "षिद्भिदादिभ्योऽङ्" (पा०सू०३-३-१०४) "अस्यतिवक्तिख्यातिभ्योऽङ्" [पा०सू०३-१-५२] इत्यकारेण ग्रहणमस्त्विति चेत्? न, "आदिरन्त्येन" [पा०सू०१-१-७१] इत्यत्र "अणुदित्सवर्णस्य च" [पा०सू०१-१-६९] इत्यतोऽप्रत्यय इत्यनुवृत्तेः। अत एव "रोः सुपि" [पा०सू०८-

३-१६] इति न प्रत्याहारग्रहणम्। "सुपि च" [पा०सू०७-३-१०२] इत्यत्र तु अप्रत्यय इति प्रतिषेधो नास्ति, यञादाविति विशेषणाद् उत्तरत्र च "बहुवचने झलि" [पा०सू०७-३-१०३] इति विशेषणात्। "सुप्तिङन्तं पदम्" [पा०सू०१-४-१४] इत्यत्र तिङ्साहचर्यात् "शास इदङ्हलोः" [पा०सू०६-४-३४] इत्यत्र तु अङ्ग्रहणसामर्थ्यादपि प्रत्याहारग्रहणं न भवति। अङादौ हलादौ चेति हि व्याख्याने अङ्हलोरिति व्यर्थमेव स्यात्। द्विविधा एव हि क्ङितः प्रत्यया अङादयो हलादयश्च। 'व्यतिशासे' इत्यत्र तु क्ङित्त्वमेव नास्ति, अटा सहैकादेशस्य स्थानिवद्भावेनाङादित्वाच्च। "ऋदृशोऽङि" [पा०सू०७-४-१६] इत्यपि न प्रत्याहारः, ऋकारान्तेषु "ऋच्छत्यॄताम्" [पा०सू०७ ४-११] इति गुणविधानाज्ज्ञापकात्। "सनि च" [पा०सू०२-४-४७] "इङश्च" [पा०सू०२-४-४८] इति न प्रत्याहारः "इको झल्" [पा०सू०१-२-९] इति कित्त्वविधानात् "अज्झनगमां सनि" [पा०स०६-४-१६] इति दीर्घविधानाच्च। इङन्तानां सनि गम्यादेशे हि सति उदाहृतसूत्रद्वयं निर्विषयं स्यात्। "परिमाणाख्यायां सर्वेभ्यः" [पा०सू०३-३-२०] "इङश्च" [पा०सू०३-३-२१] इत्यपि न प्रत्याहारः वैयर्थ्यप्रसङ्गात्। तथाहि, इकारान्तेभ्य एरचा भाव्यम्। उकारान्तेभ्य "ऋदोरप्" [पा०सू०३-३-५७] इत्यपा। लृकारान्तास्सन्त्येव न। एजन्तानामप्यनैमित्तिकेनात्वेन प्रत्ययोत्पत्तेः प्रागेव भाव्यम्। अतः प्रत्ययोत्पत्तिवेलायामेजन्ता न सन्त्येव। ऋदन्ताः परमवशिष्यन्ते। तत्र 'उः' इत्येव लाघवाद् ब्रूयात्। वस्तुतस्तु सामान्यलक्षणेनैव ऋदन्तेषु घञः सिद्धत्वात्सूत्रमेवेदं न कुर्यात्। अथोच्येत—"इङश्च" [पा०सू०३-३-२१] इत्यारम्भसामर्थ्यादिवर्णोवर्णान्तेष्वेवाजब्भ्यां सह वैकल्पिको घञ् समाविशत्विति, तदपि न; एवं हि सति अजपोर्विधावेव वाग्रहणं कुर्यात्। "क्रीङ्जीनां णौ" [पा०सू०६-१-४८] इति न प्रत्याहारः क्रीज्योः पृथग्ग्रहणवैयर्थ्यापत्तेः। न चेकारान्तानां मध्ये एतयोरेवेति नियमार्थं पृथग्ग्रहणमिति वाच्यम्, एवं हि 'इक' इत्येव ब्रूयात्, एङन्तानां सामान्यलक्षणेनैवात्वस्य सिद्धत्वात्। "इङ्धार्योः" [पा०सू०३-२-१३०] इत्यपि न प्रत्याहारः, धारिणा साहचर्यात्। तस्मात्सिद्धं ङकार एकस्मादेवेति।

तथा ञकारोऽप्येकस्मादेव। "अतो दीर्घो यञि" [पा०सू०७-३-१०१] इति।

तथा "अइउण्" [मा०सू०१] इत्येव णकारोऽप्येकस्मादेव। अणिति यथा। अथ "इणः षीध्वम्" [पा०सू०८-३-७८] इत्यादाविण्प्रत्याहारो-

ऽप्यनेन कुतो नेति चेत् ? न, "अचि श्नुधातुभ्रुवां य्वोः" [पा०सू०६-४-७७] इत्यत्रेकारोकारयोः स्वरूपेण निर्देशात् । अन्यथा हि संहितायां मात्रालाघवात्पदच्छेदेऽप्यर्द्धमात्रालाघवाद् "इणः" इत्येव ब्रूयात् । व्याख्यानाच्च पूर्वेण न तु परेण ग्रहीष्यते । व्याख्यानं च सिद्धान्तेऽपि शरणम् । य्वोरित्यपि हि निर्देशे किं ह्रस्वयोर्ग्रहणमुत दीर्घयोरुत यकारवकारयोरिति सन्देहः स्यादेव । एवञ्च "एच इग्घ्रस्वादेशे" [पा०सू० १-१-४८] इति सूत्रे इणित्येव प्रतिपत्तिलाघवार्थे वक्तव्ये इग्ग्रहणमपीह लिङ्गम् । इण्ग्रहणे हि तत्र यथासंख्यप्राप्तिरेव नेति न तत्परिहाराय यतितव्यमिति दिक् ।

एवं वकारोऽप्येकस्मादेव "नश्छव्यप्रशान्" [पा०सू०८-३-७] इति "एचोऽयवायावः" [पा०सू०६-१-७८] इति सूत्रे अविति न प्रत्याहारः, अयादिसाहचर्यात् ।

एवं टकारोऽप्येकस्मात् "अट् कुप्वाङ्" [पा०सू०८-४-२] इति ।

द्वाभ्यां षः "एकाचो बशो भष् झषन्तस्य स्ध्वोः" [पा०सू०८-२-३७] इति यथा ।

ककारस्त्रिभ्यः । "अकः सवर्णे" [पा०सू०६-१-१०१] "इको यण्" [पा०सू०६-१-७७] "इसुसुक्तान्तात्कः" [पा०सू०७-३-५१] इति यथा ।

"लण्" [मा०सू०६] इत्यत्रत्यो णकारोऽपि त्रिभ्यः "अणुदित्सवर्णस्य" [पा०सू०१-१-६९] इत्येक एवाण्, । "इणः षीध्वम्" [पा०सू० ८-३-७८] इत्यादयः सर्वे इणः, "इको यण्" [पा०सू०६-१-७७] इत्यादौ यण् च । तत्र यण् तावत्पूर्वेण न सम्भवत्येव । इण्तु सम्भवन्नपि ज्ञापकाद्यक्तः । अणस्तु उभाभ्यां ग्रहणे स्थिते क पूर्वेण क वा परेणेति विवक्षायां ग्रहणकशास्त्रे परेणैवान्यत्र तु पूर्वेणैवेति सिद्धान्तः । उक्तं हि-"व्याख्यानतो विशेषप्रतिपत्तिः" [प०भा०१] इति । न हि "परेश्च घाङ्कयोः" [पा०सू०८-२-२२] इत्यादौ व्याख्यानादन्यन्नियामकमस्ति । किञ्च, अण् ग्रहणानि तावत्पञ्च-"उरण् रपरः" [पा०सू०१-१-५१] "अणुदित्सवर्णस्य" [पा०सू०१-१-६९] "ढ्रलोपे पूर्वस्य दीर्घोऽणः" [पा०सू० ६-३-१११] "केऽणः" [पा०सू०७-४-१३] "अणोऽप्रगृह्यस्य" [पा०सू०८-४-५७] इति । तत्र "उरण् रपरः" [पा०सू०१-१-५१] इति तावत्पूर्वेण "ऋत इद्धातोः" [पा०सू०७-१-१००] इति धातुग्रहणाज्ज्ञापकात् । तद्धि 'मातृणाम्' इत्यादिव्यावृत्त्यर्थं क्रियते । परेण च ग्रहणे "नामि" [पा०सू०६-४-३] इति दीर्घस्यापि रपरत्वापत्त्या व्यावर्त्याप्रसिद्धिः । ननु 'चिकीर्षति' इत्यत्र "अज्झनगमाम्" [पा०सू०६-४-१६] इति दीर्घे

रपरत्वे च सति "उपधायाश्च" [पा०सू०७-१-१] इतीत्वमेषितव्यम्। तद्वत् 'मातॄणाम्' इत्यत्रापि प्रसङ्गे तद्व्यावर्तकतयोत्तरार्थं धातुग्रहणं भविष्यतीति चेत्? न, एवं हि सत्युत्तरत्रैव कुर्यात्। इह करणं ज्ञापकमेव। तथा च वक्ष्यति-"नुड्वाच्य उत्तरार्थं तु, इह किञ्चित् त्रपो इति" इति। किञ्च अण्ग्रहणसामर्थ्यादपि पूर्वेणैवायम्। यदि हि परेण स्याद् 'उरच्' इत्यज्ग्रहणमेव कुर्यात् 'कृतिः' 'कृतं' 'प्रकृतं' 'नॄःपाहि' मातॄणाम्' इत्यादावाद्युदात्तानुदात्तस्वरितानुनासिकदीर्घाणां रपरतायाः परेणाण्ग्रहेणोपपादयितव्यायास्तावतापि लाभात्। 'कर्त्ता' 'कारकः' इत्यादौ गुणवृद्धिप्रसङ्गे एचामवर्णस्य चाविशेषाद्रपरत्वस्य विकल्पेन प्रसङ्ग इत्यप्यज्ग्रहणेन सिध्यत्येव।

स्यादेतत्, 'कर्त्र्यर्थम्' इत्यत्र इको यणि रपरत्वे रेफद्वयश्रवणार्थमण्ग्रहणं स्यात्। नह्येतदज्ग्रहणेन सिध्यति। "हलो यमाम्" [पा०सू० ८-४-६४] इति लोपस्तु वैकल्पिकः "झयो होऽन्यतरस्याम्" [पा०सू० ८-४-६२] इत्यतोऽन्यतरस्यांग्रहणानुवृत्तेः। अत्र च ज्ञापकं ग्रहणकशास्त्रेऽण्ग्रहणम्। तद्धि 'सय्यँन्ता' 'सव्वँत्सरः'। यल्ँलोकम्' इत्यादौ परसवर्णस्य सानुनासिकस्य यञ्ग्रहणेन ग्रहणाद्, "अनचि च" (पा०सू० ८-४-४७] इति द्वित्वे कृते पक्षे यवलानां त्रिकस्य श्रवणार्थं क्रियते। "हलोयमाम्" [पा०सू०८-४-६४] इत्यस्य नित्यत्वे तु व्यर्थमेव तत्स्यात्। यद्यपि गुणानामभेदकत्वेनैव सानुनासिकयवलानां द्वित्वसिद्धेर्ग्रहणकशास्त्रेऽज्ग्रहणमेवोचितं न त्वण्ग्रहणं, तथापि 'गुणा भेदकाः' [प०भा०] इत्यपि पक्षं ज्ञापयितुमण्ग्रहणम्। भेदकाभेदकपक्षयोश्च जातिव्यक्तिपक्षयोरिव लक्ष्यानुरोधाद्व्यवस्था। अत एव "चतसर्याद्युदात्तनिपातनम्" [भा०इ०] इत्यादि सङ्गच्छते। अत एव च "अष्टन आ विभक्तौ" [पा०सू० ७-२-८४] इत्यादाविदमस्त्यदाद्यत्वे चानुनासिकोनेति वक्ष्यामः।

यत्तु विकल्पानुवृत्तौ ज्ञापकान्तरवर्णनम्-अनुवर्त्तते विभाषा शरोऽचि यद्वारयत्ययं द्वित्वं, नित्ये हि तस्य लोपे प्रतिषेधार्थो न कश्चित्स्याद् इति, तत्तु भाष्ये दूषितम्। तथाहि, लोपस्य नित्यत्वे "अचो रहाभ्याम्" [पा०सू०८-४-४६] इति द्वित्वेनारम्भसामर्थ्यात्तद्बाधः। द्विविधा एव हि यरः-यमो झरश्चेति। तत्र "हलो यमाम्" [पा०सू०८-४-६४] इति "झरो झरि" [पा०सू०८-२-३९] इति च लोपे कृते द्वित्वं वृथा स्यात्। किं तर्हि तयोर्योगयोरुदाहरणमिति चेत्? यत्रान्तरेण द्वित्वं व्यञ्जनत्रयं लभ्यते, यथा आदित्यो देवताऽस्य आदित्यः, प्रत्तम्, अवत्तमिति। एवं स्थिते 'चतुर्षु' इत्यत्रापि यदि द्वित्वं स्यात्तर्हि लोपो

न स्यादेव। ततश्च सार्थकः "शरोऽचि" [पा०सू०८-४-४९] इति निषेधः कथं विभाषानुवृत्तिं ज्ञापयेदित्यास्तां तावत्। सर्वथापि विकल्पानुवृत्तेः स्थितत्वात्पाक्षिकरेफद्वयश्रवणार्थमण्ग्रहणमस्त्विति।

अत्रोच्यते, 'कर्त्रर्थम्' इत्यादौ सत्यपि रपरत्वे रेफद्वयश्रवणं दुर्लभम् रो रि" [पा०सू०८-३-१४] इति लोपात्। न च तत्र 'पदान्तस्य' इति व्याख्यातुं युक्तं, जर्गृधेर्लङ् 'अजर्घाः' पास्पर्द्धेर्लङ् 'अपास्पाः' इत्यादेरसिद्धिप्रसङ्गात्। न चाण्ग्रहणसामर्थ्यात्तद्बाधः, पूर्वेणापि ग्रहणे ऽबाधेनैवोपपत्तेरिति दिक्। तस्माद्धातुग्रहणसामर्थ्यादण्ग्रहणसामर्थ्याद्वा "उरण् रपरः" इति पूर्वेण ग्रहणमिति स्थितम्। वस्तुतस्तु धातुग्रहणमेव ज्ञापकम्, अण्ग्रहणस्य 'लाकृतिः' इत्यादौ लपरताफलमित्यपि वक्तुं शक्यत्वात्। "अणुदित्सवर्णस्य चाप्रत्ययः" [पा०सू०१-१-६९] इति तु परेणैव "ऊॠत्" [पा०सू०७-४-७] इति लिङ्गात्। तत्र हि "कॄत संशब्दने" [चु०उ०] इत्यस्माच्चुरादिण्यन्ताल्लुङि चङि 'अचीकृतत्' इत्यत्र ॠकारस्य दीर्घस्यापि स्थाने ह्रस्व एव यथा स्यादित्येवमर्थं तपरकरणं कृतम्। ग्रहणकशास्त्रे पूर्वेण ग्रहणे तु दीर्घस्य ॠकारस्य न स्थानित्वं न वाऽऽदेशत्वं प्रसक्तमिति व्यर्थं तपरत्वं स्यात्। ननु सत्यपि परेण ग्रहणे "ऊॠत्" [पा०सू०-७-४-७] इत्यत्र तपरत्वं वृथैव। भाव्यमानेन सवर्णग्रहणाप्रसक्तेरिति चेत्? न, वक्ष्यति हि तत्र वृत्तिकारः-न चायम्भाव्यमानोऽण् किन्तु आदेशान्तरनिवृत्त्यर्थं स्वरूपेणाभ्यनुज्ञायते इति। कृते तु तपरत्वे तद्बलादेव दीर्घस्थाने भाव्यमानताऽपि लभ्यते इत्यन्यदेतत्। तस्माद् ग्रहणकशास्त्रेण परेणेति स्थितम्। तत्फलं तु "उरण् रपरः" [पा०सू०१-१-५१] इत्यत्र उरित्यनेन ॠकारस्य ग्रहणाद् "ॠत इद्धातोः" [पा०सू०७-१-१००] "उदोष्ठ्यपूर्वस्य" [पा०सू०७-१-१-१०२] इत्यादौ रपरत्वसिद्धिः। "ढ्रलोपे पूर्वस्य दीर्घोऽणः" (पा०सू०६-३-१११) इत्यत्रापि हलामणामसम्भवादेचान्तु विशेषाभावादनर्थकमेवाण्ग्रहणं स्यात्। ततश्च "अचश्च" (पा०सू०१-२-२८) इत्येव सिद्धमित्यण्ग्रहणसामर्थ्यात्पूर्वेण ननु "वृहू उद्यमने" [तु०प०] अस्मात्तृचि ऊदित्वादिडभावे गुणे ढत्वधत्वष्टुत्वढलोपेषु रेफस्य दीर्घे स्थानसाम्याद्दकारे ढलोपस्यासिद्धत्वाद् "उपधायाश्च" (पा०सू०७-१-१-१०१) इतीत्वे पूर्ववद् गुणे 'वर्ढा' इति यथा स्यादिति परेण ग्रहणं स्यात्। एवं तर्हि 'तृतीया' इति निर्देशाल्लिङ्गात्पूर्वेणैव। परेण हि ग्रहणे "हलः" [पा०सू०६-४-२] इत्यत्राप्यस्यैवाण्ग्रहणस्यानुवृत्तेस्त्रेः सम्प्रसारणे कृते दीर्घः स्यात्। तथा दृढादिषु वृढशब्दस्य पाठोऽपि ज्ञापको

बोध्यः । "वृहू उद्यमने" [तु०प०] अस्मान्निष्ठायां ढत्वधत्वष्टुत्वढलोपेषु कृतेषु 'वृढः' इति रूपम् । दन्त्योष्ठ्यादिश्चायम् । "उद्वृहरक्षः सह मूलमिन्द्र" इति दर्शनात् । "मूलमस्यावर्हि" [पा०सू०४-४-८८] इति सूत्रे हरदत्तादिग्रन्थे स्पष्टमेतत् । तुदादौ एतद्धातूत्तरत्वेन पठ्यमानयोः "तृहू स्तृंहू हिंसायाम्" [तु०प०] इति धात्वोरपि निष्ठायां 'तृढः' स्तृढः' इति रूपं बोध्यम् । "दृढः स्थूलबलयोः" [पा०सू०७-२-२०] इति तु इडभावो नकारहकारयोर्लोपो निष्ठातकारस्य ढत्वं च निपात्यते न त्वसिद्धकाण्डस्थढत्वादेरिह प्रवृत्तिरिति वक्ष्यते । तेन 'परिद्रढय्य' 'पारिद्रढी कन्या' इत्यादौ लघुत्वप्रयुक्तो णेरयादेशः ष्यङभावश्च सिध्यतीति दिक् । तेन ढ्रलोपसूत्रे परेणाण्ग्रहणपक्षेऽपि वृढतृढस्तृढे-ष्वेवातिप्रसङ्गो न तु दृढेऽपीति विवेकः । "केऽणः" [पा०सू०७-४-१३] इत्यत्र परेणाण्ग्रहणे 'गोका' 'नौका' 'गीष्का' 'उपानत्का' 'चतुष्कम्' इति षत्वविसर्जनीययोरसिद्धत्वाद्ध्रस्वप्रसङ्गः, तथापीह ह्रस्वश्रुत्योपस्थि-तस्य "अचः" [पा०सू०१-२-२८] इत्यस्याबाधाय पूर्वेण भविष्यति । अबाधेनोपपत्तौ हि बाधो न न्याय्यः । "अणोऽप्रगृह्यस्य" (पा०सू०८-४-५७) इत्यत्र परेण सति—'कर्तृ' 'अग्ने 'वायो' 'मत्यै' 'पपौ' 'माला-माचक्षाणो माल्' 'वृक्षवयतेरप्रत्ययः वृक्षव्' अत्रापि प्राप्नोति । रेफव-र्जिता अन्तस्थाः सानुनासिकनिरनुनासिकभेदेन द्विधेत्युक्तत्वात् । तस्मादिहाप्रगृह्यस्येति पर्युदासादच एवानुनासिको बोध्यः । न चा-ण्ग्रहणसामर्थ्यान्नञिवयुक्तन्यायस्य बाधः, तस्य पूर्वेणाप्युपपन्नत्वात् । अत्र लण्सूत्रे स्थित्वा वृक्षव्शब्दमित्थं कैयटो व्युदपादयत्—वृक्षं वृश्च-तीति क्विपि कृते वृक्षवृश्चमाचष्ट इति णिचि टिलोपे च कृते वृक्षवयते-र्विचि वृक्षव् इति भवति । क्विपि तु "क्वौ लुप्तं न स्थानिवत्" "क्वौ विधिं प्रति न स्थानिवत्" इत्युभयथापि स्थानिवद्भावनिषेधात्सम्प्रसारण-प्रसङ्गो "लोपो व्योर्वलि" [पा०सू०६-१-७६] इति लोपं बाधित्वा तद-पवादस्योठः प्रसङ्गश्च । विचि तु स्थानिवद्भावाद्धल्निमित्तो वलोपो न भवति । नन्वेवमपि वृक्षव्करोतीत्यत्र "हलि सर्वेषाम्" [पा०सू०८-३-२३] इति प्राप्नोति । न च स्थानिवद्भावः पूर्वत्रासिद्धे तन्निषेधादिति चेत् ? न, "भो भगो" [पा०सू०८-३-१७] इत्यतोऽशीत्यनुवर्त्याशि हलि तद्विधानादिति । न च विच्पक्षेऽपि णिचः प्राग्भाविनं क्विपमेवा-श्रित्योठ् प्रसञ्जनीयः, अन्तर्भूतक्विबाश्रयतयाऽन्तरङ्गे कर्त्तव्ये बहिर्भूत-णिजपेक्षतया बहिरङ्गस्य टिलोपस्यासिद्धत्वात् । इदं त्विह वक्तव्यम् । विच्पक्षेऽप्येकदेशविकृतस्यानन्यत्वेन व्रश्चतिग्रहणेन ग्रहणाद् "व्रश्च"

[पा०सू०८-२-३६] इति षत्वं दुर्वारम्। न च णिलोपस्य स्थानिवत्त्वम् 'प(१)दान्तविधौ न' इति निषेधात् "पूर्वत्रासिद्धे न" [भा०इ०] इति निषेधाच्च। तस्मान्नायं वृश्चतिरपि तु वेतिर्वातिर्वा, वृक्षं वेतीति वृक्षवीः वृक्षं वातीति वृक्षवाः। वृक्षव्यं वृक्षवां वाऽऽचष्टे वृक्षव्, विच्, न तु क्विप् ऊठ्प्रसङ्गात्, क्वौ विधिं प्रति स्थानिवत्वनिषेधात्। तथा च देवयतेः 'द्युः' इति सिद्धान्तितम्। न चैवमपि "लोपो व्योः" [पा० सू०६-१-७६] इत्यस्य प्रसङ्गः स्थानिवत्त्वात्। न च पदान्तविधित्वम्, पदान्तश्चेद्विधीयते इत्यर्थात, लोपस्य चानवयवत्वात्। विभावितं चेदं "भो भगो" [पा०सू०८-२-१७] इति सूत्रे कैयटेनेति दिक्।

यत्तु "हलि सर्वेषाम्" (पा०सू०८-३-२२) इति सूत्रे हरदत्तेनोक्तम्- "वृक्षव् करोतीत्येवं रूपः प्रयोगो नास्त्येव, अनभिधानात्। लण्सूत्रे "न पदान्ता हलोणः सन्ति" (भा०इ०) इति भाष्यकारोक्तेश्चानभिधानं निश्चीयते इति, तच्चिन्त्यम् लण्सूत्रभाष्ये "न पदान्ताः परेऽणः सन्ति" इति पाठात् अप्रगृह्यस्येति पर्युदासाश्रयणेनाचामेव कार्यभाक्त्वादितरे कार्यभाजो न सन्तीत्येवंपरतया कैयटेन तद्विवरणाच्च, "ननु चायमस्ति कर्तृ" इत्युत्तरभाष्येणास्य दूषितत्वाच्च, त्वदुदाहृतपाठे उत्तरभाष्यस्योक्तिसम्भवालाभाच्च। अत एव "भो भगो" (पा०सू०८-२-१७) इतिसूत्रे भाष्यकारवृत्तिकारादिभिः सर्वैरपि 'वृक्षव्' इत्युदाहृतम्। स्वयमपीह तथैवोदाहृतमिति पूर्वापरस्वग्रन्थविरोधो भाष्यवृत्तिकैयटादिसकलमहाग्रन्थविरोधो मूलयुक्त्यभावश्चेति तिष्ठतु तावत्।

प्रकृतमनुसरामः। मकारोऽपि त्रिभ्यो ग्राह्यः—"पुमः खय्यम्परे" (पा०सू०८-३-६) "हलो यमां यमि लोपः" (पा०सू०८-४-६४) "ङमो ह्रस्वादचि" (पा०सू०८-३-१२) इति।

चकारश्चतुर्भ्यः—"इकोयणचि" (पा०सू०६-१-७७) "इच एकाचोऽम्" (पा०सू०६-३-६८) "एचोऽयवायावः" (पा०सू०६-१-७८) "पूर्वौ तु ताभ्यामैच्" (पा०सू०७-३-३) इति।

यकारोऽपि चतुर्भ्यः—"अनुस्वारस्य ययि" (पा०सू०८-४-४५) "मय उञः" (पा०सू०८-३-३३) "झयो होऽन्यतरस्याम्" (पा०सू०८-४-६२) "पुमः खयि" (पा०सू०८-३-६) इति।

रः पञ्चभ्यः—"यरोनुनासिके" (पा०सू०८-४-४५) "झरो झरि सवर्णे" (पा०सू०८-२-३९) "खरि च" (पा०सू०८-४-५५) "अभ्यासे चर्च" (पा०सू०८-४-५४) "वा शरि" (पा०सू०८-३-३६)।

(१) "न पदान्त" (पा०सू०१-१-५८) इति सूत्रेण।

शकारः षड्भ्यः—"भो भगो अघो अपूर्वस्य योऽशि" (पा०सू०८-३-१७) "हशि च" (पा०सू०६-१-११४) "नेड्वशि कृति" (पा०सू०७-२-८) "झलां जश् झशि" (पा०सू०८-४-५३) "एकाचो बशो भष्" (पा०सू०८-२-३७)

लकारोऽपि षड्भ्यः—"अलोऽन्त्यस्य" (पा०सू०१-१-५२) "हलि सर्वेषाम्" (पा०सू०८-३-२२) "इड् वलादेः" (पा०सू०प०७-२-३५) "रलो व्युपधात्" (पा०सू०१-२-२६) "झलां जश्" (पा०सू०८-४-५३) "शल इगुपधाद्" (पा०सू०३-१-४५) इति।

अयं च चतुर्दशसूत्रीस्थैर्हलिभरिद्भिः सम्पन्नानामष्टाध्याय्यां व्यवहृतानां प्रत्याहाराणां संग्रहः। तेन सुप्तिङादे रप्रत्याहारस्य "अमन्ताड्डः" (उ०सू०१-११९) इत्युणादिषु व्यवहृतस्य अम्प्रत्याहारस्य "यमिर्अमन्तेष्वनिडेक इष्यते" इति व्याघ्रभूतिना व्यवहृतस्य च "चयो द्वितीयाः शरि पौष्करसादेः" (का०वा०) इति वार्तिककृता व्यवहृतस्य चय्प्रत्याहारस्य चाधिक्येऽप्यदोषः । संख्यानियमश्चायमुत्तरत्र एकचत्वारिंशद्भिर्व्यवहारादध्यवसीयते इति बोध्यम् ।

अत्र श्लोकवार्त्तिकम्—

प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न ।
आचारादप्रधानत्वाल्लोपश्च बलवत्तरः ॥

प्रत्याहारोऽक्षरसमाम्नायः । तत्र येनुबन्धास्तेषामज्ग्रहणेष्वित्युपलक्षणम् । अजादिप्रत्याहारग्रहणेषु । कथं नेति । 'ग्रहणम्' इति शेषः । "आदिरन्त्येन" (पा०सू०१-१-७१) इति सूत्रेण हि अकारमारभ्याऽऽचकाराद्वर्णानां भवन्त्यच्संज्ञा मध्यस्थत्वाविशेषादिकारादीनामिव णकारककारङकाराणामपि स्यात् । ततश्च 'दधि-णकारः' 'दधि-ककारः' 'दधि-ङकारः' इत्यादौ यण् स्यात् । एवमड्ग्रहणे चकारस्यापि ग्रहणाद् 'रुचीनाम्' इत्यादौ "अड्व्यवाये" इति णत्वं स्यात् । एवमिण्ग्रहणेन चकारग्रहणाद् 'रुचिध्वे' इत्यादौ "विभाषेटः"(पा०सू०८-३-७९) इति ढः स्यादिति पूर्वपक्षः पूर्वार्द्धस्यार्थः ।

उत्तरमाह—आचारादिति । आचारोऽत्र सूत्रकृतो निर्देशः । "उणादयो बहुलम्" (पा०सू०३-३-१) "तृषिमृषिकृशेः" (पा०सू०१-२-२५) "ङसिङसोश्च" (पा०सू०६-१-११०) इत्यादौ यणोऽकृतत्वान्मध्यस्थानामप्यनुबन्धानां संज्ञित्वं नेति ज्ञाप्यते इत्यर्थः । समाधानान्तरमाह—अप्रधानत्वादिति । अणित्यादिसंज्ञाः प्रणेतुं तद्रूपप्रतिपादनायानुबन्धा उच्चार्यन्ते । ततश्च परार्थमुपादीयमानतया तेषामप्राधान्यम् । इतरेषां

तु स्वार्थमुपादीयमानत्वात्प्राधान्यम् । तेन तेषामेव संज्ञा न त्वनुबन्धानाम् । "प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः" (प०भा०१०५) इति न्यायात् । नन्वेवमकारस्याच्संज्ञा न स्यात्, संज्ञाप्रतिपादने चकारस्येव तस्याप्यङ्गत्वाविशेषादिति चेत्? न, "स्वं रूपम्" (पा०सू०१-१-६८) इत्यनुवृत्त्याऽऽदेरपि संज्ञित्वात् । स्वं रूपं चादेरेव गृह्यते नान्त्यस्य, सर्वनाम्नां प्रधानपरामर्शकताया औत्सर्गिकत्वात् । इतेति तृतीयया इतोऽप्राधान्यलाभात् । तदेवं संज्ञाप्रवृत्तिकालेऽनुबन्धानां संनिधानमभ्युपेत्य द्वेधा समाहितम् । वस्तुतस्तु तदेव नास्तीत्याह—लोपश्चेति । बलवानेव बलवत्तरः स्वार्थे तरप् । "अल्पाच्तरम्" (पा०सू० २-२-३४) इति यथा । "हलन्त्यम्" (पा०सू०१-३-३) इतीत्संज्ञायां हि कृतायां णकारादीनामच्संज्ञा प्राप्नोति लोपश्च । तत्र परत्वान्नित्यत्वादन्तरङ्गत्वाच्च लोपे कृते संज्ञाप्रवृत्तिकाले णकारादीनामसत्त्वादेव तेषामजादिसंज्ञा नेति भावः । यस्मिंस्तु प्रत्याहारे योऽनुबन्धोऽपेक्षितस्तस्य वचनसामर्थ्यात्तत्प्रवृत्तेः प्राग् लोपाभावः । लुप्तेऽपि वा तस्मिन् भूतपूर्वेण तेन सहित आदिः संज्ञा भविष्यति । अन्तःपातिनां तु लुप्तानां न संज्ञा श्रूयमाणेष्विकारादिषु सावकाशत्वादिति । ननु हल्प्रत्याहारेऽकारस्य प्रवेशो दुर्वारः । न हि तत्र लोपो लभ्यते । ततः प्रागच्संज्ञाविरहेण "उपदेशेऽज्" (पा०सू०१-३-२) इतीत्संज्ञाया अप्रवृत्तेः । एवञ्चाद्यसमाधानमपि दुरुपपादम् । उदाहृतस्याचारस्य "लोपश्च बलवत्तरः" इत्यनेनैव गतार्थत्वादिति चेत्? न, "सोऽस्यादिः" (पा०सू० ४-२-५५) इतिनिर्देशेन प्रथमस्य गुणानां भेदकत्वेन चरमस्य च समाधानस्य सूपपादत्वादिति दिक् ॥

इति श्रीशब्दकौस्तुभे प्रथमस्याध्यायस्य प्रथमे
पादे द्वितीयमाह्निकम् ॥ २ ॥



वृद्धिरादैच् (पा०सू०१-१-१) आकार ऐकार औकारश्च वृद्धिसंज्ञः स्यात् । संज्ञाप्रदेशा "वृद्धिरेचि" (पा०सू०६-१-८८) इत्यादयः । तदुदाहरणमेवास्याप्युदाहरणं बोध्यम् । इहाच्च ऐच्चेतीतरेतरयोगद्वन्द्वः "सुपां सुलुक्" (पा०सू०७-१-३९) इति सुलुग्वा । अथवा समाहारे द्वन्द्वः । नचैवं "द्वन्द्वाच्चुदषहान्तात्" (पा०सू०५-४-१०६) इति टच् स्यादिति वाच्यं, समासान्तविधेरनित्यत्वात् । अत्र ज्ञापकं तु द्वित्रिभ्यां ष मूर्ध्नः" (पा०सू०५-४-११५) इति षविधानम् । तद्धि "बहुव्रीहौ सक्थ्य-

क्ष्णोः" (पा०सू०५-४-११३) इति षचि प्रकृतेऽपि क्रियते । षचश्चित्त्व-सामर्थ्याज्जायमानमन्तोदात्तत्वं बहुव्रीहित्वप्रयुक्तं पूर्वपदप्रकृतिस्वरं यथा बाधते तथा "द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ" (पा०सू०६-२-१९७) इति विधीयमानमन्तोदात्तत्वविकल्पं मा बाधिष्टेत्येवमर्थम् । तच्च "द्वित्रिभ्याम्" ( पा०सू०६-२-४३ ) इत्यस्य क्वचिल्लब्धावकाशत्वे सत्येव सङ्गच्छते, न त्वन्यथा । अवकाशश्च समासान्तानामनित्यतायां सत्यामेव लभ्यते । 'त्रिमूर्द्धानं सप्तरश्मिं गृणीषे' इति यथा । तस्मात्षप्रत्ययविधानं ज्ञापकमिति स्थितम् । तथा "द्वित्रिभ्याम्" (पा०सू०६-२-१९७) इति सूत्रे बहुव्रीहिग्रहणमपीह ज्ञापकम् । अन्यथा 'पाद्दन्मूर्द्धसु' इत्येव निर्दिशेत् । एवं हि सति कृतसमासान्तपाद्दत्प्रक्रमोऽपि न विरोत्स्यते । बहुव्रीहिभिन्नं च समासान्तविरहादेव वारयिष्यते ।

ननु षष्ठीतत्पुरुषादिवारणाय बहुव्रीहिग्रहणमस्तु । तथाहि, द्वयोर्दन्ता इति विगृह्य 'द्विदतः पश्य' इति प्रयोगे "पद्दन्" (पा०सू०६-१-६३) इति दतादेशः । स एवेह निरनुबन्धकत्वाद्वा गृह्येत । न च "पद्दन्" (पा०सू०६-१-६३) इति सूत्रे तदन्तविधिदौर्लभ्यात्कथमेतदिति वाच्यम् "ष्यङः सम्प्रसारणम्" (पा०सू०६-१-१३) इति सूत्रस्थपूर्वपक्षन्यायेन "सिद्धं त्ववयवानन्यत्वात्" (भा०इ०) इत्याष्टमिकभाष्यवार्त्तिकन्यायेन चावयवस्य कार्यलाभात् । अन्यथा 'हास्तिशीर्ष्यां उपैषि' इत्यादावगतेरिति वक्ष्यते । तस्मात्कथं बहुव्रीहिग्रहणं ज्ञापकमिति चेत् ? न, पूर्वोत्तरसाहचर्यबलेनापि बहुव्रीह्यप्रविष्टस्य वारणसम्भवात् दतृ इति सानुबन्धस्यापि सुपठत्वाच्च । "स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनामनाम च" (पा०सू०६-२-१८७) इति सूत्रे "अपाच्च" (पा०सू०६-२-१८६) इत्यनुवृत्त्या 'अपस्फिगम्' इत्यादावुत्तरपदान्तोदात्तविधायकेऽध्वशब्दग्रहणमपीह लिङ्गम् । "उपसर्गादध्वनः" (पा०सू०५-४-८५) इत्यच्प्रत्ययस्य नित्यत्वे हि चित्त्वादेव सिद्धं स्यात् । तथा "प्रतेरंश्वादयस्तत्पुरुषे" (पा०सू०६—२—११३) इति सूत्रेऽश्वादिगणे राजन्शब्दस्य पाठोऽपीह लिङ्गम् । अन्यथा "राजाहः सखिभ्यष्टच्" (पा०सू०५-४-९१) इति टचैव सिद्धे किन्तेन ? यत्तु "ऋक्पूरब्धूः पथाम्" (पा०सू०५४-७४) इत्यत्र टिलोपस्येव "प्रकृतिवदनुकरणम्" (प०भा०३६) इत्यतिदेशेन प्रत्ययस्यापि प्राप्तौ तदकरणं ज्ञापकमिति । तन्न, अतिदेशोऽयमनित्य इति ऌलक्सूत्रे प्रपञ्चितत्वादिति दिक् । "कृतमनयोः साधुत्वम्" इत्यादिभाष्यग्रन्थाश्चास्मिन्पक्षेनुकूलाः । अनयोः पदयोरिति स्वरसात् । अथवा 'आत्' इत्यसमस्तमेव "परस्परायां शब्दाप्रतिपत्तिः"

इति वार्त्तिके भाष्यकारैरेव वृद्धिः आदैजिति पदविभागप्रदर्शनात्। अस्मिंश्च पक्षे अनयोः सूत्रखण्डयोरिति नेयम्। पक्षान्तराभिप्रायकमेव वा तत्। वृद्धिशब्दस्तु तन्त्रेणावृत्त्या वा योजनीयः। "द्विर्वचनेऽचि" (पा०सू०१-१-५९) "इग्यणः सम्प्रसारणम्" (पा०सू०१-१-४५) इत्यादाविवोभयथाऽप्यदोषात्। आदिति तपरकरणमैजर्थं, तेन त्रिमात्रचतुर्मात्राणामैचां संज्ञा न भवतीत्यादि "एओङ्" "ऐऔच्" सूत्रयोः प्रपञ्चितम्। नचैवं तकारस्योत्तरशेषतैव स्यादिति पदान्तताविरहाज्जश्त्वं न स्यादिति वाच्यम्, असन्देहार्थतयाऽऽकारशेषत्वस्यापि सम्भवात्। अस्तु वाऽऽदैजिति पदम्, "ऋत इद्धातोः" (पा०सू०७-१-१००) इत्यादौ दपरत्वमेवाश्रित्य तपरसूत्रे दकारोपि प्रश्लिष्यते इति "तित्स्वरितम्" (पा० सू०६-१-१८५) इति सूत्रे भाष्यकारैर्वक्ष्यमाणत्वाद् दात्परस्यापि तत्कालग्राहकत्वात्। वस्तुतस्तु दकारप्रश्लेषपक्षोऽभ्युच्चयमात्रम्। इह तु तपरकरणं स्पष्टार्थमेवेत्यादि प्रागेवोक्तं न विस्मर्त्तव्यम्।

ननु "चोः कुः" [पा०सू०८-२-३०] इति कुत्वमैच्छब्दे प्राप्नोति चतुष्टयी शब्दानां प्रवृत्तिरिति पक्षेऽस्य संज्ञाशब्दतया लौकिकत्वेनानुशासनविषयत्वात्। त्रयीपक्षेऽपि जातिशब्दत्वसम्भवात्। वैशेषिकपरिभाषया द्रव्यत्वगुणत्वादिजातिस्वीकारे वैयाकरणपरिभाषयापि तत्स्वीकारस्य दुर्वारत्वात्। वस्तुतस्तु सिद्धान्ते व्यक्तिविशेषोपहितसत्ताया एव जातित्वस्वीकारादिहापि साऽस्तु। व्यक्तिविशेषाश्च स्वरूपसत्ता अतद्भेदेनानुगतीकृतास्सत्तोपधायकाः। तदुक्तम्—"तस्यां सर्वे शब्दा व्यवस्थिताः" इति। आद्यन्तावयवद्वारा समुदायानुकरणं ऐच् वा शब्दः। अनुकरणशब्दाश्च जातिशब्दा एव तत्रानुकार्यनिष्ठजातेः प्रवृत्तिनिमित्तत्वात्। न चाद्यपक्षे सूत्रवैयर्थ्यम्, मदीयशास्त्रे वृद्धिशब्देनादैच एव ग्राह्या इति नियमार्थं सूत्रारम्भात्। तदुक्तं कैयटेन—"अनेकशक्तेः शब्दस्य शक्त्यवच्छेदेन संज्ञिनि विनियोगान्नियतत्वाच्च सर्वसंज्ञानां लौकिकत्वात्" इति। अनेकस्मिन्ननेका वा शक्तिरस्येति विग्रहः। अवच्छेदकभेदेऽपि लघिवाच्छक्तिरेकैव। औपाधिको भेद इति प्रवादस्तु उपाधिभिन्न इत्यत्र पर्यवसन्न इति मतेनाऽऽद्यः पक्षः। उपाधिस्थित्यधीनस्थितिको जीवब्रह्मभेदवदुपधेयेऽपि भेदोऽस्तीति मतेन द्वितीयः कल्पः। "न कोपधायाः" [पा०सू०६-३-३७] इति पुंवद्भावनिषेधस्तु नास्ति। "तद्धितवुग्रहणं कर्तव्यम्" (का०वा०) इति वक्ष्यमाणत्वात्। अवच्छेदः संकोचः। स च यद्यपि शक्तेर्निरवयवतया न सम्भवति तथापि तदितरस्मिंस्तात्पर्यविरह एव शक्तिसङ्कोचोऽत्राभिमतः। "सर्वे स-

र्वार्थवाचकाः" इत्यभ्युपगमेऽपि तात्पर्यं क्वचिदेवेत्यस्य निर्विवादत्वात् । शक्तिः परं कारणतापरपर्याया सर्वत्र दुर्वारेत्युक्तम् । न चैवम् "अन्याय्यश्चानेकार्थत्वम्" इत्यस्य निर्विषयता, पौरुषयसङ्केतनिरपेक्षस्य प्रसिद्धतरसम्बन्धस्य विना प्रमाणं बहुषु न कल्पनमिति तदर्थात् । गौणमुख्यविभागोऽपि प्रसिद्ध्यप्रसिद्धिनिबन्धन एव । गाव्यादीनामसाधुतापि सङ्केतविरहे सत्येव । अतएव प्रसिद्धेऽपि पक्षे गोण्यादीनां गोण्यां साधुत्वमस्त्येवेत्यन्यत्र विस्तरः । उक्तं च—

व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचित् ।
नित्य एव तु सम्बन्धो डित्थादिषु गवादिवत् ॥
वृद्ध्यादीनां च शास्त्रेऽस्मिन् शक्त्यवच्छेदलक्षणः ।
अकृत्रिमोऽभिसम्बन्धो विशेषणविशेष्यवत् ॥ इति ।

वस्ततस्तु साध्वसाधुबहिर्भावपक्षेऽप्येषामनुशासनविषयताऽस्त्येवेति पस्पशायां साधुत्वनिर्वचनप्रसङ्गेनोपपादितम् । तस्मात्सर्वथापि कुत्वं प्राप्नोत्येवेति चेत् ? सत्यम्, "अयस्मयादीनि छन्दसि" (पा०सू० १–४–२०) इति भत्वप्रवृत्त्याकुत्वोपयोगिनी पदसंज्ञा प्रतिबध्यते । जश्त्वविध्येकवाक्यतापन्ना तु पदसंज्ञाऽस्त्येव । 'सस्रुष्टुभा स ऋक्वता गणेन' इत्यत्र तु विपरीतम्—कुत्वे पदत्वमस्ति जश्त्वे तु नेति । विषयभेदेन संज्ञाद्वयमस्तीत्यंशे परं दृष्टान्तता बोध्या । तेन "उपदेशेजनुनासिक इत्" (पा०सू०१–३–२) इत्यादौ कुत्वाभावो जश्त्वं च सिद्ध्यति । "छन्दसि विहितस्य सूत्रे कथं प्रवृत्तिः" इत्याशङ्क्य, 'छन्दोवत्सूत्राणि भवन्ति" इति भाष्यम् इष्टिरियं भाष्यकृतः । यद्वा, छन्दःशब्दः स्वर्यते । "स्वरितेनाधिकारः" (पा०सू०१–३–११) अधिकं कार्यं गौणस्यापि ग्रहणमित्यर्थः । तेन छन्दोङ्गेष्वपि तत्तत्कार्यप्रवृत्तिर्बोध्या संज्ञाद्वयसमावेशस्तु "उभयसंज्ञान्यपीति वक्तव्यम्" इति वार्त्तिकवचनात् "षष्ठीयुक्तः" (पा०सू०१–४–९) इति सूत्रे 'छन्दसि वा' इति विभज्य एका संज्ञेति नियमस्य छन्दसि विकल्पनाद्वा । यद्वा, "अयस्मयादीनि" (पा० सू०१–४–२०) इत्यनेनोभयसंज्ञाप्रयुक्तकार्यभाजः समुदाया निपात्यन्ते, न तु प्रकृता भसंज्ञैव विधीयते । अत एव कार्यविशेषपुरस्कारसम्भव इति बोध्यम् । तस्मात्कुत्वं नेति स्थितम् । कुशब्दस्य "अणुदित्" (पा०सू०१–१–६९) इत्यनेन संज्ञात्वेन विनियोगात्तत्र च प्रागुक्तरीत्य मतभेदसत्त्वाज्जातिविशेषः प्रवृत्तिनिमित्तम्, व्यक्तिविशेषोपहिता सत्तैव वा, शब्दस्वरूपं वा," तस्यापि ग्राह्यत्वं ग्राहकत्वं चेति पस्पशोक्तरीत्या व्यक्तिविशेषणतया भानाभ्युपगमात् । तथाचोक्तत्रि-

तयान्यतममिह त्वप्रत्ययार्थः, प्रकृतिजन्यबोधे प्रकारीभूतत्वं, प्रयोगोपाधिमाश्रित्य तथाभूतधर्मस्य त्वतलर्थताया वक्ष्यमाणत्वात्। यद्वा, प्रकृतिः शब्दस्वरूपपरा, तत्प्रवृत्तिनिमित्तत्वे तु त्वतलादीनां शक्तिरेवेति मतान्तरमपि वक्ष्यते। उभयथाऽपीह त्वप्रत्ययेन स्वार्थाश्रयः ककारो लक्ष्यते। तेन कुत्वम् नेत्यस्य ककारादेशो नेति पर्यवसितोऽर्थः। आह च—

सामान्यान्यभिधीयन्ते सत्ता वा तैर्विशेषिता।
संज्ञाशब्दस्वरूपं वा प्रत्ययैस्त्वतलादिभिः॥ इति।

इत्थं पदविभागः पदसाधुत्वं चोक्तम्। वाक्यार्थस्तु संज्ञासंज्ञिभावः। तथाहि, समानविभक्तिकनामार्थयोरभेदान्वयस्य व्युत्पन्नतयाऽऽकारादयो वृद्धिं प्रत्यभेदेन संसर्गेण विशेष्याः। विरूपोपस्थितिस्तु विशेषणीभूतं शब्दस्वरूपमादाय बोध्या। एतेन "इन्द्रो मरुत्वान्मघवा" (अ०को०१-१-४४) इत्यादि व्याख्यातम्। न तु तत्रापि मरुत्वदादिशब्दानां तत्तद्वाच्ये लक्षणेति ग्राह्यम्, उक्तरीत्या लक्षणां विनैवोपपत्तेः। अत एवोद्भिदधिकरणे विशिष्टविधिपक्षं मत्वर्थलक्षणाप्रसङ्गेन दूषयित्वा नामधेयत्वं सिद्धान्तितम्। अन्यथा नामधेयत्वेऽपि लक्षणायास्तुल्यतयाऽधिकरणस्यासम्भवदुक्तिकतापत्तेरिति दिक्।

स्यादेतत्। किमादैज्मात्रस्य वृद्धिसंज्ञा आहोस्विद् वृद्धिशब्दमावर्त्य वृद्धिरिति ये आदैचस्ते वृद्धिसंज्ञा इति व्याख्यानाल्लुक्श्लुलुप्संज्ञावत्तद्भावितानामेवेति ? नाद्यः, 'सर्वभासः' 'सर्वकाकः' इत्यादौ "उत्तरपदवृद्धौ सर्वं च" (पा०सू०६-२-१०५) इति सूत्रेण पूर्वपदान्तोदात्तत्वप्रसङ्गात्। इष्यते तु "समासस्य" (पा०सू०६-१-२२३) इत्यन्तोदात्तः। न च "सर्वस्य सुपि" (पा०सू०६-१-१९१) इत्याद्युदात्तता शङ्क्या सतिशिष्टेन समासस्वरेण बाधात्। 'सर्वस्तोमः' इत्यादौ तु "बहुव्रीहौ प्रकृत्या पूर्वपदम्" [पा०सू०६-२-१] इत्यनेन समासान्तोदात्तत्वे बाधिते "सर्वस्य सुपि" (पा०सू०६-१-१९१) इति भवत्येव। इह तु कर्मधारयत्वात्समासान्तोदात्तत्वमेवेति बोध्यम्। किञ्च तावती भार्या यस्येति बहुव्रीहौ "तावद्भार्यः" न सिद्ध्येत्। "वृद्धिनिमित्तस्य च तद्धितस्य" (पा०सू०६-३-३९) इति पुंवद्भावप्रतिषेधप्रसङ्गात्।

न द्वितीयः, 'शालीयः' 'मालीयः' इत्यादौ वृद्धलक्षणस्य छप्रत्ययस्यासिद्धिप्रसङ्गात्। किञ्चैवम् 'आम्रमयं' 'शालमयम्' इत्यादौ "नित्यं वृद्धशरादिभ्यः" (पा०सू०४-३-१४४) इति नित्यो मयट् न स्यात्। किञ्च 'आम्रगुप्तायनिः' 'शालगुप्तायनिः' "उदीचां वृद्धादगोत्रात्"

(पा०सू०४-१-१५७) इति वृद्धलक्षणः फिञ्न स्यात् । ननु "प्राचामवृद्धात्फिन् बहुलम्" (पा०सू०४-१-१६०) इति फिनाऽप्येतत्सिद्धम् । नह्यत्र फिञ्फिनोः स्वरे रूपे वा विशेषोऽस्ति "ञ्नित्यादिर्नित्यम्" (पा०सू०६-१-१९७) इत्याद्युदात्तस्योभयत्राविशिष्टत्वात् । न च 'आम्रगुप्तायनीभार्यः' इत्यत्र "वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे" (पा०सू०६-३-३९) इति पुंवद्भावप्रतिषेधसिद्धये फिञेव कर्त्तव्य इति वाच्यम् "जातेश्च" (पा०सू०६-३-४१) इत्यनेनापि प्रतिषेधसिद्धेः । न चाम्रगुप्तायनेश्छात्रा इति वृद्धाच्छे विवक्षिते "फक्फिञोरन्यतरस्याम्" (पा०सू०४-१-९१) इति लुग्विकल्पेन 'आम्रगुप्तीयाः' 'आम्रगुप्तायनीयाः' इति द्वैरूप्यमिष्टं, तच्च फिञं विना न सिध्यतीति वाच्यम् "फक्फिञोः" (पा०सू०४-१-९१) इत्यत्र यूनीत्यनुवृत्त्या त्वदुदाहृतरूपद्वयस्य सिद्धान्तेऽप्यसम्मतत्वात् । अत एव तत्र यून्येवोदाहृतम् । यस्कस्यापत्यम् "शिवादिभ्योऽण्" (पा०सू०४-१-११२) यास्कः, तस्यापत्यं युवा "अणो द्व्यचः" (पा०सू०४-१-१५६) इति फिञ् यास्कायनिः, तस्य छात्राः 'यास्कीयाः' 'यास्कायनीयाः, इति तस्मात्फिनाऽपि सिद्धौ किमर्थं फिञेवेष्यते इति चेत् ? उच्यते, उक्तरीत्या रूपसिद्धावपि प्राचामुदीचां वाचार्याणां स्वस्वमतप्रच्युतिरेव तावद्दोषः । सिद्धान्ते ह्युदीचाम् । 'आम्रगुप्तायनिः' इष्टः, प्राचां त्वनिष्टः । उक्तरीत्या तूदीचां न सिध्येत्, प्राचां तु सिध्येदिति स्पष्ट एवोभयोरपि स्वमतप्रच्यवः । तथा च "ऋतो भारद्वाजस्य" (पा०सू०७-२-६३) इति सूत्रे 'जहर्थ' इत्यादौ गुणे रपरत्वे च कृते ऽनजन्तत्वाद् "अचस्तास्वत्" (पा०सू० ७-२-६१) इत्यस्याप्राप्तौ नियमानुपपत्तेः "ऋतो भारद्वाजस्य" (पा०सू० ७-२-६३) इतीदं विधायकं स्यात्ततश्च 'पेचिथ' इत्यादाविण्न स्यादिति दूषणे प्राप्ते "अचस्तास्वत्थल्यनिटो नित्यं भारद्वाजस्य । उपदेशे त्वतः, भारद्वाजस्येत्येव । ततः—ऋतः, भारद्वाजस्येति निवृत्तम् । एवञ्च सकललक्ष्यप्रसिद्धिः" इति सूत्रभङ्गेन समाधाय भाष्यकारो वक्ष्यति—"सिध्यत्येवम् । अयं तु भारद्वाजः स्वस्मान्मतात्प्रच्यावितो भवति" इति । अत एव "अचस्तास्वत्" (पा०सू०७-२-६१) इत्यत्र "उपदेशेऽत्वतः" (पा०सू०७-२-६२) इत्येतदुपदेशग्रहणमपकृष्य सिद्धान्तयिष्यतीति दिक् । किञ्च फिनि सत्याम्रगुप्तायनेरपत्यं कुत्सितमित्यर्थे सौवीरगोत्रे "फेश्छच" (पा०सू०४-१-१४९) इति छठकौ न स्याताम् । तत्र फिञेव गृह्यते न तु फिन् वृद्धादित्यधिकारादिति स्थितम् । ततश्च 'आम्रगुप्तायनीयः' 'आम्रगुप्तायनिकः' इति न स्यात् । न च ।

यमुन्दश्च सुषामाच वार्ष्यायणिः फिञः स्मृताः।

इति वृत्तौ त्रयाणामेव परिगणनादन्येभ्यश्छठकौ न भवत एवेति वाच्यम्, भाष्यकृता परिगणनस्यानाश्रयणात्। अन्यथाऽत्रैव सूत्रे 'सौवीरेष्विति किम्? तैकायनिः' इतिप्रत्युदाहरणं न सङ्गच्छेत। तैकायनिशब्दस्य तत्रापाठात्। अत एव "यूनि लुक्" (पा०सू०४-१-९०) इत्यत्रोदाह्रियते—तिकस्यापत्यं "तिकादिभ्यः फिञ्" (पा०सू०४-१-१५४) तैकायनिः, तस्यापत्यं युवा "फेश्छ च" (पा०सू०४-१-१४९) तैकायनीयः, तस्य छात्राः युवप्रत्ययस्य लुकि कृते "वृद्धाच्छः" (पा०सू०४-२-११४) 'तैकायनीयाः' इति। न हि सति परिगणने तैकायनेश्छः सम्भवति न वा तल्लोपः। अत एव यूनिलुक्सूत्रे स्थित्वा परिगणनमर्वाचीनमिति हरदत्तादयोऽप्याहुः। अपिच फिञि सत्याम्रगुप्तायनेरपत्यं युवा "प्राग्दीव्यतोऽण्" (पा०सू०४-१-८३) तस्य "ण्यक्षत्रियार्षञितो यूनि लुगणिञोः" (पा०सू०१-४-५८) इति लुकि 'आम्रगुप्तायनिः' इत्येवं रूपं पितरि पुत्रे चेष्यते। फिनि तु सति तन्न स्यात् ञितः परत्वाभावात्। न च 'अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम्' इति तत्सिद्धिः, ब्राह्मणगोत्रे तदप्रवृत्तेः। किञ्च तद्भावितग्रहणपक्षे "मालादीनां च" (पा०सू०६-२-८८) इत्यनारम्भणीयं स्यात् "प्रस्थे वृद्धमकर्क्यादीनाम्" (पा०सू०६-२-८७) इत्यनेनैव पूर्वपदाद्युदात्तत्वसिद्धेः। अपिच वृद्धिशब्दे तन्त्रावृत्त्याद्याश्रयणाद्गौरवम्। "मृजेर्वृद्धिः" (पा०सू०७-२-११४) इत्यादिविधिप्रदेशेष्वितरेतराश्रयणपरिहाराय सूत्रशाटकवद्भाविसंज्ञा विज्ञेया स्यादिति चापरं गौरवमिति।

अत्रोच्यते, आदैज्मात्रस्य वृद्धिसंज्ञा। नचैवं सर्वभासादावुक्तदोषः स्यादिति वाच्यम् "उत्तरपदवृद्धौ सर्वं च" (पा०सू०६-२-१०५) इत्यत्र ह्युत्तरपदग्रहणं स्वर्यते। स्वरितेनाधिकारो विज्ञायते। तेनोत्तरपदस्येत्यधिकृत्य या वृद्धिर्विहिता सैव गृह्यते। यथा 'सर्वपाञ्चालः' "सुसर्वार्द्धाज्जनपदस्य" (पा०सू०७-३-१२) इति वृद्धिः। इदं च तद्भावितग्रहणेऽप्यवश्यं वक्तव्यमेव। अन्यथा 'सर्वः कारकः' 'सर्वकारकः' इत्यादावतिप्रसक्तेः। एवं तावद्भार्येऽप्यदोषः, तन्त्रावृत्त्याद्याश्रयणेन वृद्धिशब्देन विहितायां वृद्धेर्यन्निमित्तं तत्रैव पुंवद्भावप्रतिषेधात्। वृद्धिशब्देन च विधौ कृत्स्ना वृद्धिः प्रतीयते इत्याशयेनैवोक्तं भाष्ये—"यत् कृत्स्नाया वृद्धेर्निमित्तम्" इति। न च वैयाकरणभार्ये तथा सौवश्वभार्येऽतिप्रसङ्गः फलोपहितस्यैव निमित्तत्वेन विवक्षितत्वात्। ऐचौ प्रति फलोपधानमप्यस्तीति चेत्? न, तयोर्वृद्धिशब्देनाविधानात्।

केचित्तु यावद्बुद्धिजननयोग्यत्वे सति किञ्चित्फलोपहितस्तद्धितो निमित्तशब्देनोच्यते। वैयाकरणे तु ऐचं प्रति तद्धितो न निमित्तं निषेधसन्नियोगशिष्टतामात्रेणातिप्रसङ्गभङ्गात्। तेन वैयाकरणभार्यं नातिप्रसङ्गः। "परिषदो ण्यः" (पा०सू०४-४-४४) 'पारिषद्या भार्या' इत्यादौ त्वाकारमात्रोपहितत्वेऽपि स्वरूपयोग्यता सकलवृद्धिं प्रत्यस्तीत्याहुः।

तस्मात्—

आवृत्तौ गौरवापत्तेः शालीयादेरसिद्धितः।
मालादीनां चेति लिङ्गाद्व्याप्तिन्यायात्तथैव च॥
भाविसंज्ञात्वविज्ञाने गौरवाच्चेह निश्चितम्।
आदैज्मात्रस्याविशेषाद्वृद्धिसंज्ञा विधीयते॥

अनर्थकं साध्वनुशासनं प्रयोगनियमार्थमादेशार्थमागमार्थं विशेषणविशेष्यभावार्थं चेदं सूत्रमिति षट्पक्षी तु भाष्य एव निराकृतत्वादसम्भवदुक्तिकत्वाच्च नेह तन्यते। संज्ञासंज्ञिभावे सत्यपि का संज्ञा कः संज्ञीत्यत्र तात्पर्यग्राहकास्तु बहवो न्यायाः। तथाहि,

यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्।
तच्छब्द एवकारश्च स्यादुपादेयलक्षणम्॥

इत्यभियुक्तोक्तेस्तथैवानुभवाच्च प्राथम्यं तावत्संज्ञित्वे लिङ्गम्। तच्च "अदेङ् गुणः" (पा०सू०१-१-२) इत्यादौ स्पष्टमेव। वृद्धिसंज्ञासूत्रे तु मङ्गलार्थं वृद्धिशब्दस्यादौ प्रयोगेऽपि वक्ष्यमाणैर्न्यायान्तरैरादैचां संज्ञित्वे निर्णीते सत्यादैज्वृद्धिरित्याकारकपदानुपूर्वीज्ञानानन्तरमेव वाक्यार्थबोधाभ्युपगमात्तज्जनकीभूतानुपूर्वीज्ञाने आदैचामेव प्राथम्यान्न व्यभिचारः। पदानुपूर्वीज्ञानमेव चासत्तिज्ञानमित्युच्यते। इदं च शाब्दबोधे हेतुरिति यैर्नेष्यते तेषामासन्नानासन्नकथोच्छेदः स्यात्, पदसमूहालम्बने सकलपदानां पदार्थस्मरणे च सकलपदार्थानां विषयत्वाविशेषात्। आवृत्तिश्च संज्ञात्वे लिङ्गम्, व्यवहारार्थमेव संज्ञाकरणात्। भेदाभेदाभ्यामपि संज्ञित्वसंज्ञात्वे क्वचिन्निर्णीयेते। बहूनां ह्येका संज्ञोचिता लाघवात्, न त्वेकस्य बह्व्यः संज्ञा गौरवात्। न्यूनाधिकव्यक्तिकास्तु बह्व्यः संज्ञा इष्यन्त एव, तत्तत्प्रयुक्तकार्यवैलक्षण्यात्, कृत्कृत्यप्रत्ययसंज्ञावत्, तद्धिततद्राजप्रत्ययसंज्ञावच्च। लघ्वक्षरत्वमपि टिघुभादौ संज्ञालिङ्गं यथायथं बोध्यम्। इह त्वावृत्त्याऽभेदेन च वृद्धिशब्दः संज्ञेति स्थिते तद्बलेन श्रुतानुपूर्वीभङ्गादादैचां प्राथम्यमपि योजनीयम्। यद्वा, स्वेच्छया संज्ञाः क्रियन्ते इति पक्षं विहाय व्यवहाराय नियम इति पक्षे योज्यम्। आद्येऽपि कार्यकालपक्षाश्रयणेन वा

समाधेयमिति दिक्। एतेन "आर्द्धधातुकं शेषः" (पा०सू०३-४-११४) "कृदतिङ्" (पा०सू०३-१-९३) "अपृक्त एकाल्प्रत्ययः" (पा०सू०१-२-४१) "स्वं रूपं शब्दस्य" (पा०सू०१-१-६८) "अणुदित्" (पा०सू०१-१-६९) "तपरः" (पा०सू०१-१-७०) "आदिरन्त्येन" (पा०सू०१-१-७१) "येनविधिस्तदन्तस्य" (पा०सू०१-१-७२) इत्यादावपि व्यभिचार उद्धृतः, तत्रापि विपरीतानुपूर्वीकल्पनात्। कल्पकत्वस्य च प्रागेवोक्तत्वात् पक्षान्तरैरपि समाधानाच्च। अत एव स्थानिवत्सूत्रे 'वत्करणङ्किमर्थम्' इत्याशङ्क्य "स्थान्यादेशस्य संज्ञा मा विज्ञायि" इति भाष्यमप्युपपन्नम्। यत्तु "अपृक्त एकाल्" (पा०सू०१-२-४१) इति परिभाषा, न तु संज्ञा इत्युक्तं, तद् वृद्ध्यादावपि सुवचम्। "अपृक्तसंज्ञायां हल्ग्रहणं स्वादिलोपे हलो ग्रहणार्थम्" इति वार्त्तिकस्य तद्भाष्यस्य च प्रतिकूलम्। तस्मादुक्तैवगतिः समीचीनेति दिक्।

ननु "मृजेर्वृद्धिः"(पा०सू०७-२-११४) इत्यादावन्योन्याश्रयः, संज्ञयाहि विधिर्विहितानां च संज्ञेति। न च मालादौ संज्ञाप्रवृत्तिसम्भवे सतीह भाविसंज्ञाविज्ञानं सम्भवति। तस्माद् वृद्धिशब्द एवादेशः स्यात्। अन्यत्र वृद्धिसंज्ञाप्रवृत्तावपि मालादिशब्दान्तर्गतस्याकारस्य तत उत्कृष्येह विधातुमशक्यत्वादिति।

अत्राहुः-'मार्ष्टि' इत्यादौ सिद्धस्यैवाकारस्य मृज्युपदेशादसाधुत्वे प्रसक्ते साधुत्वं "मृजेर्वृद्धिः" इत्यादिना बोध्यते न त्वपूर्व आकारो भाव्यते, येनान्योन्याश्रयः स्यात्। उक्तं च वार्तिककृता-"सतो वृद्ध्यादिषु निमित्तभावात्तदाश्रय इतरेतराश्रयत्वादप्रसिद्धिः। सिद्धं तु नित्यशब्दत्वात्" इति। अथ लक्षणैकचक्षुष्कः कश्चिद्व्याकरणबलेनैव'मार्ष्टि' इत्यादिप्रयोगेषु व्युत्पित्सेत, तथापि न क्षतिः शालामालादावाकारे श्रुते आत्वसामान्यलक्षणप्रत्यासत्त्या 'मार्ष्टि' इत्यादिप्रयोगसमवायिनां सर्वेषामाकाराणां वृद्धिशब्दवाच्यताग्रहात्। सामान्यलक्षणानभ्युपगमपक्षे त्वात्वजातौ शक्तिग्रहात् शक्त्यनुभवपदार्थस्मरणवाक्यार्थबोधानां समानप्रकारकत्वेनैवातिप्रसङ्गभङ्गाभ्युपगमाद्वा। अन्यथा 'गेहे घटोऽस्ति' इति वाक्यादप्यपूर्वव्यक्तिर्न गृह्येतेति दिक्। अत एव "नवेति विभाषा" (पा०सू०१-१-४४) इति सूत्रे भाष्यकारो वक्ष्यति—साधुत्वस्य विधेयत्वे "विभाषा श्वेः" (पा०सू०६-१-३०) इत्यादिना तस्यैव विकल्पापत्तिः। तस्मात्सम्प्रसारणाद्येव विकल्प्यत इति। एषैव लडादिविधौ गतिः। न चैवं साध्वनुशासनत्वभङ्गः, साधुत्वविशिष्टस्यैव सर्वत्र लक्षणया विधानमिति क्रन्मेजन्तसूत्रे विवरणकारादिभिरुक्-

त्वात्, केवलविधानेपि 'यदिह परिनिष्ठितं, तत्साधु' इति श्रुतार्थापत्ति प्रकल्प्य वाक्यात्साधुत्वसिद्धेश्च । इह च प्रत्येकं वाक्यपरिसमाप्तिः "मालादीनां च" (पा०सू०६-२-८८) इत्यादिलिङ्गात् 'ब्राह्मणा भोज्यन्ताम्' इत्यादौ तथा दर्शनाच्च । यद्यपि 'गर्गाः शतं दण्ड्यन्ताम्' इत्यादौ समुदायेऽपि वाक्यपरिसमाप्तिर्दृश्यते गुणकर्मभूतानामपादानस्थानापन्नानां गर्गाणामनुरोधेनेप्सिततमकर्मतया प्रधानभूतस्य शतस्यावृत्त्ययोगात्, तथापीह शास्त्रे यत्नं विना समुदाये शास्त्रं न समाप्यते । अत एव "उभे अभ्यस्तं सह" इति सहग्रहणं वार्त्तिककृद्वक्ष्यति । भाष्यकारस्तूभेग्रहणमेवैतदर्थमिति वक्ष्यति । अन्यथा "एकाचो द्वे" (पा०सू० ६-१-१) इत्यनुवृत्त्या सिद्धेः किमुभेग्रहणेन ? संयोगसंज्ञायां समाससंज्ञायां च महासंज्ञाकरणमेवान्वर्थताविज्ञानार्थमिति यत्नः । अत एव "सह सुपा" (पा०सू०२-१-४) इति सहग्रहणं योगविभागेन तिङन्तादिसमासविधानार्थमिति स्थापयिष्यते । इह तपरकरणमैजर्थमीदूद्देदितिवदुच्चारणार्थमसन्देहार्थं चेति प्रपञ्चितम् "एओङ्" "ऐऔच्" (मा०सू० ३।४।) इतिसूत्रयोः । यत्त्विहोक्तं वार्त्तिककृता—"आकारस्य तपरकरणं सवर्णार्थम्" इति, तत्तु 'भेदका गुणाः' तपरसूत्रं चानणि विध्यर्थम्' इत्यभिप्रेत्य । भाष्ये त्वभेदका गुणा इति स्थितम् । गुणा उदात्तानुदात्तस्वरितानुनासिका नान्तरीयकतयोच्चार्यमाणा अपि यत्नं विना न विवक्ष्यन्ते इत्यर्थः । "अनुदात्तः" (पा०सू०प०७-१-७५) "अनुदात्तः" (पा०सू०प०६-४-७१) इत्यादावुदात्तग्रहणं चेह ज्ञापकम् । अन्यथा ह्युदात्तमेवोच्चारयेल्लाघवात् । ननु यद्यभेदका गुणास्तर्हि यद्वक्ष्यति भाष्यकारः—"हन्त्यादेशस्य वधेः स्थानिवद्भावादनुदात्तत्वादिट्प्रतिषेधे प्राप्ते तद्वारणाय वध्यादेशे उदात्तनिपातनं करिष्यते । तथाच "एकाच उपदेशे" (पा०सू०७-२-१०) इति सूत्रे एकाज्ग्रहणं न कर्त्तव्यम्" इति, तदेतद्विरुध्येत, अविवक्षाप्रसङ्गात् । अथोच्येत—तत्रापि "स्थानेऽन्तरतमः" (पा०सू०१-१-५०) इति वचनादादेशस्य यः स्वरः प्राप्तस्तस्मिन्नुच्चारयितव्ये उदात्तोच्चारणं यत्नेन विवक्षार्थं ज्ञायते इति ? एवमपि यद्वक्ष्यति षष्ठे "चतसर्याद्युदात्तनिपातनं करिष्यते स निपातनस्वरः "चतुरः शसि" (पा०सू०६-१-१६७) इत्यस्य बाधको भविष्यति" इति तद्विरुध्यते । चतुश्शब्दो ह्यव्युत्पत्तिपक्षे "त्रः संख्यायाः" (फि०सू०२८) इति फिट्सूत्रेणाद्युदात्तः । "चतेरुरन्" (उ०सू०७५७) इति व्युत्पादनेऽपि नित्स्वरणाद्युदात्त एव । तत्स्थानिकस्य चतसृशब्दस्यापि स्थानिस्वरेणाद्युदात्तस्योच्चारणोपपत्तौ "चतुरः शसि" (पा०सू०६-१-१६७) इत्येतद्बाधक-

त्वायोगात्। अपिच अस्थ्यादीनामध्याद्युदात्तत्वादन्तादेशस्थानङोऽपि स्थान्यनुरूपेऽनुदात्ते एवोच्चारणीये उदात्तोच्चारणं विवक्षार्थं भविष्यतीत्युदात्तग्रहणं निष्फलमेव, प्रत्युत क्रियमाणं तद्यत्नाधिक्येऽप्यविवक्षां ज्ञापयेत्। यदप्येकश्रुत्या सूत्रपाठात्क्वचिदुदात्तोच्चारणं विवक्षार्थमिति, तदपि चिन्त्यम्, एवं सत्यनङोऽप्युदात्तोच्चारणेनैव सिद्धावुदात्तग्रहणवैयर्थ्यापत्तेः उक्तज्ञापनासम्भवाच्च। तथाहि, किं ज्ञाप्यम्—स्वशब्देनानुपात्तो गुणो न विवक्ष्यते इति आहोस्विदसति यत्नविशेषे न विवक्ष्यते इति? आद्ये निपातनस्वरो न विवक्ष्येत। अन्त्ये तूदात्तोच्चारण एव विवक्षाहेतौ यत्नविशेषे स्थिते कथं ज्ञापकोत्थानं, मूलशैथिल्यात्। तस्माद् गुणानामभेदकत्वप्रतिपादकमत्रत्यं भाष्यमुत्तरग्रन्थविरुद्धमेवेति चेत्?

उच्यते, "विभाषा छन्दसि" (पा०सू०१-२-३६) इति वैकल्पिकमेकश्रुत्यमङ्गीकृत्य "पक्षान्तरैरपि परिहारा भवन्ति" इति न्यायेन तत्र तत्राद्युदात्तनिपातनं करिष्यते इत्युक्तम्, इह तु त्रैस्वर्येण सूत्राणां पाठमाश्रित्य स्वरूपेणोपात्तस्य गुणस्य नान्तरीयकत्वेनाविवक्षितत्वसम्भवादुदात्तग्रहणं ज्ञापकमित्युक्तम्, अतो न विरोधः। यद्वा, "अणुदित्सवर्णस्य" (पा०सू०१-१-६७) इत्यत्राज्ग्रहणेनैव सिद्धे गुणभिन्नानां यवलानां संग्रहाय क्रियमाणमण्ग्रहणं गुणानां भेदकतामपि ज्ञापयति। भेदकाभेदकत्वपक्षयोश्च जातिव्यक्तिपक्षयोरिव लक्ष्यानुरोधाद्व्यवस्थेत्युक्तं हल्सूत्रे। तेन भेदकत्वपक्षाश्रयणेन "आद्युदात्तनिपातनं करिष्यते" इत्यादि भाष्यं बोध्यम्। अत एव चेदमस्त्यदाद्यत्वे "अष्टन आ विभक्तौ" (पा०सू०७-२-८४) इत्यादौ चानुनासिको न प्रवर्त्तते। नन्वण्ग्रहणं "हलो यमाम्" (पा०सू०८-४-६४) इति लोपेऽन्यतरस्यांग्रहणानुवृत्तिज्ञापनार्थमित्युक्तमिति चेत्? न, उभयज्ञापकत्वेऽप्यविरोधात्। न ह्येकेनैकमेव ज्ञाप्यमिति नियमः, यावता विनानुपपत्तिस्तस्य सर्वस्य ज्ञाप्यत्वात्। अत एवाऽऽत्वविकल्पः कृतात्वस्य षट्संज्ञा चेत्युभयमपि "अष्टनो दीर्घात्" (पा०सू०६-१-१७२) इति दीर्घग्रहणेन ज्ञापयिष्यते। अत एव च "संहितायाम्" (पा०सू०६-१-७२) इत्यधिकारेण संहिताया अनित्यत्वं कालव्यवायेऽप्यानङादिप्रवृत्तिश्चेत्युभयं ज्ञाप्यते इति दिक्। एवञ्चाकारस्य तपरकरणं सवर्णार्थमितीदत्यं वार्तिकमपि भेदकत्वपक्षेण साध्वेव। भाष्ये तु पक्षान्तराभिप्रायेण ऐजर्थत्वमुक्तम्, तदपि यथोद्देशपक्षे बोध्यम्, आदैचां संज्ञाविधावनुवाद्यत्वेन सवर्णग्राहकत्वप्रसक्तेः। कार्यकालपक्षे तु विधिवाक्येनैव वृद्धि-

संज्ञा विशिष्टानामादैचां भाव्यमानतया सवर्णग्रहणं न प्राप्नोत्येव। यथा च ज्योतिष्टोमराजसूयादिशब्दानां यागविधावेव सामानाधिकरण्यान्नामधेयत्वावगतिर्न तु वाक्यान्तरेण, तथाऽस्मिन्पक्षे वृद्ध्यादीनामपि, "वृद्धिरादैच्" (पा०सू०१-१-१) इति सूत्रं तु "इको गुणवृद्धी" (पा० सू०१-१-३) इतिवत्पदोपस्थापकम् । उपस्थाप्यस्य संज्ञितया परं संज्ञासूत्रव्यवहारः । आद्यपक्षे तु "यन्न दुःखेन" इत्यादौ स्वर्गशब्दार्थावगमवदिहैव वृद्ध्यादिशब्दार्थावगम इति विशेषः ।

तदयं निर्गलितः सूत्रार्थः—कृतानामकृतानां चादैचां प्रत्येकं वृद्धिसंज्ञा स्यात् । आश्वलायनः, ऐतिकायनः । अश्वलैतिकशब्दाभ्यां नडादित्वात्फक्यादिवृद्धिः । उपगोरपत्यमौपगवः ॥

अदेङ् गुणः (पा०सू०१-१-२) ॥ अदेङां गुणसंज्ञा स्यात् । तपरकरणमिह सर्वार्थम् । तेन 'तरति' इत्यत्राकार एव न तु कदाचिदाकारः । न च प्रमाणत आन्तर्येण नियमसिद्धिः, रपरत्वे कृते एकस्याध्यर्द्धमात्रत्वादपरस्यार्द्धतृतीयमात्रत्वात् । 'पचन्ति' 'चेता' 'स्तोता' ॥

इको गुणवृद्धी (पा०सू०१-१-३) ॥ यत्र ब्रूयाद् गुणो भवति वृद्धिर्भवतीति तत्र 'इकः' इति षष्ठ्यन्तमुपस्थितं बोध्यम् । चेता, स्तोता; अहार्षीत् इत्यादि । इक इत्युक्तेर्नेह—याता, ग्लायति, उम्भितेति । तथाच वार्त्तिकम्—"इग्ग्रहणमात्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थम्" इति । ननु नैतानि सन्ति प्रयोजनानि, ज्ञापकेनानिकां व्यावृत्तिसिद्धेः । तथाहि, अकारस्य 'पचति' इत्यादौ शपं तिपं चाश्रित्य यथाक्रमं "पुगन्त" (पा० सू०७-३-८६) इति "सार्वधातुकार्द्धधातुकयोः" (पा०सू०७-३-८४) इति च सूत्रेण सत्यपि गुणे रूपे विशेषो नास्ति । 'अचिकीर्षीत्' इत्यादौ त्वतोलोपेन वृद्धिर्बाध्यते "ण्यल्लोपौ" (का०वा०) इति पूर्वविप्रतिषेधस्य वक्ष्यमाणत्वात् । सूत्रारम्भपक्षेऽपि ह्येषैव 'चिकीर्षकः' इत्यादौ गतिः । "अचो ञ्णिति" (पा०सू०७-२-११५) इत्यत्र निर्दिष्टस्थानिकत्वेन इक्परिभाषाया अप्रवृत्तेः । 'अयासीत्' इत्यादौ तु सिचि वृद्धौ सत्यामपि न क्षतिः । वस्तुतस्तु सा परत्वात् सगिड्भ्यां बाध्यते । येननाप्राप्तिन्यायेनापवादत्वाद्बाध्यते इति तु निष्कर्षः । न च 'याता' 'वाता' इत्यादावातो गुणप्रसङ्गः "गापोष्टक्" (पा०सू०३-२-८) इति टकः कित्वेनाकारस्य गुणो न भवतीति ज्ञापितत्वात् । तद्धि कित्त्वं 'सामगः' इत्यादावाल्लोपार्थं क्रियते । यदि त्वाकारस्य गुणः स्यात्तर्हि द्वयोरकारयोः पररूपेण 'सामगः' इत्यादिरूपसिद्धौ किं कित्वेन ? न चेह 'चिकीर्षकः' इत्यादाविव परत्वादान्तरङ्गत्वाच्चातो लोप एवोपादातुमुचितो न तु

पररूपमिति वाच्यम्, तावतापि ज्ञापकत्वे बाधकाभावात्। वस्तुतस्तु नेह लोपेन भवितव्यम्। तत्र हि "अनुदात्तोपदेश" (पा०सू०६-४-३७) इत्यतोनुवृत्तेनोपदेशग्रहणेनार्द्धधातुकस्य विशेषणादार्द्धधातुकोपदेशे यदकारान्तं तस्यातो लोपो विधीयते। अन्यथा 'गतो गतवान्' इत्यादावतिप्रसङ्गात्। न चासिद्धवत्सूत्रेण निर्वाहः, तस्य भाष्यकृता प्रत्याख्यास्यमानत्वात्। किञ्च "अय पय गतौ" (भ्वा०आ०) आभ्यां क्विपि 'अत्' 'पत्' इति रूपं माधवादिभिरुदाहृतं, तदपि यथाश्रुते न सिद्ध्येत्। तस्मादुपदेशानुवृत्तिरेव शरणम्। कथं तर्हि 'धिनुतः' 'कृणुतः' इत्यादौ "अतो लोपः" (पा०सू०६-४-४८) इति चेत्? सन्नियोगशिष्टतया उप्रत्ययोपदेशवेलायामेवाकारस्यापि बुद्ध्यारोहादिति केचित्। अन्ये तु "धिन्विकृण्व्योर च" (पा०सू०३-१-८०) इति सौत्रक्रमानुरोधात्प्रथममकारादेशस्तदनन्तरं चशब्दाकृष्ट उप्रत्यय इति नोक्तदोष इत्याहुः।

नन्वेवं 'सामगाय' इत्यादावेकादेशस्य पूर्वान्तत्वेन ग्रहणाद् "आतो धातोः" (पा०सू०६-४-१४०) इत्यालोपः स्यादिति चेत्? अत्र कैयटः— "अकारमाश्रित्य कृतो यशब्दः सन्निपातपरिभाषया लोपं न प्रवर्त्तयति। दीर्घत्वं तु "कष्टाय" (पा०सू०३-१-१४) इति निपातनाद्भवति" इति "एओङ्"सूत्रे स्थित्वा समाहितवान्। तस्यायमाशयः—यादेशे हि ह्रस्वत्वविशिष्टमत्वं प्रयोजकम्, तद्भिधावत इत्यनुवृत्तेः। तत्र यद्यपि दीर्घेण ह्रस्वत्वांशो निवर्त्तितस्तथाप्यत्वमात्रमादेशेऽप्यनुवर्त्तते। तदपि चेल्लोपेन निवर्त्त्येत तर्हि परिभाषाविरोधः। दीर्घांशे परं ज्ञापकात्परिभाषा बाध्यते। न चैवमंशान्तरेऽपि तद्बाधोऽस्त्विति वाच्यम्, तदबाधेऽप्युपपत्तेः। प्रकृतसूत्रे "एओङ्"सूत्रे च गापोष्टकः किस्वस्यानन्यार्थतां वदन् भाष्यकारश्चात्र प्रमाणम्। एतेन शुभंयाशब्दस्य नपुंसके ह्रस्वत्वे ङेर्यादेशे दीर्घे च सति "आतो धातोः" (पा०सू०६-४-१४०) इत्यालोपे च 'शुभंय्यः' इत्यादि माधवोदाहृतं भाष्यविरोधाच्चिन्त्यम्। अत एव नपुंसके "श्रीपं ज्ञानवत्" इति ग्रन्थं श्रीपायेतिरूपपरतया यथाश्रुतमेव समञ्जसं भङ्क्त्वा माधवानुरोधेन 'प्रायेण ज्ञानवत्' इति व्याचक्षाणा अपि प्रत्युक्ताः। तथा 'ग्लायति' इत्यादौ सन्ध्यक्षराणामप्युपदेशसामर्थ्याद् गुणो न भविष्यति। इतरथा हि एकारमेवोपदिशेत्। मात्रालाघवविरहेऽपि प्रक्रियालाघवसत्त्वात्। न चैवमायादेशोऽपि न स्यादिति वाच्यम्, "यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते" इति न्यायात्। गुणं प्रति हि ऐकारोपदेशोऽनर्थकः, ग्ले इत्यस्यापि सुपठत्वात्। आयादेशस्य तु नि-

सिद्धमेव। न च 'ग्लाय' इत्येव पठ्यतामिति वाच्यम्, तथा सति हि 'त्वया ग्लायते' इति रूपं न स्यात्, यकारद्वयश्रवणप्रसङ्गात् 'जग्लौ' इत्याद्यसिद्ध्यापत्तेश्च। यत्तु 'एकाजजन्तत्वाभावादिट्प्रसङ्गेन 'ग्लाता' इत्यादि न स्यादिति। तन्न, अनुदात्तोपदेशेष्वेषां सुपठत्वात्। न चैवम् 'अग्लासिष्टाम्' इत्याद्यसिद्धिः अनादन्तत्वेन सगिटोरसम्भवादिति वाच्यम् "लोपो व्योः" (पा०सू०६-१-६६) इति यलोपे कृते सगिटोः सुलभत्वात्। सन्निपातपरिभाषा त्वनित्येति कृतितुग्ग्रहणेन ज्ञापयिष्यते। तेन वल्सन्निपातेन कृतो यलोपो वल्सन्निपातविघातकमपीटं प्रवर्त्तयिष्यत्येव। अनित्यताश्रयणेनैव हि 'दाक्षिः' 'गोदः' इत्यादावदातोलोपः। अन्यथा इञ् कप्रत्ययौ प्रति तयोरुपजीव्यत्वाल्लोपो न स्यात्। अस्तु वा 'सन्निपातपरिभाषाश्रयणाद् 'अग्लासिष्टाम्' इत्यादि न सिध्येद् इत्यपि यान्तोपदेशे दोषान्तरम्। सर्वथापि संध्यक्षराणामुपदेशसामर्थ्याद् गुणो न। आयादयस्तु भवन्त्येवेति सिद्धम्।

स्यादेतत्। "आदेच" (पा०सू०६-१-४५) इत्यात्वमपि तर्हि बाध्यताम्। नह्यैजुपदेश आत्वस्य निमित्तम्, ग्ले इत्युपदेशेऽपि तस्य सुकरत्वात्। शिति गुणेनाशित्यात्वेनैचोऽपहारे प्राप्ते ऐजुपदेशसामर्थ्येन गुणात्वयोर्मध्ये कतरद्बाध्यं कतरन्नेत्यत्र विनिगमनाविरहेणोभयबाधप्रौव्यात्। न चैवमात्वविधेः कोऽवकाश इति वाच्यम् "धेट् पाने" (दि० प०) "शो तनूकरणे" इत्यादेरवकाशस्य स्पष्टत्वात्। नन्वेवमादेङ् इत्येव ब्रूयात्, तथा चैज्ग्रहणं निरवकाशमेवेति चेत्? न, उत्तरार्थत्वात्। "मीनातिमिनोति" (पा०सू०६-१-५०) इत्यत्र ह्येच इत्यनुवृत्त्या 'आकारान्तानामेजन्ताः प्रकृतयः, एजन्तानामपीकारान्ताः' इति घुसंज्ञासूत्रे वार्तिककारः स्फुटीकरिष्यति।

अत्राहुः-अन्यतरबाधेनैव सम्भवे उभयबाधकल्पनं तावदन्याय्यम् तत्र यद्यणुरपि विशेषो नावधार्येत तर्हि विनिगमनाविरहात्स्यादेवोभयबाधः। अस्ति चेह विनिगमकम् "न ध्याख्या" (पा०सू०८-२-५७) इति सूत्रे ध्यायतेः कृतात्वस्य निर्देशेनात्वाबाधज्ञापनात्। किञ्च एज्ग्रहणसामर्थ्यादप्यात्वं भवति। यत्तूक्तमुत्तरार्थं तदिति। तन्न, "मीनाति" (पा०सू०६-१-५०) इति सूत्रेण हि नैचः स्थाने आत्वं विधीयते। किन्त्वेज्निमित्ते प्रत्यये विवक्षिते उपदेशावस्थायामेवान्त्यमात्रास्यात्वं विधीयते। अन्यथा 'दायः' इत्यादौभावे घञं बाधित्वा "एरच्" (पा०सू० ३-३-५६) स्यात्, 'ईषदवदानः' 'स्ववदान' इति "आतो युच्" (पा०सू० ३-३-१२८) न स्यात् 'अवदायः' इति "श्याद्व्यधा" (पा०सू०३-१-१४१)

इति णो न स्यात्। स्पष्टीकरिष्यते चेदं षष्ठे एव भाष्यकृता। एवञ्चै-ङ्निमित्ते प्रत्यये इत्युच्यमानेऽपि 'दापयति' मापयति' इत्यादि सि-ध्यत्येव, णिचो गुणं प्रत्यपि स्वरूपयोग्यत्वात्, वृद्ध्या गुणबाधेऽपि यो-ग्यतानपायात्। न चेह फलोपधानं विवक्षितम्, आत्वस्यैज्विषये प्रा-गेव प्रवृत्तेरभ्युपगमात्। अन्यथा घञ्युच्णप्रत्यया न स्युरिति समन-न्तरमेवोक्तम्। तस्मादात्वं भवत्येव। गुणस्त्वैकारोपदेशसामर्थ्याद् बा-ध्यते इति स्थितम्।

व्यञ्जनानां गुणः स्यादिति परमवशिष्यते। ततश्च 'ईहिता' इत्यत्र हकारस्य कण्ठ्यत्वादकारः स्यात 'उम्भिता' इत्यत्र भकारस्यौष्ठ्य-त्वादोकारः; ततश्च 'येता' 'उनविता' इति स्यात्। ईकारस्य यणि कृते-ऽकारस्येटा सहाद्गुणो न त्वल्लोपः, आर्द्धधातुकोपदेशे यदकारान्तं तस्य लोप इति व्याख्यातत्वात्। उम्भेश्चानुस्वारपरसवर्णयोर्गुणे कर्त्तव्येऽसिद्धत्वादिति। नैषदोषः "सप्तम्यां जनेर्डः" (पा०सू०३-२-९७) इत्यत्र डप्रत्ययस्य डित्करणं ज्ञापकं न व्यञ्जनस्य गुणो भवतीति। यदि हि स्यात्तर्हि नकारस्यार्द्धमात्रिकस्य मात्रिके अकारे गुणे कृते त्रयाणामकाराणाम् "अतो गुणे" (पा०सू०६-१-९७) इति पररूपे च सिद्धं रूपम 'उपसरजाः' 'मन्दुरजः' इति, तत्किं टिलोपार्थेन डित्कर-णेन? स्त्रीगवीषु पुंगवानां गर्भाधानाय प्रथममुपसरणमुपसरः। "प्रजने सर्त्तेः" (पा०सू०३-३-७१) इत्यप्प्रत्ययो घञोऽपवादः। प्रजनः स्यादुप-सरः"(अ०को०३-२-२५) इति सङ्कीर्णवर्गेऽमरः। प्रजायतेऽस्मिन्प्रजनः प-शूनां गर्भग्रहणकाल इति क्षीरस्वामी। उपसरे जात उपसरजः, मन्दुरा-यां जातो मन्दुरजः "ङ्यापोः संज्ञाछन्दसोर्बहुलम्" (पा०सू०६-३-६३) इति ह्रस्वः। "वाजिशाला तु मन्दुरा" (अ०को०२-२-७) इत्यमरः। न च डकारः श्रवणार्थोऽस्त्विति वाच्यम् "प्रावृट्शरत्कालदिवां जे" [पा० सू०६-३-१५] इति कृतटिलोपनिर्देशाल्लिङ्गात्। ननु नेदं लिङ्गं "जै क्षये" (भ्वा०प०) इत्यस्य कप्रत्ययान्तस्य 'ज' इति निर्देशोपपत्तेः। कथं तर्हि क-र्मण्युपपदे विहित आतः कः 'प्रावृषिजः' इत्यादौ स्यादिति चेत्? 'द्विपः' 'पादपः' इत्यादिसिद्धये "सुपि स्थः" (पा०सू०३-२-४) इत्यत्र सुपीति योगविभागाभ्युपगमात्। सत्यम्, डकारस्य श्रवणार्थत्वे इत्संज्ञाशास्त्रं बाध्येत। न च प्रयोजनाभावः, टिलोपार्थत्वात्। न च गुणेनान्यथा-सिद्धिः, तदभावस्यापि ज्ञाप्यत्वात्। निषादस्थपत्यधिकरणन्यायेन (जै०न्या०६-१-१३) फलमुखगौरवस्यादोषत्वात्, डकारस्य श्रवणार्थ-ताभ्युपगमे "सिद्धं तु नित्यशब्दत्वात्किमर्थं शास्त्रमिति चेन्निवर्त्तक-

त्वात्सिद्धम्" इति वृद्धिसूत्रस्थवार्तिकविरोधाच्च। नन्वसति ङित्वे रूपं न सिध्यति, नकारस्थाने गुणस्यापि सानुनासिकस्य प्रसङ्गात्। न च निरनुनासिकेन प्रत्ययाकारेण सह पररूपाच्छुद्धो भविष्यतीति वाच्यम्, पररूपविधानेऽपि गुणानामभेदकतया पर्यायेण सानुनासिकप्रसक्तेर्दुर्वारत्वादिति। मैवम्, "एङि परः" इतीयता सिद्धे रूपग्रहणादधिकाद्यत्नाद् गुणविवक्षोपपत्तेः। तस्य ह्येतदेवफलम्—यादृशं परस्य रूपं निरनुनासिकत्वाद्युपेतं तादृगेव यथा स्यादिति। तस्माज्जनेर्डवचनं ज्ञापकं न व्यञ्जनस्य गुणो भवतीति। एवञ्च "इग्ग्रहणमात्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थम्" इति वार्त्तिकमसङ्गतमिति प्राप्ते भगवान् भाष्यकार इत्थं सिद्धान्तमाह—उक्तरीत्या ज्ञापकेनैवात्सन्ध्यक्षराणां निरासेऽपि व्यञ्जननिवृत्त्यर्थं सूत्रं कर्त्तव्यमेव। यत्तूक्तं जनेर्डवचनं ज्ञापकमिति। तन्न, गमेरपि ह्ययं डो वक्तव्यः। गमेश्च गुणे क्रियमाणे आन्तर्यत ओकारः स्यात्। ततश्च 'नगः' 'अगः' 'अभ्युद्गः' 'समुद्गः' इत्यादि न सिध्येत्। ततश्च तत्र चरितार्थं डित्वं कथं व्यञ्जनस्य गुणाभावं ज्ञापयेदिति। ननु "जनेर्डः" [पा०सू०प०३-२-९७] इत्येव डप्रत्ययो गमेर्न विधीयते किं तु "गमश्च" [पा०सू०३-२-४७] "अन्तात्यन्ताध्वदूरपार" [पा० सू०३-२-४८] इति प्रकरणे पठितेन "अन्यत्रापि दृश्यते" [का०वा०] इति वार्त्तिकेन डप्रत्ययान्तरमेव। तथाच कथं भाष्यकृतोक्तं "गमेरप्ययं डः" इति? सत्यम्, "सप्तम्यां जनेर्डः" [पा०सू०३-२-९७] इति प्रकरणे तावद् "अन्येष्वपि दृश्यते" [पा०सू०३-२-१०१] इति सूत्रेण डो विधीयते इति निर्विवादम्। तत्र चान्येष्वप्युपपदेषु जनेर्डो दृश्यते इत्यक्षरार्थः। तेन 'अजः' 'द्विजः' 'अनुजः' इत्यादि सिद्धम्। एवमपि धात्वन्तराड्डविधायकाभावात् 'परितः खाता परिखा' इत्यादि न सिद्ध्येदित्याशङ्क्य तत्र वार्त्तिककृतोक्तम् "अन्येभ्योऽपि दृश्यते" [का०वा०] इति। अयं च सौत्रदृश्यपिग्रहणसूचित एवार्थो वार्त्तिकेन विवृतो न त्वपूर्वः संगृहीतः। तथाच तत्र वृत्तिकार आह—"अपिशब्दः सर्वोपाधिव्यभिचारार्थः। तेन धात्वन्तरादपि भवति—परितः खाता परिखेति। दृशिग्रहणात्कारकान्तरे कालान्तरे च" इत्यादि तत्रैव स्पष्टम्। एवं स्थिते सौत्रेणैवानेन 'परिखा' इत्यादेरिव 'नगः' 'अग' इत्यादेरपि सिद्धौ "अन्तात्यन्त" [पा०सू०३-२-४८] इति प्रकरणे "अन्यत्रापि दृश्यते" इति वार्त्तिकं न कर्त्तव्यमेव। क्रियमाणं वा एतत्सूत्रसिद्धार्थविवरणपरतया नेयमित्याशयेन भगवतोक्तम्—"गमेरपि ह्ययं डो वक्तव्यः" इति। नन्वेवमपि ङित्वं व्यर्थमेव, गमेर्विचैव सिद्धे "गमेर्डोः" इति डोप्रत्ययविधानेन

मकारस्य गुण ओकारो न भवतीति ज्ञापितत्वात् । तस्माड्डुप्रत्ययस्य डित्त्वं पूर्वोक्तरीत्या ज्ञापकमेव । किञ्च, डोप्रत्ययविधानमेव व्यञ्जनस्य गुण इति ज्ञापयति । अन्यथा विचैव सिद्धे किं तेनेति चेत् ? न, विचि हि सति गुणः क्रियमाणः सानुनासिक ओकारः स्यादिति निरनुनासिकसिद्धये डोप्रत्ययविधानादिति दिक् ।

अत्र वदन्ति–"तेनोतेर्डउः सन्वच्च" इति डित्करणान्न व्यञ्जनस्य गुणो भविष्यति । यत्तु शास्त्रातिदेशोऽयं कार्यातिदेशो वा ? आद्ये 'ऊर्णुनविषति' इत्यत्रेव "द्विर्वचनेऽचि" [पा०सू०१–१–५९] इति स्थानिवद्भावेन 'तँतँ अउ' इति स्थिते "सन्यतः" [पा०सू०७–४–७९] इतीकारः सानुनासिकः स्यात् । द्वितीये त्वभ्यासकार्यं दुर्लभमिति । तन्न, आद्ये गुणानां भेदकत्वाद् 'इमौ' 'इमे' इति वदुपपत्तेः । द्वितीयेऽपि 'बभ्रुः' 'जुहूः' इत्याद्यर्थं धात्वधिकारीयद्वित्वे ऽभ्याससंज्ञास्वीकारात् । अत एव "लिटिधातोः" [पा०सू०६–१–८] इति सूत्रे "धातुग्रहणं तिष्ठतु तावत्सांन्यासिकम्" इति भाष्यम् । "आदेच" [पा०सू०६–१ ४५] इति सूत्रे धातुग्रहणानुवृत्तेरापाततो भाष्ये प्रदर्शितत्वेऽपि व्यङ्विधिभाष्येऽननुवृत्तेरेव सिद्धान्तिततया भाष्याशयस्येत्थमेव वर्णनीयत्वादिति दिक् ।

किञ्च, यथा स्थानेन्तरतमपरिभाषासंस्कृतावनुनासिकपरसवर्णविधी स्थानप्रयत्नाभ्यामन्तरतम 'एतन्मुरारिः' 'त्वं करोषि' इत्यादिकं विषयं लब्ध्वा चरितार्थौ 'चतुर्मुखः' 'कुण्डं रथेन' इत्यादौ न प्रवर्त्तेते इति हयवरट्सूत्रे सिद्धान्तितम्, तथेहापि सार्वधातुके जुसि गुणः लिचि वृद्धयादयः 'नेता' 'अबिभयुः' 'अनैषीत्' इत्यादौ चरितार्थाः 'उम्भिता' 'अनेनिजुः' 'अभैत्सीत्' इत्यादिषु न भविष्यन्ति । न चैवं 'नेता' 'अनैषीत्' इत्यादावेव स्थानगुणप्रमाणैस्त्रिभिरान्तर्यलाभात् 'चेता' 'अचैषीत्' इत्यादौ प्रमाणान्तर्यविरहेण गुणवृद्धी न स्यातामिति वाच्यम् "सृघस्यदः क्मरच्" [पा०सू०३–२–१६०] इति क्मरचः क्नोश्च कित्करणेन प्रमाणत आन्तर्यस्याविवक्षाया ज्ञापनात् । नचैवमपि 'ईहिता' 'ईशिता' इत्यत्र कण्ठ्यतालव्ययोर्विवृतयोश्च हकारशकारयोस्तादृशावेवादेनौ स्यातामिति वाच्यम्, "नाज्झलौ" [पा०सू०१–१–१०] इति सूत्रस्य प्रत्याख्यानावसरे ऊष्मणामीषद्विवृततायाः सिद्धान्तयिष्यमाणत्वात् । न चैवं विवृतकरणाः स्वरास्तेभ्य एओ विवृततराविल्यादि शिक्षाऽनुरोधात् 'चेता' 'नेता' इत्यादावपि गुणाप्रवृत्तिः स्याद्विवृतविवृततरत्वकृतवैलक्षण्यसत्त्वादिति वाच्यम्, तथासति विधेर्निर्विषयतापत्तेः,

"जयः करणम्" [पा०सू०६-१-२०२] इत्यादिनिर्देशैः क्नसुन्क्मरच्प्रभृतीनां कित्त्वेन चेकारादिषु गुणप्रवृत्त्यनुमानाच्च । आत्सन्ध्यक्षरव्यञ्जनेषु तु गुणाद्यप्रवृत्तिरेवोचिता । तथाच निर्देशाः "यातिवातिद्रातिप्साति" [पा०सू०प०८-४-१७] "ध्यायतेः सम्प्रसारणं च" [का०वा०] "वहतिचिनोतिदेग्धिषु च" [पा०सू०प०८-४-१७) इत्यादि । अथ क्नोः कित्त्वेनापि गुणवृद्धिविधावन्तरतमपरिभाषाऽनुपस्थितिरेव ज्ञाप्यतामिति चेत्? न, सत्यामपीक्परिभाषायामीकारस्याकारादिनिवृत्तयेऽन्तरतमपरिभाषाया आवश्यकत्वादिति । तदेवं ङओर्डित्त्वादनान्तर्यान्निर्देशाच्च निराकृतं व्यञ्जनं भाष्य एवैच आकारश्च निराकृतः । तस्माद्व्यर्थं सूत्रमिदम् ।

अथ यद्युत्तरार्थता, विभज्य योगं किमिति परिभाषात्वमिष्यते?

अत्रोच्यते, "क्ङिति च" (पा०सू०१-१-५) इति सूत्रे चकारस्य इतिशब्दपर्यायतामाश्रित्येक इति ये गुणवृद्धी तयोर्निषेध इति तावद्वक्ष्यते । अन्यथा 'लैगवायनः' इत्यत्र ओर्गुणोपि निषिध्येत । औपगवादिस्तु तस्यावकाशः । तथा 'पौरोहित्यम्' इत्यत्रादिवृद्धिश्च न स्यात् । एवं स्थिते यदीयं परिभाषा प्रत्याख्यायते तदा कथञ्चित्तत्रतत्र गुणवृद्धिविधाविकामेव स्थानित्वपर्यवसानेऽपीक इति पदानुच्चारणेनेग्लक्षणत्वविरहान्निषेधो न प्रवर्त्तेत । ततश्च 'कृतः' 'कृतवान्' 'कुरुतः' 'छिन्नं' 'छिन्नवान्' इत्यादि न सिध्येत् । निषेधसूत्रं च निर्विषयं स्यात् परिभाषापरित्यागपक्षे इग्लक्षणयोर्गुणवृद्ध्योरप्रसिद्धत्वात् । तदेतत्स्फुटीकृतं भाष्यकृता—"उत्तरार्थमेव तर्हि सिजर्थं वृद्धिग्रहणम्" इति । तस्य ह्ययमाशयः—यद्यपि "सिचि वृद्धिः" (पा०सू०७-२-१) इति विधौ वक्ष्यमाणरीत्या परिशेषादिकामेव स्थानित्वं लभ्यते । तथापीग्लक्षणत्वं विना निषेधो न प्रवर्त्तेत । तस्मादुत्तरार्थं निषेधप्रवृत्त्यर्थं च वृद्धिग्रहणमिति । एवञ्च वदता न्यायसाम्याद् गुणग्रहणस्याप्येतदेव प्रयोजनं सूचितम् । कथं पुनर्गुणवृद्धिविधौ सर्वत्र परिभाषाव्यतिरेकेणेकः स्थानित्वपर्यवसानं येन निषेधार्थता वर्ण्यते इति चेत्? शृणु, "सार्वधातुकार्द्धधातुकयोः" (पा०सू०७-३-८४) "जुसि च" (पा०सू०७-३-८३) इति गुणौ तावदलोन्त्यपरिभाषयाज्ञान्त्येऽलि प्राप्तौ प्रागुक्तज्ञापकादिभिरात्सन्ध्यक्षरव्यञ्जनेभ्यो व्यावर्त्तिताविक्ष्वेव विश्राम्यतः । मिदि पुगन्तलघूपधादिगुणेषु तु स्थानी निर्दिष्ट एव । तथाहि, "मिदेर्गुणः" (पा०सू०७-३-८२) इत्यत्र मिद इर्मिदिस्तस्य मिदेरित्यर्थः, पुक्यन्तः पुगन्तः लघ्वी उपधा लघूपधा पुगन्तश्च लघूपधा चेति समाहारद्वन्द्वात्

षष्ठी। न चैवं 'यापयति' इत्यादावतिप्रसङ्गः, सन्निपातलक्षणपरिभाषयाऽऽदन्तलक्षणस्य पुको गुणाप्रवर्त्तकत्वात्। "ऋच्छत्यृताम्" (पा० सू०७-४-११) इत्यत्रापि द्वयोर्ऋतोर्दीर्घस्य चेति त्रयाणां प्रश्लिष्टनिर्देशः। तद्यथा—आ च ऋश्च ॠतः ऋच्छतेरा ऋच्छत्या, स च ॠतश्च तेषामिति षष्ठीतत्पुरुषद्वन्द्वोभयगर्भो द्वन्द्वः। ऋच्छत्या च आ च ॠतश्चेति त्रिपदद्वन्द्वो वा। तेन ऋच्छत्यृकारस्य स्थानित्वं लभ्यते। वस्तुतस्तु चतुर्णामिह प्रश्लेषा बोध्याः तेन 'आरिवान् सर्वभ्रूणान्यारुषि' इत्यादावर्त्तेः क्वसौ गुणः सिद्धः पुनर्विधानसामर्थ्यात्। अन्यथा क्वसोः कित्करणसामर्थ्यात् 'तितीर्वान्' इत्यत्रेव गुणो निषिध्येत। एतच्च "क्वसुश्च" (पा०सू०३-२-१०७)इति सूत्रे स्फुटीकरिष्यामः। तथा "ऋदृशोऽङि" (पा०सू०७-४-१६) इत्यत्राप्युरङि गुण इति योगो विभज्यते। ततो दृशः। उरित्याद्यनुवर्त्तते। "स्थूलदूर" (पा०सू०६-४-१५६ इति सूत्रेऽपि योगविभागः कर्त्तव्यः 'स्थूलदूरयुवह्रस्वानां यणादिपरम्' इत्येको योगः, 'क्षिप्रक्षुद्रयोः पूर्वस्य च गुणः' इति योगान्तरम्। तत्र 'स्थवीयान्' इत्यादावोर्गुणेन सिद्धम्। आभीयस्यासिद्धत्वस्य "श्नसोरल्लोपः" (पा०सू०६-४-१११) इति तपरकरणेनानित्यताज्ञापनात् भाष्यकृता प्रत्याख्यानाच्च। यण आदिर्यणादिः ततः परमिति समासः। तथाच क्षिप्रक्षुद्रयोर्यण आदी पकारदकारौ ततः परस्य रशब्दस्य लोपस्ताभ्यामेव च पूर्वस्येकारस्योकारस्य च गुण इत्यर्थः। तदित्थं गुणाः सर्वे इकि विश्रान्ताः। मृजेर्वृद्धावप्यच्च इत्यपकृष्यते। मृजेर्वृद्धिरचः, ततो ञ्णिति, अच इत्येव। न चैवम् 'अमार्ट्' इत्यत्राटोपि वृद्धिः स्यादिति वाच्यम् लादेशेषु कृतेष्वङिति पक्षे परत्वाद् वृद्धौ सत्यामट्। तत्र कृते पुनर्वृद्धिर्न भवति सकृत्प्रवृत्त्या चरितार्थत्वात्।

यदा त्वसिद्धवत्सूत्रप्रत्याख्यानाय "ल्लुङ्" इति द्विलकारकनिर्देशमाश्रित्योपदेशे आर्द्धधातुक इत्यनयोरन्यतरदनुवर्त्य वा लावस्थायामेवाट् क्रियते, "एरनेकाचः" (पा०सू०६-४-८२) इति विभज्य 'इणो यण्' इत्यनुवर्त्यानेकाचश्चेत्तर्हीण एवेति नियममाश्रित्य 'अद्ध्यैयाताम्' इत्यादौ यण् वार्यते, तदा लावस्थायां यद्यपि वृद्धिर्न भवति लकाराणां ङित्त्वेन 'मृष्टः' इत्यादाविव तन्निषेधात्। ततश्चान्तरङ्गत्वादडागम एव, तथापि 'अन्त्याभावेऽन्त्यसदेशस्य'(प०भा०१०४) इति परिभाषामाश्रित्याटो वृद्धिर्निवर्तनीया। परिभाषाप्रत्याख्यानपक्षे त्वङ्गाक्षिप्तेन प्रत्ययेनाजिवशेष्यते येन नाव्यवधानन्यायाच्च सिद्धम् 'अमार्ट्' इत्यादि रूपम्। सिचि वृद्धावपि विधेयायां नास्तीक्परिभाषाया उपयोगः व्यावर्त्याभावात्। न

च 'अचिकीर्षीत्' इत्यकारो व्यावर्त्यः "यल्लोपाचियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषिद्धम्" (का०वा०) इति वचनादल्लोपेनैव सिद्धत्वात् । अन्यथा 'चिकीर्षकः' इति न स्यात् 'चिकीर्षायकः' इति च प्रसज्येत । आकारस्य तु नास्ति विशेषः सगिड्भ्यां बाधश्चेत्युक्तम् । एजन्तमपि न सम्भवति, आत्वविधानात् । 'उदवोढाम्' इत्यादौ तु ढलोपस्यासिद्धता । रैनौग्लौशब्दानामाचारक्विबन्तानां सत्यामसत्यां वा वृद्धौ न कश्चिद्विशेषः । गोशब्दात्क्विपि 'अगवीत्' इत्यत्रापि नातिप्रसङ्गः । "ऋत इद्धातोः" (पा०सू०७-१-१००) इत्यतोऽनुवृत्तेन धातुग्रहणेन सिजाक्षिप्तस्य धातोर्विशेषणे सति धातुरेव यो धातुर्न तु कथंचित्प्रातिपदिकमिति व्याख्यानादिति कैयटादयः ।

नन्वेवं कवेः अकवायीत्, विधोः अविधायीत्, पितुः अपितारीत्, अन्तरङ्गमपि गुणं सिचि वृद्धिर्बाधत इति वदन्माधवो विरुध्येत । सत्यम्,

यद्यविरोधः सम्पादनीय इत्याग्रहस्तर्हीत्थं वर्णनीयम्—धातोरितिवदोत इत्यप्यनुवर्त्तते । तच्च वाक्यभेदेन सम्बध्यमानं नियमार्थं सम्पद्यते—ओदन्तस्य धातोश्चेद् वृद्धिस्तर्हि धातोरेव धातोर्न तु नामधातोरिति । यद्वा, "नेटि" (पा०सू०७-२-४) इत्यत्र नेति योगं विभज्य मण्डूकप्लुत्या सम्बन्धानुवृत्त्या वा 'गोतः' इत्यनुवर्त्यौकारान्तस्य धातोर्वृद्धिर्निषिध्यते । अथवा "बहुलं छन्दसि" (पा०सू०७-१-१०३) इत्यतो बहुलमित्यनुवर्त्य सिचि वृद्धिर्नामधातोरिगन्तस्य भवति न त्वोदन्तस्येति कथं चित्समाधेयम् ।

व्यञ्जनेष्वन्तरतमपरिभाषाबलेनैवानुनासिकपरसवर्णयोरिवातिप्रसङ्ग उद्धृत एव । अभ्युपेत्य तु ब्रूमः, नाप्राप्तायां सिचि वृद्धावारभ्यमाणा हलन्तलक्षणा वृद्धिर्बाधिका भविष्यति । "नेटि" (पा०सू०७-१-४) इति निषेधस्तु हलन्तस्य यावती वृद्धिः प्राप्ता "सिचि वृद्धिः" (पा०सू० ७-२-१) इति वा "हलन्तस्य" (पा०सू०प०७-२-३) इति वा तस्याः सर्वस्याः, न तु सूत्रविशेषप्रापितत्वे आग्रहः ! तेन 'अकोषीत्' 'अमोषीत्' इत्यादौ द्विविधाऽपि वृद्धिर्निषिध्यते इति सुस्थम् । तस्मान्निषेधसिद्ध्यर्थमिग्लक्षणतां सम्पादयितुं सूत्रमिति स्थितम् ।

स्यादेतत् 'कृतः कृतवान्' 'छिन्नश्छिन्नवान्' इत्यादौ निषेधसिद्धये गुणग्रहणमस्तु । वृद्धिग्रहणं तु व्यर्थम् । न च 'मृष्टो मृष्टवान्' इत्यादौ निषेधसिद्धिस्तत्फलं, योगविभागेन सिद्धत्वात् । तथाहि, मृजेर्वृद्धिरित्यस्यानन्तरम् 'अजादौ क्ङिति वा' इत्येवं रूपं वचनमवश्यं क-

त्तव्यम्–'मृजन्ति' 'मार्जन्ति'इत्यादिसिद्ध्यर्थम्। एवं स्थिते अजादौ क्ङितीति योगो विभज्यते। नियमार्थं चेदम्–क्ङिति चेद्भवत्यजादावेवेति। तेन 'मृष्टो मृष्टवान्'इत्यादि सिद्धम् । ततोऽजादावपि विकल्पेनेत्येतदर्थं 'वा' इति द्वितीयो योग इति। तस्माद्वृद्धिग्रहणस्य फलं दुरुपपादमिति । अत्राहुः। "णू स्तुतौ" "धू विधूनने" कुटादिषु पठ्येते। ताभ्यां लुङि 'अनुवीत्' 'अधुवीत्'इतीष्यते । तत्र सिचि वृद्धेः क्ङितीति निषेधायेग्लक्षणतां सम्पादयितुमिह वृद्धिग्रहणमिति। नन्विहान्तर्भूतसिज्मात्रापेक्षत्वादन्तरङ्गे उवङि कृते हलन्तत्वात् "नेटि" [पा०सू०७–१–४] इति निषेधः सिद्ध इति चेत्? न, सिच्यन्तरङ्गं नास्तीति सिद्धान्तादुवङः प्रागेव वृद्धिप्रसङ्गात्।

स्यादेतत्। "अन्तरङ्गं बलीयः" [प०भा०५०] इति तावद् "अचः परस्मिन्" [पा०सू०१-१-५७] इति सूत्रे स्थापयिष्यते । तदविशेषात्सिच्यप्यस्तु। न चैवम् 'अत्रैषीत्' 'अह्रैषीत्' इत्यादौ गुणः स्यादिति वाच्यम्, तस्यैव वृद्धिसम्भवेनेष्टापत्तेः। नहीदानीं विधाविग्ग्रहणमस्ति येनैकारस्य वृद्धिर्न लभ्येत । न चैवमपि 'अस्तौषीत्' इत्यादावन्तरङ्गत्वाद् गुणे कृते ओतो नेति व्याख्यानपक्षे वृद्ध्यसम्भवः, बहुलग्रहणादणिगन्तानां नेति पक्षे तु 'अचैषीत्' इत्यादावपि दोष एवेति वाच्यम्, ओतो धातोरेव धातोर्न तु नामधातोरिति तृतीयपक्षाश्रयणेन सर्वसमाधानात्। 'अकार्षीत्' इत्यादौ हलन्तलक्षणा वृद्धिरस्तु। 'अतारीत्' इत्यादौ त्वन्तरङ्गत्वाद् गुणे हलन्तलक्षणायां वृद्धौ "नेटि" [पा०सू०७–१–४] इति प्रतिषिद्धायाम् "अतो हलादेः" [पा०सू०७–२–७] इति विकल्पं बाधित्वा "अतो ल्रान्तस्य" [पा०सू०७–२–२] इति नित्या वृद्धिः। 'अलावीत्' इत्यादावप्यन्तरङ्गत्वाद्गुणावादेशयोः कृतयोः "अतो ल्रान्तस्य" [पा०सू०७–२–२] इत्यत्र "लोपो व्योः" [पा०सू०६–१–७६] इति लोपेन वकारस्यापि व्याख्यानान्नित्या वृद्धिर्भविष्यति–मा भवानवीत्। 'अमवीत्' इत्यत्रापि तर्हि नित्या वृद्धिः स्यादिति चेत्? न, णिश्विग्रहणमपनीय तत्स्थाने अविमव्योः प्रक्षेपेण वृद्धिनिषेधात्। न ह्यस्मिन्पक्षे णिश्विग्रहणमुपयुज्यते । 'औनयीत्' अश्वयीत्' इत्यत्रान्तरङ्गत्वाद् गुणायादेशयोः कृतयोर्यान्तानां नेत्येव निषेधसिद्धेः। नन्वेवमवेरिव मवेरपि नित्यं निषेध एव स्यात्, इष्यते तु विकल्पः। नैष दोषः "अतो ल्रान्तस्य" [पा०सू०७–२–२] इत्यत्र वकारप्रश्लेषेण या नित्या वृद्धिः प्राप्ता सैवेहाविमव्योर्नेत्यनेन मवेर्निषिध्यते न तु "अतोहलादेः" [पा०सू०७–२–७] इत्येषाऽपि। "मध्येपवादाः पूर्वान्विधीन्बाधन्ते नोत्त-

रात्" [प०भा०६०] इति न्यायात्। न चैवं जागर्त्तेरपि तथा प्रसङ्गः, तत्र बाध्यसामान्यचिन्तामाश्रित्य स्वविषये प्राप्तं सर्वं बाध्यते इति स्वीकारात्। यद्वा, अपवादे निषिद्धे उत्सर्गो न प्रवर्त्तते इति जागर्त्ता-वाश्रयणीयं भवतौ तु प्रवर्त्तते इति बाध्यसामान्यविशेषचिन्तयोर्बाधके निषिद्धे बाध्यस्य प्रवृत्त्यप्रवृत्त्योश्च लक्ष्यानुरोधेन व्यवस्थाया अनुपद-मेव वक्ष्यमाणत्वात्। न चैवम् 'अगवीत्' इत्यत्रापि नित्या वृद्धिः स्याद्व-कारप्रश्लेषादिति वाच्यम्, सिचि वृद्धेरिवास्या अपि धातुग्रहणेन वार-णात्। तस्मात्सिच्यन्तरङ्गाश्रयणेनैव'अनुवीत्' 'अधुवीत्' इत्यादेः सि-द्धौ "क्ङिति च" [पा०सू०१-१-५] इति प्रतिषेधस्यानपेक्षणाद्वृद्धिग्रहणं व्यर्थमेवेति।

अत्रोच्यते-वकारप्रश्लेषे सति "शवतिर्गतिकर्मा कम्बोजेषु विकार एवैनमार्या भाषन्ते" इति पस्पशायां भाष्यकारैरभ्युपगतस्य शवधातोर पि नित्यवृद्धिप्रसङ्गः, तस्यापि प्रतिषेधे वा कथं णिश्विभ्यां निमानम्? गौरवप्रसङ्गात्। किञ्च, न वयं व्यसनितया सिच्यन्तरङ्गं नास्तीति ब्रूमः, किन्तु न्यायबलाज्ज्ञापकबलात्फलानुरोधाच्च। तथाहि, येननाप्राप्तिन्या येनान्तरङ्गं वृद्ध्या बाध्यते 'सत्यपि सम्भवे बाधनं भवति' इत्यभ्युपग-मात्। अन्यथा तक्रेण दधि न बाध्येत, श्नमकजादिभिश्च शप्प्रत्ययक-प्रत्ययादयो न बाध्येरन्, देशभेदेनोभयसम्भवात्। न च मध्येपवाद-न्यायेनोवङेव वृद्ध्या बाध्येत न तु गुणोऽपीति वाच्यम्, बाध्यस्य भेदेन विवक्षायां ह्येतदेवं स्यात्। बाध्यस्य सामान्यचिन्तायां तु स्वविषये प्राप्तं स्वानपवादभूतं सर्वं बाध्यते, यथा "अचिर" (पा०सू०७-२-१००) इत्येतेन गुणदीर्घोत्वानि। अन्यथा तत्रापि मध्येपवादन्यायेन रेफो दीर्घो-त्वे एव बाध्येत न तु गुणम,तस्य परत्वात् बाध्यस्य च क्वचिद्भेदेन चिन्ता क्वचित्सामान्यरूपेणेत्युभयमपि लक्ष्यानुरोधात्तत्रतत्राश्रीयते। णिश्विग्रहणं चात्र लिङ्गम्। अन्यथान्तरङ्गत्वाद् गुणायादेशयोः कृत-योर्यान्तानां नेति निषेधादेव'औनयीत्''अश्वयीत्' इत्यादेः सिद्धौ किं णि-श्विग्रहणेन? ज्ञापकान्तरमप्युक्तं भाष्ये-यच्च करोत्यकारग्रहणं लघोरिति कृतेऽपीति। अस्यायमाशयः-"अतो हलादेः" [पा०सू०७-२-७] इति सूत्रेऽद्ग्रहणस्य न तावत्सन्ध्यक्षरादिकं व्यावर्त्यम्, लघुग्रहणेनैव व्यु-दासात्। इदुदतः परमवशिष्यन्ते 'अचेतीत्' 'अकोषीत्' 'अनर्तीत्' इति। तेऽप्यन्तरङ्गेण गुणेनापहृताश्चेत्तर्हि व्यर्थमद्ग्रहणं स्यात्। न च 'अकुटीत्' 'अपुटीत्' इत्यादावुकारव्युदासाय तदिति वाच्यम्, तत्राप्यन्तरङ्गेण गुणेन वृद्धिबाधे सति गुणे ङित्त्वान्निषिद्धेऽपि वृद्धेरप्र-

वृत्तेः, न हि देवदत्तस्य हन्तरि हते देवदत्तस्य पुनरुन्मज्जनं भवतीति-न्यायात् । अत एव "नान्तः पादम्" इति पाठे पूर्वरूपनिषेधे सत्ययादयोऽपि न प्रवर्त्तन्ते । तेन 'सुजाते अश्वसूनृते, इत्यादि च सिध्यतीति स्वीकृतं भाष्ये । न चैवमपवादाभावे पुनरुत्सर्गस्य स्थितिरिति निर्विषयं स्याद् 'वृक्षौ' इत्यादौ "नादिचि" [पा०सू०६-१०४] इति पूर्वसवर्णे निषिद्धे वृद्धिश्च न प्रवर्तेतेति वाच्यम् "भिद्योद्ध्यौ नदे" (पा०सू०३-१-११५] "तौ सत्" [पा०सू०३-२-१२७] इत्यादि लिङ्गनापवादे निषिद्धे उत्सर्गोऽपि न प्रवर्त्तते इत्यस्यासार्वत्रिकत्वाभ्युपगमात । तदेतत्तत्रतत्रोच्यते-"नोत्सहते प्रतिषिद्धा सती बाधितुम्" इति । तथाच पक्षभेदाश्रयेण "अतो हलादेः" (पा०सू०७-२-७) इत्यद्ग्रहणमपि ज्ञापकमिति स्थितम् ।

फलमप्यस्ति । यदि हि सिच्यन्तरङ्गं स्यात्तर्हि चिनीप्रभृतिभ्यो यङ्लुगन्तेभ्यः चिरिणोतिजिरिणोतिभ्यां च लुङि सिचि 'अचेचायीत्' अनेनायीत्' 'अचिरायीत्' 'अजिरायीत्' इति न स्यात, गुणायादेशयोः कृतयोर्यान्तानां नेति प्रतिषेधप्रसङ्गात् । यदि तु बाध्यविशेषचिन्तायां मध्येपवादन्यायमाश्रित्य उवङेव बाध्यते न तु गुण इत्याश्रीयते तदाप्येतन्न सिद्ध्येदेव । तस्मात्सिचि सर्वमप्यंतरङ्गं नास्त्येवेति सिद्धान्तं साधयितुं बाध्यसामान्यचिन्तैवाश्रयणीया । एतदर्थमेव हि भाष्ये ज्ञापकोपन्यासः कृतः । अन्यथा न्यायेनैव सिद्धेऽन्तरङ्गस्यापि बाधे किं ज्ञापकवर्णनेन ? एवं स्थिते 'न्यनुवीत्' 'न्यधुवीत्' इत्यत्र "क्ङिति च" (पा०सू० १-१-५) इति निषेध एवाश्रयणीयस्तथा चेग्लक्षणत्वसिद्धये वृद्धिग्रहणमपीह कर्त्तव्यमेवेति स्थितम् । एवञ्च सत्यसम्भवादपि वृद्ध्या सिच्यन्तरङ्गं सर्वं बाध्यते । यदि हि स्यात्तर्हि क्वापि सिचीगन्तमङ्गं न लभ्येतेत्यवधेयम् । तथा चेग्लक्षणत्वस्य निषेधप्रवृत्त्यर्थमावश्यकत्वे स्थिते तत्र तत्रात्सन्ध्यक्षरव्यञ्जनादिव्यावृत्तिरपीक्परिभाषयैव सिध्यतीति ज्ञापकवर्णनादिक्लेशोऽपि नाश्रयणीयः । न चैवं 'द्यौः' 'पन्थाः' 'इमम्' इत्यादावपीक्पदोपस्थितिवशादिकामेवौत्वमात्वमत्वं च स्यादिति वाच्यम्, गुणवृद्धिशब्दयोरनुवृत्तौ पुनर्गुणवृद्धिग्रहणसामर्थ्याद्धि शब्दव्यापारोऽप्याश्रीयते, गुणवृद्धी ये गुणवृद्धी न तु शब्दान्तरेण विहिते इत्यनुवृत्ताभ्यां विशेषणाद्वा ।' ननु "अचश्च" [पा०सू०१-२-२८] इति सूत्रे ह्रस्वादिग्रहणानुवृत्त्या संज्ञया विधाने पदोपस्थितिरिति स्थास्यति तत्सामर्थ्याद्" "दिव औत्" [पा०सू०-७-१-८४] "पथिमथ्यृभुक्षामात्" [पा०सू०७-१-८५] "त्यदादीनामः" [पा०सू०७-२-१-२] इत्यत्रेक्पदोप-

स्थानं न भविष्यति। यदि हि स्यात्तर्हि "अचश्च" [पा०सू०१-२-२८] इत्यत्र संज्ञया विधानेऽतियत्नाश्रयणं व्यर्थं स्यादिति चेत्? न, "दिव उत्" [पा०सू०६-१-१३१] इत्यादिष्वगुणवृद्धिसंज्ञकेष्वचपरिभाषानिवर्त्तनेन चरितार्थत्वात् "अष्टन आ विभक्तौ" [पा०सू०७-२-८४] इत्यादाविकोऽसम्भवेन तत्र चरितार्थत्वाच्च। तस्मात् 'द्यौः' 'पन्थाः' 'इमम्' इत्यादिसिद्धये इहापि संज्ञाविधाने नियमं संपादयितुं पुनर्गुणवृद्धिग्रहणमिति प्राञ्चः। ननु 'पन्थाः' इत्यनुदाहरणम् "इतोऽत्" [पा०सू०७-१-८६] इति सिद्धे आद्विधिसामर्थ्यादेवेक्पदस्यानुपस्थितेरिति चेत्? न, ऋभुक्षिऋकारोकारयोरर्थे आद्विधिसम्भवात्। न चेकः सोश्चानन्तर्यविवक्षणाद्येननाव्यवधानाश्रयणाच्च नैवमिति वाच्यम्, तथापि सम्बुद्ध्यर्थतया सामर्थ्योपक्षयात्। न चैवम् 'इत आत्' इत्येव ब्रूयादिति वाच्यम्, ऋभुक्षणमिन्द्रमित्यस्यासिद्ध्यापत्तेः। आद्विधौ हि "वा षपूर्वस्य" [पा०सू०६-४-९] इति तत्सिद्धिरिति दिक्।

यत्तु भाष्ये 'सः' 'इमम्' इत्युदाहृतं, तत्र "स इमं मन्त्रमपश्यत" इति ब्राह्मणवाक्यैकदेशानुकरणमात्रम्। उदाहरणं तु 'इमम्' इत्येव न तु 'सः' इत्यपि, तच्छब्दे इकोऽसम्भवेन "इकः" [पा०सू०१-१-३] इति नियमस्याप्रवृत्तेरित्याहुः।

वस्तुतस्तु स इत्यप्युदाहरणं साध्वेव। "त्यदादीनामः" [पा०सू०७-२१-२] इति विधिवाक्यम्। तत्र चेक इत्यस्योपस्थितौ ह्रीदमोरेवात्वं स्यान्न त्वन्येषाम्। गणेन निर्देशस्तु संज्ञोपसर्जनव्यावृत्त्यर्थमुत्तरार्थं च स्यात्। "तदोः सः सौ" [पा०सू०७-२-१०६] इति सत्वं हि त्यदादीनामेव तदोर्विधीयते।

अत्रेदमवधेयम्, शब्दव्यापाराश्रयणानुरोधेनापि गुणवृद्धिग्रहणं मास्तु, इकस्तावित्येतावतैव सिद्धेः। वस्तुतस्तु तावित्यपि व्यर्थम्। इक इत्येव सूत्र्यताम्। सम्पूर्णं पूर्वसूत्रद्वयमनुवर्त्य वृद्धिरित्यादैचौ यत्र विधीयेते, गुण इति चादेङौ, तत्रेक इत्युपतिष्ठते इति व्याख्यानात्। व्याख्याने लिङ्गं तु "इतोऽत्" [पा०सू०७-१-८६] इतीद्ग्रहणम्। अन्यथा तत्रापीक्पदोपस्थितावुक्तरीत्या येननाव्यवधानन्यायादिकारोकारव्यावृत्तौ च सत्यां किं तेनेति। तद्वेतद् "इग्ग्रहणं किमर्थम्" इति भाष्येण "इग्ग्रहणमात्सन्ध्यक्षर" इत्यादिवार्त्तिकेन च सूच्यते। अन्यथा हि सूत्रं किमर्थमित्याद्येव ब्रूयात्। यत्तूत्तरार्थं गुणवृद्धिग्रहणं कर्त्तव्यमेवेत्याशयेनेग्ग्रहणमित्युक्तमिति भाष्याभिप्रायवर्णनम्, तन्न, पूर्वसूत्रानुवृत्त्यैव सिद्धावुत्तरार्थत्वस्यापि दुरुपपादत्वात्, समुदायापेक्षायां मण्डूकप्लुतेः

सम्बन्धानुवृत्तेर्वा त्वयापि वाच्यत्वात्, इग्ग्रहणस्याप्युत्तरार्थतया तदंशेऽपि शङ्कानुत्थानाच्च। इक इति योगः किमर्थं विभज्यते इति प्रश्नबीजमिति चेत्तर्हि गुणवृद्ध्यंशेऽपि तस्याविशिष्टतया सूत्रं किमर्थमित्येव ब्रूयादिति दिक्।

यत्तु प्रधानावयवद्वारा समुदायाक्षेपोऽयमिति, तदपि नातीव शब्दस्वरसानुगुणम्। तस्मादुक्त एवाशयः साधुः। न चैवं "गुणवृद्ध्यधिकारे पुनर्गुणवृद्धिग्रहणसामर्थ्याद्" इत्युत्तरग्रन्थासङ्गतिः, तस्य यथाश्रुताभिप्रायकत्वात्। ग्रहणपदस्यानुवृत्तिपरतया सम्पूर्णसूत्रद्वयानुवृत्तिपरतया-सम्पूर्णसूत्रद्वयावृत्तिसामर्थ्यपरत्वाद्वेति दिक्। एवं चेक इति योगविभाग एव पूर्वपक्षसिद्धान्ताभ्यां समर्थ्यते इतीह पर्यवसितोऽर्थः। ततश्चानेनैकेन योगविभागेन सकलेष्टसिद्धौ 'मृजेर्वृद्धिरचः' 'उराङ्गि गुणः' इत्यादि बहुतरयोगविभागाद्याश्रयणेनान्यथासिद्धिवर्णनं नादर्त्तव्यमिति स्थितम्।

इयं च परिभाषाऽलोन्त्यपरिभाषायाः शेषो वा शेषिभूता वा तया सह समुच्चिता वा वैकल्पिकी वा तदपवादो वा पूर्वविप्रतिषेधात्तद्बाधिका वा पदोपस्थापिका वेति सप्तपक्षाः सम्भाव्यन्ते यद्यपि, तथाप्याद्यानां षण्णां दुष्टत्वात्सप्तम एव सिद्धान्तितः। तथाहि, "सार्वधातुकार्द्धधातुकयोः" (पा०सू०७-३-८४) इत्यत्र स्वस्वनिमित्तवशात्परिभाषाद्वयं सन्निहितम्। तत्राङ्गस्येति षष्ठी यदि पूर्वमेवान्त्यमलं नीता अङ्गान्त्यस्य गुण इति, पश्चादिकाऽन्त्यो विशेष्यते, तदेकपरिभाषा शेषभूता। यदि तु पूर्वमिकाऽङ्गस्य विशेषणात्तदन्तविधिरिगन्तस्याङ्गस्येति, ततः स च भवन्नलोन्त्यस्येति, तदा द्वितीयः पक्षः। तदिदं पक्षद्वयमपि षष्ठीतत्पुरुषं बहुव्रीहिं चाश्रित्य 'तच्छेषपक्ष' इति भाष्ये व्यवहृतम्। इह पक्षद्वयेऽपि "मिदेर्गुणः" (पा०सू०७-३-८२) इत्यादौ दोषः। यो हि मिदेरन्त्यः नासाविक्, यश्चेक् नासावन्त्यः। तथा चावश्यम्परिभाषायां त्यक्तायां सत्यां विनिगमकाभावादुभयत्यागे सर्वादेशो गुणः स्यात्। तदुक्तं वार्त्तिककृता—"वृद्धिगुणावलोन्त्यस्येति चेन्मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणं सर्वादेशप्रसङ्गश्चानिगन्तस्य" इति। चकारो हेत्वर्थः। ततश्च सर्वादेशप्रसङ्गो हीति फलितम्।

अथ मिद इर्मिदिः तस्य मिदेरित्यादिपूर्वोक्तरीत्या कथं चिदिह सर्वत्रेक एव स्थानित्वं लभ्येत, तथापि 'भिन्नम्' इत्यादावनिग्लक्षणत्वाद् गुणनिषेधो न स्यात्। अथ क्ङितः किग्वाज्ज्ञापकादनिग्लक्षणत्वेऽपि निषेधस्तर्हि 'लैगवायनः' 'पौरोहित्यम्' इत्यादावतिप्रसङ्गः।

अथ लक्ष्यानुरोधाल्लघूपधगुणमात्रविषयकं ज्ञापकं तर्हि पदोपस्थितिपक्ष एव लक्ष्यसिद्धये समाश्रीयताम् । एवं हि ज्ञापकाश्रयणक्लेशोऽपि न भवति । क्ङित्त्वेनापि पदोपस्थितिरेव ज्ञाप्यताम् । एवं हि ज्ञापकमूलकं वाक्यान्तरं न कल्प्यमिति लाघवम् ।

अस्तु तर्हि तृतीयः पक्षः–मिदेरन्त्यस्येकश्च द्वयोरपि गुण इति । मैवम्, स्थानेयोगावयवसम्बन्धरूपस्यार्थद्वयस्य युगपदुच्चारितया षष्ठ्या दुर्लभत्वात् । स्थानेयोगं च विनाऽलोन्त्यविध्यलाभात् । स्थानषष्ठी हि तदुपस्थितौ लिङ्गमिति वक्ष्यते । इक इत्यनेन सहावयवषष्ठीं विनाऽन्वयायोगात् आवृत्त्यादौ प्रमाणाभावाच्च ।

एतेन मिदेरन्त्यस्य वेको वेति चतुर्थपक्षोऽपि प्रत्युक्तः, विकल्पस्याष्टदोषग्रस्तत्वाच्च ।

अस्तु तर्हि तदपवाद इति पञ्चमः पक्षः । तथाहि, गुणविधावङ्गस्येति न स्थानषष्ठी । किन्तु इगपेक्षयाऽवयवषष्ठी । ततश्च लिङ्गाभावादलोन्त्यपरिभाषाया अनुपस्थितिः । अयमेव च बाधपदार्थः । यदीक्परिभाषा न भवेत्तर्हि स्थानषष्ठीत्वं तन्मूलकालोन्त्यपरिभाषोपस्थितिश्च स्यात् । सत्यान्त्विक्परिभाषायां तदुभयं नेत्येतावतैवापवादत्वव्यवहारः । न हि वस्तुतो वचनेन प्रापितस्य बाधः सम्भवति शास्त्राप्रामाण्यप्रसङ्गात् । अत एव शास्त्रतात्पर्यसङ्कोचो बाध इत्याहुः । एतेन द्वन्द्वापवाद एकशेष इत्यपि व्याख्यातम् । नत्यनुत्पन्नायां विभक्तौ द्वन्द्वस्य प्रसङ्गः, किन्तु यद्येकशेषो न भवेत्तर्हि प्रत्येकं विभक्तिर्द्वन्द्वश्च स्यात्सति त्वेकशेषे तन्नेत्येव तत्त्वम् । अस्मिंश्च पक्षे जुसि गुणो 'अजुहवुः' इत्यत्रेव 'अनेनिजुः' 'पर्यवेविषुः' इत्यादावपि स्यात् । "सार्वधातुकार्द्धधातुकयोः" (पा०सू०७-३-८४) इति गुणो 'भवति' इत्यादाविव 'इहिता' इत्यत्रापि स्यात् । तथा च वार्त्तिकम्–"इङ्मात्रस्येति चेज्जुसि सार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेधः" (का०वा०) इति । अत्र ह्रस्वादीति "ह्रस्वस्य गुणः" (पा०सू०७-३-१०८) "जुसि च" (पा०सू०७-३-१०९) "ऋतोऽङि सर्वनामस्थानयोः" (पा०सू०७-३-११०) "घेर्ङिति" [पा०सू०७-३-१११] इति गुणचतुष्टयं गृह्यते । ततश्च 'हे अग्ने' 'अग्नयः' 'कर्त्तरि' 'अग्नये' 'बाभ्रव्यः' इत्यत्र यथा ओर्गुणान्तं गुणपञ्चकं भवति, एवं 'हे अग्निचित्' 'अग्निचितः सन्ति' 'सुंकृति' 'अग्निचिते' 'सौश्रुतः' इत्यत्रापि स्यादिति वार्त्तिकार्थः । यद्यपीह निर्दिष्टस्थानिकत्वात्परिभाषा दुर्लभा । अग्निचिच्छब्दस्य घिसंज्ञाभावाच्च "घेर्ङिति" (पा० सू०७-३-१११) इत्येतन्न प्राप्नोति, तथापि वार्त्तिकस्योक्तिसम्भवमित्थं

वर्णयन्ति-"ह्रस्वस्य गुणः" (पा०सू०७-३-१०८) "जसि च" (पा०सू० ७-३-१०९) इति सूत्रयोस्तावद्ध्रस्वेनेग्विशेष्यते । दीर्घव्यावृत्तिश्च फलम् । अथानियमे नियमकारिणी परिभाषा कथमिहोपतिष्ठताम् ? न हि ह्रस्वस्य स्थानित्वेऽतिप्रसङ्गोऽस्ति, अकारस्य ह्यकार एव गुणो भविष्यतीति ब्रूयात् । तत्रेदं वक्तव्यम् । ह्रस्वान्तस्याङ्गस्येको गुण इति सूत्रार्थः स्यात् । ततश्च 'हे इन्द्र' 'हे उपगो' इत्यादावनन्त्यस्यापि स्यात्, 'अग्निचित्' इत्यादिकं तु विशेषणव्यवच्छेद्यं स्यात् । तथा च ह्रस्वस्येक इत्यनयोर्न परस्परं विशेषणविशेष्यभावः । किन्त्वनयोरेकमङ्गस्य विशेषणमपरमङ्गस्य विशेष्यमिति । यद्वा, ह्रस्वस्येत्येतदङ्गस्य विशेषणं मा भूदित्यङ्गस्य स्थानषष्ठीत्वं बाधितुमनन्त्यस्यापि गुणं सम्पादयितुमिक्परिभाषोपतिष्ठेत । एवम् "ऋतः" (पा०सू०७-३-११०) "ओः" पा०सू०६-४-१४६) इत्युभयत्राप्यनन्त्यस्य गुणविधानार्थं परिभाषा स्यादेव । घिसंज्ञा तु वर्णयोरेव न तु तदन्तस्येति पक्षं गृहीत्वा "घेर्ङिति" (पा०सू०७-३-१११) इत्यस्य "अग्निचितः" इत्यादावतिप्रसङ्गो योज्यः । नह्यस्मिन्पक्षे ऋत ओरित्याभ्यां घेः किञ्चिद्वैलक्षण्यमस्तीति दिक् ।

नन्वस्मिन्पक्षे "पुगन्त" (पा०सू०७-३-८६) इति सूत्रस्य नियमार्थत्वाद् 'ईहिता' इत्यादौ न दोष इति चेत् ? न, यदि हि सार्वधातुकार्द्धधातुकयोर्लघूपधस्यैवेति नियमस्तर्हि ह्रस्वाद्योर्गुणे दोषस्तदवस्थः । यदि तु लघूपधस्य सार्वधातुकार्द्धधातुकयोरेवेति नियमस्तथापि 'ईहिता' इत्यादौ दोष एव । अथावृत्त्या द्विविधोऽपि नियमस्तर्हि 'अनेनिजुः' इत्यत्र दोषः । न ह्येतन्नियमद्वयेनापि वारयितुं शक्यं, लघूपधत्वात्सार्वधातुकपरत्वाच्च । 'हे बुद्धे' 'बुद्धयः' 'पिचवे हितः पिचव्यः "उगवादिभ्यो यत्" (पा०सू०५-१-२) 'बुद्धये' 'वृद्धये' इत्यादावनुपधाभूतेष्वतिप्रसङ्गस्तु दुर्वार एवेति तावद्वार्त्तिकहृदयम् ।

वस्तुतस्त्वङ्गाक्षिप्तेन प्रत्ययेन श्रूयमाणेन च जुसादिना इको विशेषणात्सकलदोषनिरासे सति तदपवादपक्षोऽपि समर्थयितुं शक्यते एव । अङ्गमेव प्रत्ययेन विशेष्यते इति गृहीत्वा परं भाष्यवार्त्तिकग्रन्थप्रवृत्तिरित्यवधेयम् ।

अस्तु तर्हि पूर्वविप्रतिषेध इति क्रोष्ट्रीयसम्मतः षष्ठः पक्ष इति चेत् ? न, इक्परिभाषाया निरवकाशत्वात् । न हि परस्परपरिहारेणावकाशलाभेऽसति विप्रतिषेधः । तस्माद्यदि 'सत्यपि सम्भवे बाधनं भवति' इत्याश्रीयते तर्हि येननाप्राप्तिन्यायादपवादत्वमस्त्येव । यदि तु "असम्भवे बाध्यबाधकभावः" अस्ति चेह सम्भवो यदुभयं स्यादित्याश्रीयते तर्हि

तच्छेषादिष्वन्यतमपर्यवसानं न तु क्रोष्ट्रीयमतस्यावकाश इति स्थितम्।

तस्मात्पदोपस्थापनमिति सप्तमः पक्षः सिद्धान्तसम्मतः। तथाहि, इक इति षष्ठ्यन्तानुकरणम्, न तु संज्ञिपरम्, "स्वरूपम" [पा० सू०१-१-६८] इति वचनात्। न च "अशब्दसंज्ञा"(पा०सू०प०१-१-६८) इति निषेधः, षष्ठ्यन्तस्यासंज्ञात्वात्। तदयमर्थः—यत्र ब्रूयाद्गुणो भवति वृद्धिर्भवतीति, तत्रेक इति षष्ठ्यन्तमुपतिष्ठते इति। तस्य च पदैकवाक्यतयाऽन्वयोऽन्तरङ्गोऽलोन्त्यपरिभाषा तु विधिवाक्येष्ववान्तरवाक्यार्थं बुध्वा तदेकवाक्यतया सम्बध्यते इति तदन्वयो बहिरङ्गः। ततश्च "जुसिच" (पा०सू०७-३-८३) इत्यादाविकोऽङ्गस्येति सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वादिकाऽङ्गे विशेषिते स्थानषष्ठी न विहितेति भवत्येवाऽलोन्त्यपरिभाषोपस्थितिः। "मिदेर्गुणः" (पा०सू०७-३-८३) इत्यादौ तु सामानाधिकरण्यान्वयस्यासम्भवान्मिदेरिक इति वैयधिकरण्येनान्वये सति स्थानषष्ठीविरहादलोन्त्यपरिभाषा नोपतिष्ठते। न च मिदेरङ्गस्येत्यनयोरवयवषष्ठीत्वेपीक इति स्थानषष्ठ्यस्त्येवेति वाच्यम्, न ह्येषाऽलोन्त्यपरिभाषोपस्थितावुपयुज्यते, अल्समुदायात्मकस्थानिनः परभूताया एव षष्ठ्यास्तदुपस्थापकत्वात्, इकश्चाल्रूपत्वात्। तथा चालोन्त्यपरिभाषा इक्परिभाषानन्तरोपस्थितिका न तु तया सह युगपदुपतिष्ठते येनाविशेषादुभयोर्निवृत्तिः स्यादिति सकलेष्टसिद्धिः। तच्छेषतदपवादपक्षयोरपि दूषणमुद्धर्त्तुं शक्यमित्युक्तमेव।

तदिह सप्तपक्षीमध्ये पक्षत्रयं दुष्टमेव। पक्षचतुष्टयन्तु साध्विति स्थितम्।

नन्वेतत्सूत्रम् "अङ्गस्य" (पा०सू०६-४-१) इत्यादिवदधिकारार्थमेव किं न स्यादिति चेत्? एवं हि सतीकोगुणवृद्धी नेति नञा संयुज्यैव पठेत्। "सर्वस्य द्वे" (पा०सू०८-१-१) "पूर्वत्रासिद्धम्" (पा०सू०८-२-१) इत्यादिवत्। न ह्युत्तरसूत्रोपस्थितिकत्वाविशेषे किंचित्संयुज्य किंचित्तु विभज्य पठितुमुचितम्, वैरूप्ये हेत्वभावात्। "प्रत्ययः" (पा०सू० ३-१-१) "परश्च"(पा.सू.३-१-२)इत्यादौ तु पारार्थ्याविशेषेऽप्यसंयुज्य निर्देशो विधेयभेदान्न विरुध्यते। नापीदं विधिसूत्रम्, पुनर्गुणवृद्धिग्रहणसामर्थ्यात्, तत्प्रत्याख्यानपक्षेऽपि विशिष्टानुवृत्तिसामर्थ्यादिति दिक्।

॥ इति श्रीशब्दकौस्तुभे प्रथमस्याध्यायस्य प्रथमे पादे
तृतीयमाह्निकम् ॥

न धातुलोप आर्द्धधातुके (पा०सू०१-१-४)। धात्वंशलोपनिमित्ते आर्द्धधातुके परे तन्निमित्तिके गुणवृद्धी इको न स्तः। 'लोलुवः' 'पोपुवः' 'मरीमृजः'। लोलूयादिभ्यो यङन्तेभ्यः पचाद्यचि कृते "यङोऽचि च" (पा०सू०२-४-७४) इति यङ्लुकि लुङ्निमित्तभूतमचमेवाश्रित्य प्राप्ते गुणवृद्धी निषिध्येते। यद्यपि कृत्स्नस्य धातोरपि क्वचिल्लोपोऽस्ति। तद्यथा, "दुरीणो लोपश्च" (पा०सू०१-२-१८७) दुःशब्दे उपपदे इणो धातो रक् प्रत्ययो भवति धातोश्च लोपः, दुःखेन ईयते प्राप्यते दूरमिति; तथाप्येवंविधे विषये गुणवृद्ध्योः प्राप्तिविरहान्निषेधवैयर्थ्यम्। अतोऽत्र धातुशब्देन तदेकदेशो लक्ष्यते।

धातुलोप इति च यदि षष्ठीतत्पुरुषः स्यात्तदार्द्धधातुकग्रहणं लोपविशेषणं वा गुणवृद्ध्योर्विशेषणं वा तन्त्रावृत्त्यादिभिरुभयविशेषणं वेति त्रयः कल्पाः। तत्राद्ये पक्षे आर्द्धधातुकनिमित्तके धातुलोपे सति यत्किञ्चिन्निमित्तिके गुणवृद्धी न भवत इति सूत्रार्थः स्यात्। ततश्च प्रपूर्वादिन्धेः क्तप्रत्यये तन्निमित्तके नलोपे च सति 'प्रेद्धः' इत्यत्र प्राप्नुवन्नाद्गुणोऽपि निषिध्येत। यो हि द्वयोः षष्ठीनिर्दिष्टयोः स्थाने भवति, लभते ऽसावन्यतरतो व्यपदेशमितीक्स्थानिकत्वस्यापि सत्त्वात्। न चैवमपीग्लक्षणत्वविरहान्न निषेधः लैगवायने ओर्गुणस्येवेति वाच्यम्। नह्यस्मिन्सूत्रे इक इत्यस्य स्वरूपपरतायां प्रमाणमस्त्युत्त(१)रसूत्रे तु चकार इतिशब्दार्थकः प्रमाणमित्याहुः।

अस्तु वाऽर्थाधिकाराश्रयणबलेनेहापीक इति स्वरूपपरं तथापि 'भेद्यते' इत्यादौ गुणो न स्यादिति तृतीयपक्षे वक्ष्यमाणो दोष आद्यपक्षद्वयेऽप्यस्त्येवेति बोध्यम्। ननु 'उपेद्धः' 'प्रेद्धः' इत्युदाहरणस्येहोक्तिसम्भव एव नास्ति। तथाहि, "पूर्वं धातुः साधनेन युज्यते" इति मते 'इद्धम्' इत्यत्र नलोपोऽन्तरङ्गः प्रथमोपनतक्तप्रत्ययापेक्षत्वात्। "पूर्वं धातुरुपसर्गेण" इति दर्शने तु गुणोऽन्तरङ्ग, उभयथाऽपि गुणो भविष्यति बहिरङ्गस्य गुणस्यासिद्धतया निषेधायोगात् बहिरङ्गस्य निषेधस्यासिद्धौ गुणप्रवृत्तेर्निर्बाधत्वाच्च। सत्यम्, "असिद्धं बहिरङ्गमन्तरङ्गे" (प०भा०५०) इति परिभाषा नेह प्रवर्त्तते "नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः" (प०भा०५१) इति निषेधात्। यत्रान्तरङ्गे बहिरङ्गे वाऽचोरानन्तर्यमाश्रीयते तत्रैषा परिभाषा नेति व्याख्यानादिति हरदत्तानुयायिनः। किन्त्वस्मिन्पक्षे "एत ऐ" (पा०सू०३-४-९३) इति सूत्रे 'पचावेदं' 'पचामेदम्' इत्यादौ एत ऐत्वं कुतो नेत्याशङ्क्य बहिरङ्गत्वेन गुणस्यासि द्ध-

(१) "अचश्च" (पा०सू०१-२-२८) इति सूत्रे इत्यर्थः।

त्वादिति हरदत्तेन वक्ष्यमाणं विरुध्यते, तथाच बहिरङ्गस्यासिद्धताबलेन 'प्रेद्धम्' इत्यादिसिद्धिरिति प्रतिपादनपरमिहत्यं भाष्यमपि विरुध्येत। तस्माद्यत्रोत्तरकालप्रवृत्तिकेऽच आनन्तर्यं तत्र बहिरङ्गपरिभाषा न स्यादिति कैयटसम्मत एव "नाजानन्तर्ये" (प०भा०५१) इत्यस्यार्थः साधुः । 'पचावेदम्' इत्यादौ हि पूर्वं गुणप्रवृत्तिः । तत्र चाजानन्तर्याश्रयणेऽपि गुणोत्तरप्रवृत्तिके "एत ऐ" (पा०सू०३-४-९३) इत्यत्र तदनाश्रयणाद्युक्त एव बहिरङ्गतयोद्धारः । 'उपेद्धः' 'प्रेद्धः' इत्यादौ तु गुणं प्राप्य निषेधः कार्य इत्युत्तरकालप्रवृत्तिको निषेधः । तत्राजानन्तर्याश्रयणाभावाद्बहिरङ्गपरिभाषया सिद्धमेवैतत् । अतोऽत्रत्यं भाष्यमपि सङ्गच्छते ।

ननु "षत्वतुकोरसिद्धः" (पा०सू०६-१-८६) इति सूत्रे एषा परिभाषा ज्ञापयिष्यते । तत्र च 'कोऽसिचत्' 'कोऽस्य' इत्यादौ प्रथमप्रवृत्तिके "एङः पदान्ताद्" (पा०सू०६-१-१०९) इत्यस्मिन्नजानन्तर्यं न तूत्तरकालप्रवृत्ते षत्वेऽपीति कथं कैयटमतं समर्थनीयम् । तस्माद्यत्रान्तरङ्गं बहिरङ्गं वा अचोरानन्तर्यमिति हरदत्तोक्तरीतिरेव शरणीकर्त्तव्येति चेत ? न, कैयटमते अचोरिति द्वित्वस्याविवक्षया सर्वसामञ्जस्यात् । अस्ति ह्युत्तरकालप्रवृत्तिके षत्वे अच आनन्तर्याश्रयणम् , इणः परस्य सस्येत्युक्तेः। एवञ्च प्रथमपक्षे 'प्रेद्धः' इत्यादौ दोषाभावेऽपि '(१)भेद्यते' इत्याद्यासिद्धिरेव दूषणमिति दिक् ।

द्वितीयपक्षे तु यत्किञ्चिन्निमित्तके धातुलोपे सत्यार्द्धधातुकनिमित्ते गुणवृद्धी न स्त इति सूत्रार्थः स्यात् । ततश्च "क्नूयी शब्दे" इत्यस्माण्णिचि पुकि यलोपे कृते पुगन्तलक्षणो गुणो निषिध्येत । तथाच 'क्नोपयति' इति न सिध्येत् । यदि तु "वेले क्नोपेः" (पा०सू०३-४-३३) इति निर्देशाद् गुणस्तर्हीहापि 'भेद्यते' इत्यस्यासिद्धिरेव दोषः ।

तृतीयपक्षे त्वार्द्धधातुकनिमित्तके धातुलोपे सत्यार्द्धधातुकनिमित्ते गुणवृद्धी न स्त इति सूत्रार्थः स्यात । तत्र तन्त्रावृत्त्याद्याश्रयणप्रयुक्तं गौरवं तावत्स्पष्टमेव लोपेन सह गुणवृद्ध्योरेकनिमित्तकत्वं च न लभ्येत । ततश्च 'भेद्यते' इत्यत्र भिदेर्ण्यन्तात्कर्मणि यकि भिद् इ य इति स्थिते नित्यत्वाण्णिलोपे कृते प्रत्ययलक्षणेन णिचमाश्रित्य क्रियमाणोऽपि गुणो निषिध्येत । न च णिलोपात्प्रागेवान्तरङ्गत्वाद् गुणोऽस्त्विति वाच्यम् , विभज्यान्वाख्यानपक्षे तदसम्भवात "उपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधते" (प०भा०६५) इति

(१) भिद्यतेर्णिचि ततः कर्मणि लटो रूपं बोध्यम् ।

न्यायाच्च। अन्यथा 'दधति' इत्यादावन्तरङ्गत्वात् "झोन्तः" (पा०सू० ७-१-३) इत्यन्तादेशः प्रवर्त्तेत। न च श्लौ द्वित्वे चैवंकृते अन्तादेशस्य स्थानिवद्भावेन "अदभ्यस्तात्" (पा०सू०७-१-४) इत्यस्य प्रवृत्तिरस्त्विति वाच्यम्, अल्विधौ स्थानिवद्भावासम्भवात्। किञ्च, "समर्थानां प्रथमाद्वा" (पा०सू०४-१-८२) इति सूत्रे "अकृतव्यूहाः पाणिनीयाः" (प०भा०५६) "कृतमपि शास्त्रं निवर्त्तयन्ति" इति ज्ञापयितुं समर्थग्रहणमिति वक्ष्यते। द्वे एते परिभाषे समानफले इति च तत्रैव स्फुटीकरिष्यते। तथा चेहापि पूर्वं गुणो न क्रियेत, कृतोऽपि वा निवर्त्तेत 'जग्मुषः' इत्यादाविडादिवत्। तस्माद्धातोर्लोपो यस्मिन्निति बहुव्रीहिरेव साधुः। एवं हि सति लोपस्य गुणवृद्ध्योश्चैकनिमित्तकत्वं लभ्यते इति न कश्चित्पूर्वोक्तदोषः।

स्यादेतत्, आरभ्यमाणेऽप्यस्मिन्सूत्रे 'लोलुवः' इत्यादौ गुणो दुर्वारः। तथाहि, इह सूत्रे "क्ङिति च" (पा०सू०१-१-५) इति सूत्रे च निषेध्यं किमित्याकाङ्क्षायां पूर्वत्र निर्णीता इक्पदोपस्थितिरेव सम्बध्येत-धात्वंशलोपनिमित्ते आर्द्धधातुके इक्पदं नोपतिष्ठते। ततश्च 'बेभिदः' 'मरीमृजः' 'भिन्नः' 'मृष्टः' इत्यादौ व्यञ्जनस्य गुणवृद्धिप्राप्तिः परमेतस्य प्रघट्टकस्य फलं स्यात्। लोलुवादौ तु स्यादेव गुणः। न च परिभाषां प्रति शेषिभूततयाऽर्थतः प्रधानयोर्गुणवृद्ध्योरेव निषेधोऽस्त्विति वाच्यम्, शाब्दबोधे शाब्दप्राधान्यस्यैवान्वयनियामकताया उचितत्वात्। नहि 'राजपुरुषमानय' इत्यादावर्थतः प्रधानभूतोऽपि राजा आनयनेनाऽन्वेति, अपि तु पुरुष एव। प्रकृते च शाब्दं प्राधान्यं वाक्यार्थभूतायाः पदोपस्थितेरेव, कारकविशिष्टा क्रिया वाक्यार्थ इति सिद्धान्तात्। आह च—

साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम्।
कर्मप्रधानं गुणवदेकार्थं वाक्यमुच्यते॥ इति।

किञ्च सिद्धान्ते प्रसज्यप्रतिषेधे सर्वत्र क्रिययैव सह नञोऽन्वयो न तु नामार्थेन। तदुक्तम्—

प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्। इति।

अत एव पुरुषवचनयोरसङ्करः। अन्यथा हि 'घटो नास्ति' 'त्वं नासि' 'अहं नास्मि' इति पुरुषव्यवस्था न स्यात्। घटाभावस्त्वदभावो मदभावश्चास्तीतिवत्सर्वत्र प्रथमपुरुषापत्तेः। न हि परमते 'त्वं नासि' 'त्वदभावोऽस्ति' इत्यनयोरर्थे कश्चिद्विशेषः, नञर्थं प्रति प्रथमान्तपदोपस्थापितस्यान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वेन संसर्गेण प्रकारताभ्युपगमेऽपि युष्मत्सामानाधिकरण्यविरहस्याविशिष्टत्वात्।

एवं वायौ रूपाणामभावोऽस्तीतिवद्रूपाणि न सन्तीत्यत्राप्यस्तीत्येकवचनं स्यादित्यन्यत्र विस्तरः ।

एवं कारकविभक्तेरपि क्रियायोगे सत्येव साधुत्वं न त्वन्यथाऽपीति "कारके" (पा०सू०१-४-२३) इति सूत्रे वक्ष्यमाणत्वाद् 'भूतले घटो नास्ति' इत्यादावधिकरणत्वं क्रियान्वय्येव न तु नञर्थान्वयि। तथाच सकलकारकविशिष्टक्रियायां नञर्थान्वयः । नञो द्योतकतेति निष्कृष्टपक्षे तु क्रियापदस्यैव तद्विरहपरतेति सिद्धान्तः। उभयथाऽपीह गुणवृद्ध्योः प्रतिषेधो दुर्लभ एवेति ।

अत्राहुः-क्रिययैव सह विधेरिव निषेधस्यान्वयः शाब्द इति सत्यमेव, किन्तु क्रियैव केति संशये त्वदुक्तरीत्या सन्निहितापीक्पदोपस्थितिरिह न सम्बध्यते । तथाहि सति "दीधीवेवीटाम्" (पा०सू०१-१-६) इति सूत्रस्य व्यर्थतापत्तेः । न हि तत्रेक्परिभाषाऽलोन्त्यपरिभाषयोः फले विशेषोऽस्ति । एवं स्थिते "अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्ति" इति प्रातिपदिकार्थसूत्रे वक्ष्यमाणरीत्या 'भवतः' इत्यस्योपस्थितस्य गुणवृद्धी इत्यादिभिरन्वितस्य निषेधान्वये सति गुणवृद्ध्योरभावः फलितो भवतीत्येतावता गुणवृद्ध्योर्निषेध इत्युच्यते । यथाऽऽघाराग्निहोत्राधिकरणे (जै०न्या०२-२-५) प्रतीतितः सर्वोऽपि विशिष्टविधिरेव, तात्पर्यतस्तु कश्चिद् गुणविधिरिति सिद्धान्तितं, तद्वन्निषेधेऽपि बोध्यं न्यायसाम्यात् । अत एव हि विधिनिषेधयोर्वाक्यार्थगोचरतेत्यभियुक्ताः। तस्मात् 'लोलुवः' 'पोपुवः' 'मरीमृजः' इत्युदाहरणं सिद्धम्। प्रत्युदाहरणं तूच्यते-धातुलोप इति किम् ? आर्द्धधातुके विधिनिषेधाभ्यां षोडशिग्रहणाग्रहणयोरिव गुणवृद्ध्योर्विकल्पो मा भूत् । आर्द्धधातुक इति किम् ? "तुर्वी थुर्वी दुर्वी धुर्वी हिंसायां" (धा.सू.५७१।५७२।५७३।५७४) "मुर्छा मोहसमुच्छ्राययोः" (धा.सू. २१२) एभ्यो यङ्लुगन्तेभ्यस्तिबादौ सार्वधातुके पिति परे 'तोतोर्त्ति' 'मोमोर्त्ति' इत्यादौ निषेधो मा भूत् "राल्लोपः" (पा०सू०६-४-२१) इति, च्छ्वोर्लोपस्य गुणस्य चैकनिमित्तकत्वात्। इदं च राल्लोपे क्ङिद्ग्रहणाननुवृत्तिपक्षमाश्रित्योक्तम्। तदनुवृत्तिपक्षे तु 'तोतोर्मि' इत्याद्युत्तमपुरुषैकवचनउदाहरणं बोध्यम्, अनुनासिकादिप्रत्ययत्वेन तत्र राल्लोपप्रवृत्तेः। ननु 'तोतोर्ति' इत्यादि प्रागुक्तमप्युदाहरणमस्तु । राल्लोपस्याप्रवृत्तावपि "लोपो व्योः" (पा०सू०६-१-६६) इति लोपादिति चेत् ? न, तस्य वर्णनिमित्तकतया गुणेन सहैकनिमित्तकत्वाभावात् । न हि तत्र प्रत्ययग्रहणं तदाक्षेपकं वा किञ्चिदस्ति । अत एव गौधेरादिषु प्रत्ययपरतां

विनाऽपि यलोप इति दिक्।

इक इति किम्? 'अभाजि' 'रागः'। "भञ्जेश्च चिणि" (पा०सू०६-४-३३) "घञि च भावकरणयोः" (पा०सू०६-४-२७) इत्युपधालोपे कृते वृद्धिर्यथा स्यात्। कथं तर्हि 'पापचकः' इत्यत्र वृद्धिप्रतिषेध इति चेत्? शृणु, पापच्यतेर्ण्वुलि "यस्य हलः" (पा०सू०६-४-४९) इत्यत्र 'अहर्यीत्' 'अमन्थीत्' इत्यादिवारणाय यस्येति संघातग्रहणेऽपि "आदेः परस्य" (पा०सू०१-१-५४) इति हल्मात्रलोपे कृते "अतो लोपः" (पा० सू०६-४-४८) इति पृथगल्लोपे तस्य स्थानिवद्भावेन पापचकादौ न वृद्धिः। न त्विह "न धातुलोपे" (पा०सू०१-१-४) इति सूत्रस्य कश्चिदपि व्यापारः। यङ्लुगन्ताण्ण्वुलि 'पापाचकः' इति भवत्येव वृद्धिः 'नोनाव' इतिवत्। एतेन "न धातुलोप" (पा०सू०१-१-४) इत्यत्रेक इत्यनुवृत्तेः 'पापाचकः' इतिवन्नधातुसूत्रे 'बेभिदिता' 'मरीमृजिता' इत्युदाहरंश्च कौमुदीकारः परास्तः, पृथगल्लोपस्य न्याय्यत्वे भाष्यादिसम्मतत्वे च सति वृद्धेरसम्भवात्। अत एव वृत्तिकारादयोऽन्यत्र सूत्रे ऽच्प्रत्ययान्तान्येव लोलुवादीन्युदाजह्रुः। भिदिमृज्योस्तु यदि यङ्लुक् तर्हि तस्यानैमित्तिकत्वाद् गुणवृद्धी स्त एव, 'बेभेदिता' 'मरीमार्जिता' इति यथा। यदि तु "यस्य हलः" (पा०सू०६-४-४९) इत्यवयवलोपस्तर्हि स्थानिवद्भावादेव गुणाद्यप्रसङ्ग इत्युभयथापि नैतत्सूत्रोदाहरणत्वमित्यवधेयम। भाष्यकारस्तु "यस्य" (पा०सू०६-४-१४८) इति लोप इवाचि लुक्यपि पृथगल्लोपमाश्रित्यैतत्सूत्रं प्रत्याचख्यौ। न च येननाप्राप्तिन्यायेनाचि यङो लुगतोलोपं बाधेतेति वाच्यम्, "यस्य हलः" (पा० सू०६-४-४९) इत्यत्र यस्येति योगं विभज्यातो लोप इति चानुवर्त्य यशब्दस्यातो लोपविधानेन लुग्बाधनात्। अवशिष्टं व्यञ्जनमात्रं लुकोऽवकाशः। ततश्चाल्लोपस्य स्थानिवत्त्वादेव 'बेभिदिता' 'मरीमृजिता' 'पापचकः' इत्यादिवल्लोलुवादयोऽपि सिध्यन्तीति किं सूत्रेण? न चैवं 'नोनाव' इत्यादावपि पृथगल्लोपापत्तिः, चकारानुकृष्टबहुलग्रहणाज्जायमानस्यानैमित्तिकस्य लुकोऽन्तरङ्गतया लकारोत्पत्तेः प्रागेव समुदाये प्रवृत्तेः। नन्वेवं 'चेक्रियः' 'लोलुवः' 'तोष्टुवः' इत्यादावल्लोपस्य स्थानिवत्त्वाद्यथा गुणो न, एवमियङुवङावपि न स्यातामिति चेत्? सत्यम् अचमाश्रित्य न भवत एव, उक्तयुक्तेः; किन्तु स्थानिवद्भावलब्धमकारमाश्रित्य भविष्यतः। स हि यकारे लुप्ते प्रत्ययसंज्ञकः।

स्यादेतत्, लोलुवादिष्वकारे लुप्ते यलुगिति क्रमः। तत्र यकारवस्थानकाले अकारेण प्रत्ययत्वं न लब्धमेव। लुप्तेऽपि तस्मिन्नकारो

नास्त्येव ततः प्रागेव लोपात्। सोयमसत्कथं प्रत्ययतां लभेत ? तल्लोपस्य स्थानिवद्भावेन प्रत्ययत्वमिति चेत् ? स्थानिनि दृष्टं हि कार्यं तद्वदतिदेशेन लभ्यते, न तु तत्राऽदृष्टमपि।

अत्राहुः-तत्र सम्भावितमात्रमतिदिश्यते। यदि हि लोपस्य स्थानिभूतो ऽकार इह लुप्तेऽपि यकारे तिष्ठेत्तर्हि प्रत्ययतां लभेतोवङादिकं च प्रवर्त्तयेदिति कथं नातिदेशः। वरोनिषेधश्चेह लिङ्गम्। स हि यातेर्यङन्ताद्वरच्यल्लोपयलोपयोः कृतयोः स्थानिवद्भावेन "आतो लोप इटि च" (पा०सू०६-४-६४) इत्यालोपो मा भूदित्येतदर्थं क्रियते। स्थानिनिदृष्टस्यैवातिदेशे तु किन्तेन ? न हि 'या-या-य' इत्यस्यामवस्थायामातो लोपस्य प्राप्तिः अनजादित्वादिति दिक्।

नन्वेवं 'चेक्षियः' 'तोष्टुवः' इत्यत्र "अन्तरङ्गानपि" (प०भा०५२) इति न्यायेनाकृते एव "अकृत्सार्वधातुकयोः" (पा०सू०७-४-२५) इति दीर्घे यङो लुक्। ततोऽल्लोपस्य स्थानिवद्भावे सत्यपि चेक्षि अ अ तोष्टु अ अ इति स्थान्यकारेण सह लघूपधमङ्गमच्प्रत्ययपरं जातमिति लघूपधगुणः स्यादेव। सत्यम्, अन्तरङ्गावियङुवङौ भविष्यतः। यथाह वार्त्तिककारः-"शचङन्तस्यान्तरङ्गलक्षणत्वात्" (का०वा०) इति। तथाच "रिपि गतौ" (धा०सू०१२४।१२५) "धि धारणे" (धा०सू०१२६) इत्येषां तुदादित्वाच्छे कृते 'रियति' 'पियति' 'धियति' इति भवति। 'अशिश्रियत्' 'प्रादुद्रुवत्' इति च "णिश्रि" (पा०सू०३-१-४८) इति चङीयङुवङो भवतः। तस्मात्पृथगल्लोपेनैव सकलनिर्वाहात् "न धातुलोपे" (पा०सू०१-१-४) इति सूत्रमनारम्भणीयम्। न चैवं 'मरीमृजः' इत्यत्र "मृजेरजादौ संक्रमः" (का०वा०) इति पाक्षिकवृद्धिप्रसङ्गः, हरदत्तादिमते मुख्याजादावेव तत्प्रवृत्तेः, निष्कर्षे तु "यथोत्तरं मुनीनाम्प्रामाण्यात्" इष्टापत्तेः। व्यवस्थितविभाषा वाऽस्तु। अत्र वदन्ति-गुणोपधालोपयुटां न लोपाल्लोपयोरपि प्रसङ्गात्पृथगल्लोपो लुकि वक्तुं न शक्यते। तथाहि, सर्वत्र दीर्घान्तेषु ह्रस्वान्तेषु चेयङुवङोः कृतयोर्लघूपधलक्षणो गुणः प्राप्नोति। न चेह स्थानिवद्भावः आदिष्टादचः पूर्वत्वात्। किञ्च 'जङ्गमः' इत्यत्र "गमहन" (पा०सू०६-४-९८) इत्युपधालोपः स्यात्। अथात्राऽमङीति प्रतिषेधस्तर्हि 'दरीदृशः' इत्यत्र "ऋदृशोऽङि" (पा०सू०७-४-१६) इति गुणः स्यात्। अपि च 'देद्यः' इत्यत्र "दीङो युडचि" (पा०सू०६-४-६३) इति युट् स्यात्। किञ्च 'सनीस्रंसः' 'दनीध्वंसः' "अनिदिताम्" (पा०सू०६-४-२४) इत्युपधालोपः स्यात्। अपि च 'यायाः' 'वावाः' इत्यादिष्वाकारलोपः स्यात्। तस्मा-

त्समुदायलुगेवेष्टव्यो लोलुवादिसिद्धये च सूत्रमारम्भणीयमिति। अत्रोच्यते, लोलुवादिषु गुणस्तावन्न भवति स्थानिद्वारकस्यानादिष्टादचः पूर्वत्वस्य सत्त्वेन स्थानिवद्भावात्। अत एव हि "न पदान्त" (पा० सू०१-१-५८) इति सूत्रे सवर्णग्रहणं कृतम्। 'शिण्ढि' इत्यादावनुस्वारस्य स्थानिद्वारकमनादिष्टादचः पूर्वत्वमाश्रित्य तस्य सवर्णे कर्त्तव्ये श्नसोरल्लोपस्य स्थानिवद्भावो मा भूदिति। नन्वनादिष्टादचः पूर्वत्वस्य शास्त्रीयकार्यत्वाभावात्कथमतिदेश इति चेत्? अनादिष्टादचः पूर्वत्वापेक्षे "अचः परस्मिन्" (पा०सू०१-१-५७) इत्यतिदेशे कर्त्तव्ये "स्थानिवदादेश" (पा०सू०१-१-५६) इत्यस्य प्रवृत्तिसम्भवात् सवर्णग्रहणव्याख्यावसरे सर्वैरित्थमेवोपपादितत्वाच्च। ननु योऽत्रादेश उवङ् सोऽनादिष्टादचः पूर्वतां स्थानिद्वारा कथञ्चिल्लभतां न तु तस्येह किञ्चित्कार्यं विधीयते येनाल्लोपः स्थानिवत्स्यात्। यस्य च कार्यं विधीयते उकारस्य नासावादेशः येन स्थानिद्वाराऽपि पूर्वतां लभेत। सत्यम्, 'सर्वे सर्वपदादेशाः' इत्याश्रयणात्स्थान्यादेशिभावस्तावदर्थवति विश्राम्यति। अत एव "एरुः" (पा०सू०३-४-८६) इत्यस्य तेस्तुरिति पर्यवसितार्थमाश्रित्य स्थानिवत्सूत्रेणैव सिद्धत्वादेकदेशविकृतस्योपसङ्ख्यानं नारब्धव्यमिति वक्ष्यते। अत एव च स्थानिवदित्युक्तौ सम्बन्धिशब्दत्वादेवादेश इत्यस्य लाभे सिद्धे पुनरादेशग्रहणमानुमानिकस्याप्यादेशस्य परिग्रहार्थमिति वक्ष्यते। एवञ्चेहापि लोलू इत्यस्य लोलुव् इत्यादेशः, स चानादिष्टादचः पूर्वः स्थानिवद्भावात्। तस्य च लोलोव इत्यादेशे कार्येऽल्लोपः स्थानिवदिति युक्तमेव। किञ्च, "ज्ञाजनोर्जा" (पा०सू०७-३-७९) इति "रीङ् ऋतः" (पा०सू०७-४-२७) इति च सूत्रे दीर्घोच्चारणेन "अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य" (प०भा०९३) इति परिभाषा ज्ञापयिष्यते। तेनोवङि कृते गुणो न भविष्यति। 'दरीदृशः' इत्यत्र गुणो न भवति प्रतिपदोक्तस्याङो ग्रहणात्। 'अदर्शत्' इति यथा। यङस्त्वकार उपदेशवेलायां न प्रत्ययः किन्तु तदवयवः, यकारे लुप्ते तु नासौ ङकारविशिष्टो न वा श्रूयते। किन्तु तर्कैकगोचरत्वाल्लाक्षणिकवद्विलम्बितोपस्थितिकः। नन्वेवमनङीति पर्युदासेऽप्यस्याग्रहणात् 'जङ्गमः' इत्यत्राल्लोपः स्यादिति चेत्? न, अनङीति पर्युदासेनाङ्सदृशे औपदेशिके अजादौ श्रूयमाणाजादौ वोपधालोपविधानात्। अर्थवानेवाङ्गुणविधौ गृह्यते इति तु न सम्यक् विकरणानामनर्थकत्वात्। यत्तु 'देयः' इत्यत्र युट् स्यादिति। तन्न, अनुबन्धानिर्देशात्। तदुक्तम्—

श्तिपा शपानुबन्धेन निर्दिष्टं यद् गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ (प०भा०१३१) इति ।

"दीङो युडचि" (पा०सू०६-४-६३) इति सूत्रे दीङ इत्यनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थं इति त्वयैवोक्तत्वाच्च । अत्र च ज्ञापकम् "एकाच उपदेशे" (पा०सू०१-३-२) इति सूत्रे यङ्लुङ्निवृत्तिमुद्दिश्य क्रियमाणमेकाज्ग्रहणम् । न हि तस्मिन्कृतेऽप्युक्तपरिभाषां विना 'बेभेदिता' इत्यादि सिद्ध्यति । 'बिभेत्सति' इत्यादिसिद्धये तन्त्रावृत्त्याद्याश्रयणेनोपदेशग्रहणस्योभयविशेषणतायाः सिद्धान्तयिष्यमाणत्वात् । न चैवमपि श्तिपाशपेत्याद्यंशान्तरे कथं ज्ञापकमिति वाच्यम्, एकदेशानुमतिद्वारा पूर्वाचार्यपठितपरिभाषाज्ञापनस्य "गतिकारकोपपदानाम्" (प०भा०७६) इत्यादौ बहुशो दृष्टत्वात् । न चैवमेकाच इति विधीयमानं द्वित्वमपि यङ्लुकि न स्यादिति वाच्यम् "गुणो यङ्लुकोः" (पा०सू०७-४-८२) इति ज्ञापकेन तत्प्रवृत्तेः । यङ्लुकि 'बेभेदिता' इत्यादाविडागमे तूदाहृतपरिभाषैव शरणम् । "द्विःप्रयोगो द्विर्वचनं षाष्ठम्" (भा०३० ) इति वक्ष्यमाणतया धात्वन्तरत्वस्य वक्तुमशक्यत्वात् 'बेभेदिता' इति यङन्ते तु पृथगल्लोपाभ्युपगमात्तस्य च स्थानिवद्भावान्नेण्निषेधः पूर्वस्मादपि विधौ स्थानिवद्भावस्य वक्ष्यमाणत्वात् । किञ्च, "यस्य" (पा०सू० ६-४-१४८) इति लोपस्य त्वयाऽप्यवयवलोपत्वं स्वीकृतम् । तत्र यद्यपि 'देयकः' इत्यत्र युट् स्यादिति नापादनार्हम्, हलः परत्वाभावेनेह यलोपाप्रवृत्त्या 'देदीयकः' इति रूपाभ्युपगमात् । 'सनिस्रसकः' इत्यादौ नलोपोपि सर्वसम्मतत्वादेव नापाद्यः, 'यायायकः' 'वावायकः' इत्यादावाल्लोपोऽप्यनापाद्यः, यलोपविरहेणाजादिक्ङिदार्द्धधातुकपरत्वाभावात् ; तथापि गमेर्यङन्ताण्ण्वुलि 'जङ्गमकः' इत्यत्राल्लोपस्य स्थानिवद्भावाद् वृद्ध्यभाव इवोपधालोपः स्यात् । अथात्रानङीति प्रतिषेधस्तर्हि 'दरीदृशकः' इत्यत्र "ऋदृशोऽङि" (पा०सू०७-४-१६) इति गुणः स्यात् । अथ यदीहाङ्गवृत्तपरिभाषया "संज्ञापूर्वको विधिरनित्यः" [प०भा०९४] इति वा समाधीयते तर्हि यङ्लुक्यपि 'सनीस्रंसः' इत्यत्र नलोपो 'यायाः' 'वावाः' इत्यालोपश्च न शङ्क्यः, समाधानस्य तुल्यत्वादिति दिक् ।

क्ङिति च (पा०सू०१-१-५) । इक इति शब्दमुच्चार्य विहिते गुणवृद्धी गितं कितं ङितञ्च निमित्ततयाऽऽश्रित्य ये प्राप्नुतस्ते न स्तः । गित् जिष्णुः, "ग्लाजिस्थश्च ग्स्नुः" (पा०सू०३-२-१३९) न चायं किदेवास्त्विति वाच्यम् ..'स्थास्नुः' इत्यत्र "घुमास्था" (पा०सू०६-४-६३)

इतीत्वप्रसङ्गात् । न चैवं 'भूष्णुः' इत्यत्रेट्प्रसङ्गः "श्र्युकः क्किति" (पा० सू०७-४-११) इत्यत्रापि चर्त्वेन गकारप्रश्लेषमाश्रित्य तन्निषेधात् । न चैवं चर्त्वस्यासिद्धतया विसर्जनीयो न स्याद्रोरुत्वञ्च प्रवर्त्तेतेति वाच्यम्, "न मुने" [पा०सू०८-२-३] इत्यत्र नेति योगविभागात्सौत्रत्वाद्वा । तथाच "ग्लाजिस्थ" [पा०सू०३-२-१३९] इति सूत्रे श्लोकवार्त्तिकम्—

क्स्नोर्गित्त्वान्न स्थ ईकारः क्ङिन्तोरीत्वशासनात् ।
गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं कगोरितोः ॥ इति । जयादित्योऽप्येवम् । वामनस्तु "ग्लाजिस्थश्च" (पा०सू०३-२-१३९) इत्यत्र स्था आ इत्याकारं प्रश्लिष्य क्स्नुप्रत्ययान्तस्य तिष्ठतेराकार एव न त्वीत्वमिति व्याख्यानादेव स्थास्नोः सिद्धौ न क्वापि गकारप्रश्लेषः कार्य इत्याह । नन्वेतेन तन्मते "दंशेश्छन्दस्युपसंख्यानम्" [का०वा०] इति क्स्नौ 'दंक्ष्णवः पशवः' इत्यत्र "अनिदिताम्" (पा०सू०६-४-२४) इति नलोपः स्यात् । सत्यम्, छान्दसत्वात्समाधेयः । कित्-'चितं' 'स्तुतं' 'मृष्टम्' । ङित्—'चिनुतः' 'सुनुतः' 'मृष्टात्' । निमित्तसप्तम्याश्रयणं किम् ? व्यवहितेऽपि यथा स्यात्—'छिन्नं' 'भिन्नम्' । इक इति किम् ? कामयते । शब्दव्यापाराश्रयणं किम् ? लैगवायनः । ओर्गुणो हीक एव प्रवर्त्तते न तत्रेक्पदोपस्थितिः ओरितिनिर्दिष्टस्थानिकत्वात् । तदुक्तम्— "तद्धितकाम्योरिक्प्रकरणात्" इति । ननु क्ङितीति सप्तमीनिर्देशात् "तस्मिन्निति निर्दिष्टे पूर्वस्य" (पा०सू०१-१-६६) इति परिभाषोपतिष्ठेत, तत्र निः शब्दस्य नैरन्तर्यपरत्वाद्दिशेश्चोच्चारणक्रियत्वाद्व्यवहितोच्चारितस्य निषेधः स्यान्न तु 'छिन्नं' 'भिन्नम्' इत्यादेरपीति चेत्? भवेदेवं, यदि क्ङितीत्येतन्निषेध्यया क्रियया साक्षात्सम्बध्येत । इह तु गुणवृद्धिभ्यां सम्बध्यते । "यस्य च भावेन" [पा०सू०२-३-३७] इति सप्तमी, क्रियान्तराश्रयणादौत्सर्गिकसत्ताक्षेपः । ततश्च क्ङिति सति प्राप्ते ये गुणवृद्धी इति सम्बन्धे कृते सिद्धसाध्यसमभिव्याहारन्यायेनोपलक्षणीभूतसत्ताश्रयणस्य निमित्तत्वमुत्सर्गतः फलति न त्विह विशिष्यनिमित्ततायां सप्तमीविधानमस्ति । न चात्र निर्दिष्टपरिभाषा सम्भवति, विध्यङ्गभूतानां परिभाषाणां साक्षाद्विधेयनिषेध्यक्रियान्वयिन्येव प्रवृत्तेः । इदन्तु क्रियान्वयिनो विशेषणं न तु क्रियायाः । अतोऽत्र न परिभाषाप्रवृत्तिः । अन्यथा "वृद्धिर्यस्याचामादिः" (पा०सू०१-१-७३) इत्यत्रैकपरिभाषोपस्थाने शालीयादिर्न सिध्येत् । न ह्यत्रेकः स्थाने वृद्धिः । अत एव "उदीचामातः स्थाने" (पा०सू०७-३-४६] इति सूत्रे स्थाने ग्रहणं

कृतम् । आतः स्थाने योऽकार इत्यनूद्यमानस्य विशेषणे आत इत्यस्मिन् "षष्ठी स्थाने योगा" [पा०सू०१-१-४९) इति परिभाषाया अप्रवृत्तेः । "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्स्यात्" [जै०सू०३।१।२२) इति न्यायोऽप्यत्रानुसन्धेयः । ननु तर्ह्यनेनैव न्यायेन क्ङितीत्येतत्प्रधानभूतक्रियया सम्बध्यतां न तु तच्छेषभूताभ्यां गुणवृद्धिभ्यां, प्रधानान्वयस्य सम्भवतस्त्यागायोगादिति चेत् ? न, यत्र हि गुणः कृतात्मसंस्कारः प्रधानोपकाराय महते प्रभवति तत्रात्मनोऽपि संस्कारमनुभूय प्रधानेन सम्बध्यते । यथा पानीयमेलादिसंस्कृतं पुरुषेण । उक्तञ्च—

गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्तते ॥ इति ॥

इह गुणवृद्ध्योः क्ङिद्ग्रहणेन विशेषितयोः प्रधानस्य महानुपकारो भवति व्यवहितस्यापि प्रतिषेधसिद्धेः । क्नोः कित्करणञ्चात्र ज्ञापकम् । अन्यथा प्रधानेनैवान्वये निर्दिष्टपरिभाषायाश्चोपस्थितौ सत्यां व्यवहिते निषेधस्याप्रवृत्तौ व्यर्थमेव क्नोः कित्त्वं स्यात् । तस्माद्यथाव्याख्यानमेव साधु । ननु न यदीयं परसप्तमी तर्हि शचङन्ते दोषः लघूपधलक्षणगुणप्राप्तेरिति. चेत्? न, अन्तरङ्गत्वादियङुवङ्प्रवृत्तेः। "धि धारणे" (धा०सू०१२६) 'रि पि गतौ"[धा०सू०१२४।१२५) तुदादयः, ध्रियति रियति पियति। "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" (पा०सू०३-१-४८) अशिश्रियत्, अदुद्रुवत् असुस्रुवत् इह तिपमाश्रित्य प्राप्तो गुणो बहिरङ्गः शचङाश्रयावियङुवङावन्तरङ्गौ। तदुक्तम्-"शचङन्तस्यान्तरङ्गलक्षणत्वात्" इति। (का०वा०)"मृजेरजादौ संक्रमे वृद्धिर्वेष्यते"इति काशिकायाम्। इदञ्च "इको गुणवृद्धी"(पा०सू०१-१-३) इति सूत्रप्रसङ्गाद्वैयाकरणान्तरमतत्वेनोक्तं भाष्ये। अस्यार्थः-संक्रामतो गुणवृद्धी अस्मादिति व्युत्पत्त्या गुणवृद्धिप्रतिषेधनिमित्तभूतः क्ङित्प्रत्ययोऽत्र संक्रमशब्देनोच्यते, योगरूढः। तेन 'मरीमृजः' इत्यत्र धात्वंशलोपनिमित्ततया वृद्धिप्रतिषेधहेतावच्प्रत्यये नासौ विकल्पः प्रवर्त्तत इत्यवधेयम् । अत एव "क्ङित्यचि वा" इति वचनं तत्र भाष्ये कृतम् । मृजन्ति, मार्जन्ति । अत्र हरदत्तः-अचीत्युच्यमानेऽपि "यस्मिन्विधिस्तदादावल्ग्रहणे" (प०भा०३३) इति सिद्धे आदिग्रहणं मुख्याजादिग्रहणार्थम् । व्यपदेशिवद्भावेनाजादौ 'यूयं ममृज' 'त्वया ममृजे' इत्यादौ न भवतीति । तच्चिन्त्यम, मुख्याजादिपरिग्रहे प्रमाणाभावात् । न हि भाष्ये आदिग्रहणं कृतं येन त्वदुक्तार्थो लभ्येत, किन्तु "क्ङित्यचि वा" इति वचनं पठितम् । यत्तु ततः प्रागुक्तं भाष्ये "इहान्ये वैयाकरणा मृजे-

रजादौ संक्रमे विभाषा वृद्धिमारभन्ते" इति, तत्तु तदादिपरिभाषाबल-लब्धवाक्यार्थानुवादमात्रं न तु परकीयविधिवाक्यशरीरमिदं, येन त्वदुक्तमर्थं ज्ञापयेत्। अत एवात्रेयो 'मृजा' इति भिदादिपाठादङ् गणपाठादेव वृध्यभाव इत्याह। अत एव रक्षितेनापि धातुप्रदीपे 'तुन्दपरिमृजः' तुन्दपरिमार्जः' इत्युभयं दर्शितम्। दुर्घटवृत्तौ तु 'तुन्दपरिमृजः' इत्यत्र व्यवस्थितविभाषया वृद्धिर्नेत्युक्तम्। अत एव धातुवृत्तिषु 'यूयं ममृज, ममार्ज' इति रूपद्वयमुदाहृतम्। यत्तु मुख्याजादिग्रहणवादिनोऽपि मते ऽत्र वृद्धिविकल्पो दुर्वार एव। तथाहि, मध्यमपुरुषबहुवचनस्य थस्य "परस्मैपदानाम्" (पा०सू०३-४-८२) इति सूत्रेण विधीयमानोऽकारादेशोऽलोन्त्यस्य प्राप्नोति। न चैवं विधिवैयर्थ्यम्, णलादीनां यथासंख्यसंपादनेन चरितार्थत्वादित्याशङ्क्य भाष्यएव द्वेधा समाधास्यति-अकारद्वयात्मकोऽयमनेकाल्त्वात्सर्वादेशः। यद्वा, "धातोः" (पा०सू०३-१-९१) इत्यधिकाराद् "आदेः परस्य" (पा०सू०१-१-५४) इति थकारमात्रस्याकार इति। तत्र पक्षद्वयेपि "अतो गुणे" (पा०सू०६-१-९७) इति पररूपस्य "अचः परस्मिन्" (पा०सू०१-१-५७) इति स्थानिवद्भावान्मुख्याजादित्वमप्यस्त्येवेति कैश्चिद्धरदत्तमिश्रमते दूषणमुक्तम्। तन्न, "आद्यन्तवद्" (पा०सू०१-१-२१) इत्यतिदेश इव स्थानिवद्भावेऽपि मुख्यत्वाभावस्य सुवचत्वादिति दिक्।

स्यादेतत्, 'अचिनोत्' 'अमार्ट्' इत्यादौ स्थानिवद्भावेन तिपो ङित्वात् "क्ङिति च" (पा०सू०१-१-५) इति गुणवृद्धिनिषेधः स्यात्। न चाल्विधित्वात्स्थानिवद्भावासम्भवः अनुबन्धकार्येष्वनल्विधाविति निषेधस्याप्रवृत्तेः। अन्यथा 'अचिनवम्' 'अमार्जम्' इइत्यादावपित्त्वेन "सार्वधातुकमपित्" (पा०सू०१-२-४) इति ङित्वापत्तेः। इह च ज्ञापकं "न ल्यपि" (पा०सू०६-४-६९) इति सूत्रम्। अन्यथा ल्यपः कित्त्वाभावादेत्वाप्राप्तौ किन्तन्निषेधार्थेन सूत्रेण? यत्तु "सेह्यपिच्च" [पा०सू०३-४-२७] इत्यपिद्वचनं ज्ञापकमिति। तन्न, "शृणीहि विश्वतः प्रति" इत्यादौ स्थानेन्तरतमपरिभाषया पित्वादनुदात्तस्य सिपः स्थानेऽनुदात्तस्यैव हेः प्राप्तावुदात्तसम्पादनेन चरितार्थत्वात्। अपित्वसामर्थ्याद्धि तत्रान्तरतमपरिभाषा बाध्यते। प्रतिपत्तिलाघवार्थमुदात्त इति वक्तव्ये ऽपिद्वचनं ज्ञापकमिति वाऽस्तु। न्यायसिद्धोऽप्ययमर्थः, अनुबन्धानामनेकान्तत्वेन स्थानिकोटावप्रविष्टतया स्थान्यलाश्रयविधिविषयकस्य "अनल्विधौ" (पा०सू०प०१-१-५६) इति निषेधस्याप्रवृत्तेः, "अनुबन्धा एकान्ताः" (प०भा०५) इति मतेऽपि

स्थानित्वप्रतीतेः प्रागेवातरङ्गेण लोपेन तेषामपहारात्। तस्माल्लडाद्यादेशानां तिबादीनां स्थानिवद्भावेन ङित्त्वं दुर्वारमिति।

अत्राहुः—"यासुट् परस्मैपदेषु" (पा०सू०३-४-१०३) इति सूत्रे ङिद्वचनं ज्ञापकं-लादेशानां स्थानिवद्भावेन ङित्त्वन्न भवतीति। तथाच वार्त्तिकम्-"लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावप्रसङ्ग इति चेद्यासुटो ङिद्वचनात्सिद्धम्" इति। ननु 'स्तुयात्' इत्यादावनिग्लक्षणवृद्धिप्रतिषेधार्थं 'चिनुयुः' इत्यादौ "जुसिच" (पा०सू०७-२-८३) इत्यस्य प्रतिषेधार्थञ्च यासुटो ङित्त्वमस्तु। "उतो वृद्धिर्लुकि हलि" (पा०सू० ७-३-८९) इत्यत्र त्युत इति निर्दिष्टस्थानिकतयेकपरिभाषा नोपतिष्ठते। "जुसि च" (पा०सू०७-२-८३) इति तु "क्ङिति च" (पा०सू०१-१-५) इत्यस्यापवाद एव। तथाच स्थानिवद्भावलब्धं ङित्त्वं 'स्तुयात्' 'चिनुयुः' इत्यत्र वृद्धिगुणौ निषेद्धुं नालम्। पुनर्ङित्त्वसामर्थ्यात्तु तदुभयनिषेधो भविष्यति। तथाच वृद्धिगुणनिषेधे चरितार्थं यासुटो ङित्त्वङ्कथं लादेशेषु लाश्रयङित्त्वस्य विरहं ज्ञापयेदिति चेत्? उच्यते, "उत औत्" इति वक्तव्ये वृद्धिग्रहणं संज्ञापूर्वको विधिरनित्यो यथा स्यादित्येवमर्थम्। तेन 'स्तुयात्' इत्यत्र न वृद्धिः, तथा 'चिनुयुः' इत्यत्र न गुणः "क्सस्याचि" (पा०सू०७-३-८२) इत्यतोऽचीत्यनुवर्त्याजादौ जुसि गुणविधानात्। "मिदेर्गुणोऽजुसि च" इत्यकारं प्रश्लिष्याच्चासावुस् चेति कर्मधारयाश्रयणेनाजादावुसि गुणविधानाश्रयणे तु 'चक्रुः' 'जग्मुः' इत्यादावतिप्रसङ्गः।

गुणेति लुप्तविभक्तिकमुज्जुसीति च च्छेदः। उकारादौ जुसीति चार्थः। "जुसि गुणे यासुट्प्रतिषेधः" (का०वा०) इति वार्त्तिकमप्युक्तरीत्या सिद्धार्थकथनपरमिति तावद्वार्त्तिककारस्य हृदयम्।

भाष्यकारमते तु "सार्वधातुकमपित्" (पा०सू०१-२-४) इति सूत्रेऽपिदिति योगं विभज्य ङिदिति चानुवर्त्यावृत्तिञ्चाश्रित्य ङिच्च पिन्न पिच्च ङिन्न भवतीति वाक्यार्थद्वयं वर्ण्यते। इदञ्च "हलः श्नः" (पा०सू०३-१-८३)इति सूत्रे भाष्ये स्पष्टम्। तेन 'ब्रूतात्' इत्यत्र ब्रुव ईण्न तातङ औपदेशिकङित्त्वेनान्तरङ्गेणातिदेशिकस्य बहिरङ्गस्य पित्त्वस्य बाधात्, 'अतिदिष्टादुपदिष्टं बलीयः' इति न्यायात्। 'अचिनोत्' इत्यादौ त्वौपदेशिकेन तिबादीनां पित्त्वेन लाश्रयमातिदेशिकं ङित्त्वम्बाध्यते। तेन गुणादिसिद्धिः। अस्मिंश्च पक्षे यासुटो ङित्त्ववचनं न ज्ञापकं किन्तु 'मृज्या' इत्यादावप्राप्तङित्त्वविधायकम्। तेन च पित्त्वस्य 'चिनोति' इत्यादौ सावकाशस्य बाधः। अतः 'स्तुयात्' इत्यादौ पिति हलीति विधीय-

माना वृद्धिर्न प्रवर्त्तते। 'चिनुयुः' इति तु प्राग्वदेव समर्थनीयम्। पूर्वोदाहृतवार्त्तिकमते तु 'ब्रूतात्' इत्यत्रेट् प्राप्नोति। "आगमशासनमनित्यम्" इति तु कथं चित्समाधेयः। वस्तुतस्तु "हलः श्नः शानज्झौ" (पा०सू०३-१-८३) इति शानचः शित्करणेन "क्वचिदनुबन्धकार्येष्वनल्विधाविति निषेधः प्रवर्त्तते" इति ज्ञाप्यते। तेन 'ब्रूतात्' इत्यादौ न कश्चिद्दोष इति। अत एव भाष्यमते 'भविषीष्ट' इत्यत्र ङित्वन्न 'करिष्यमाणा' इत्यत्रोगिल्लक्षणाटिल्लक्षणश्च ङीब्नेति दिक्।

दीधीवेवीटाम् (पा०सू०१-१-६)। दीधीवेव्योरिटश्च गुणवृद्धी न स्तः। आदीध्यनम्, आदीध्यकः। आवेव्यनम् आवेव्यकः। अकाणिषम्। अराणिषम्। कणिता श्वो रणिता श्वः। इहामं प्रति सिजन्तमङ्गम्। तिपो डादेशं प्रति तु 'कणित्' 'रणित्' इति तान्तमङ्गं, तस्यामं डादेशं च सार्वधातुकं निमित्तीकृत्य लघूपधगुणः प्राप्तोऽनेन निषिध्यते। वृद्धिस्त्विटो न सम्भवत्येव। लुडन्ततां स्फोटयितुं श्व इत्यस्य प्रयोगः। न हि तृजन्ते तृन्नन्ते वेटो गुणप्राप्तिः प्रत्ययावयवत्वात्तस्य। अथ "दीङ् क्षये" (धा०सू०२८) "धीङ् अनादरे" (धा०सू०३०) "वेञ् तन्तुसन्ताने" (धा०सू०१०३१) "वी गत्यादिषु" (धा०सू०३८) तेषामिह ग्रहणं कुतो नेति चेत्? न, अवयवप्रसिद्ध्यपेक्षया समुदायप्रसिद्धेर्बलवत्त्वात्। किञ्च चतुर्णां ग्रहणेऽभिप्रेतेऽसन्देहार्थं "दीवेधीवीटाम्" इत्येव ब्रूयात्। इट् चात्रागम एव गृह्यते न "इट् गतौ" (धा०सू० ३१९) इति धातुः। ननु धातुसाहचर्याद्धातुरेव गृह्यताम्। मैवम्, साहचर्यस्य सर्वत्रानियामकत्वात्। अन्यथा "द्विस्त्रिश्चतुरिति कृत्वोर्थे" (पा०सू०८।३।४३) इति सूत्रे कृत्वोर्थग्रहणं न कुर्यात्, द्विस्त्रिरिति सुजन्ताभ्यां साहचर्येण चतुरित्यस्यापि सुजन्तस्य ग्रहणसम्भवात्। अत एवागमापेक्षया प्रकृतेरभ्यर्हितत्वाद्दीधीङः पूर्वनिपातः सूत्रे कृतः। इटोऽपि धातुत्वे तु प्रकृतित्वाविशेषेऽप्यल्पाच्तरत्वात्तस्यैव पूर्वनिपातः स्यात्।

अत्रेदमवधेयम्, 'दीध्यकः' 'वेव्यकः' इति यदुदाहृतं तद्दीधीवेवीभ्यां शुद्धाभ्यामेव ण्वुलि रूपं न तु ण्यन्ताभ्यामपि। यत्तु "यीवर्णयोः" (पा०सू०७-४-५३) इति सूत्रे हरदत्तेनोक्तम्—वर्णशब्दो "वर्ण विस्तारे" (धा०सू०४०६) इतिधातोः पचाद्यजन्तः, श्रूयमाण एव वर्णे यथा स्याल्लुप्ते मा भूदित्येवमर्थः। तेन ण्यन्ताभ्यां ण्वुलि णिलोपस्य पूर्वविधौ स्थानिवत्त्वेपि श्रूयमाणत्वाभावाल्लोपाभावे यणि कृते 'दीध्यकः' 'वेव्यकः' इत्येव शुद्धेन समानाकारं रूपं भवतीति, तदेतत् "नाग्लोपिशास्वृदिताम्" (पा०सू०७-४-२) इत्येतस्मिन्सूत्रे भाष्यकारैरेव ण्यन्तस्य

'दीधकः' इति रूपं शुद्धस्य तु 'दीध्यकः' इति व्युत्पादितत्वात्सिद्धान्तविरोधादुपेक्ष्यम् । तत्र हि वर्णग्रहणं लुप्तेऽपि वर्णे यथा स्यादित्येवमर्थमित्याशङ्क्य स्थानिवद्भावेन सिद्धेरन्तरङ्गत्वाण्णिलोपात्प्राग् "यीवर्णयोः" (पा०सू०७-४-५३) इति लोपसिद्धेश्च वर्णग्रहणं प्रत्याख्यातम् । ननु वर्णग्रहणं कुर्वतः सूत्रकारस्याशयं भाष्यकारोक्तादन्यमेवानुसृत्य ब्रूम इति चेत् ? सत्यम्, तथापि "यथोत्तरं मुनीनां प्रामाण्याद्रूपाशुद्धिस्तदवस्थैवेति दिक् ।

स्यादेतत्, दीधीवेव्योर्ङित्वात् "क्ङिति च" (पा०सू०१-१-५) इति सूत्रेणैव निषेधोऽस्तु किमिह दीधीवेवीग्रहणेन ? मैवम्, इग्लक्षणयोर्हि स निषेध इत्युक्तम् । न च "अचो ञ्णिति" (पा०सू०७-२-११५) इति वृद्धिरिग्लक्षणा । किञ्च कार्यिणो निमित्तत्वे पूर्वेण सिद्धिः सम्भवेदपि । न च कार्यी निमित्ततयाऽऽश्रीयते 'च्यवते' 'प्लवते' इत्यादावपि गुणनिषेधापत्तेः । अत्र च लिङ्गं कुटादिमध्ये "कुङ् शब्दे" (धा०सू०१२१) इत्यस्य पाठः "स्थण्डिलाच्छयितरि" (पा०सू०४-२-१५) इति निर्देशश्च । यत्तु प्रकृतसूत्रे दीधीवेव्योर्ग्रहणमेवैतत्परिभाषाज्ञापकमिति । तन्न, अनिग्लक्षणवृद्धिनिषेधेन चरितार्थत्वात् भाष्यमते एतत्सूत्रस्य प्रत्याख्यास्यमानतयोक्तपरिभाषायां लिङ्गान्तरस्यैवानुसर्त्तव्यत्वाच्च ।

स्यादेतत्, यदि कार्यी निमित्तत्वेन नाश्रीयते कथं तर्हि 'ऊर्णुनविषति' इत्यत्र "द्विर्वचनेऽचि" (पा०सू०१-१-५९) इति नुशब्दस्य द्वित्वम्, इष इत्यस्य अजादित्वेऽपि द्वित्वं प्रति कार्यिमध्ये प्रविष्टतया निमित्तत्वासम्भवात् "सन्यङोः" (पा०सू०६-१-९) इति षष्ठीमाश्रित्य सन्नन्तस्य द्वित्वविधानात् । अन्यथा 'प्रतीषिषति' इति सनो द्वित्वं न स्यात् । यत्तु "सन्यङोः" (पा०सू०६-१-९) इति सप्तम्याश्रयणेऽपि सन्यङोरकारोच्चारणसामर्थ्याद् द्वित्वं भविष्यतीति, तन्न, दित्सधित्सादिभ्यो यङुत्पत्तिप्रतिबन्धेन "अचो यत्" (पा०सू०३-१-९७) इति यत्प्रत्ययोत्पादनेन चाकारोच्चारणस्य चरितार्थत्वात् । अन्यथा 'अरिरिषति' इत्याद्यसिद्धेश्च । यदि हि तत्रापि स्थानिवत्स्यादिसो द्विर्वचने कृते 'अरीषति' इति स्यात् ।

अत्रोच्यते-कार्यमनुभवन्नेव कार्यी निमित्ततया नाश्रीयत इति परिभाषार्थः । 'अरिरिषति' इत्यत्र हि "अजादेर्द्वितीयस्य" (पा०सू०६-१-२) इति रिस्शब्दे द्वित्वप्रवृत्तिः । तदन्तर्गतश्चेस्शब्द इति नासौ द्वित्वं प्रति निमित्तं कार्यभाक्त्वात् । 'ऊर्णुनविषति' इत्यत्र तु नव्शब्दस्य द्वित्वं प्राप्तं तदनन्तर्गतश्चेस्शब्द इति भवत्येव निमित्तं तद्भावभावि-

तामात्रेणेह निमित्ततेति "सन्यङोः" (पा०सू०६-१-९) इति सूत्रे भाष्यकारैरेव स्फुटीकृतत्वात्। तथा च "द्विर्वचनेऽचि" (पा०सू०१-१-५९) इति स्थानिवद्भावान्नुशब्दस्य द्वित्वमुचितमेव। यत्तु "द्विर्वचनेऽचि" (पा०सू०१-१५९) इति सूत्रे 'आचि किं'? जेघ्रीयते 'देध्मीयते' इति प्राचां प्रत्युदाहरणं, तदापाततः, घ्रीय् ध्मीय् इत्यस्य द्वित्वभाक्तया "ई घ्राध्मोः" (पा०सू०७-४-३१) इतीत्वं प्रति निमित्तभूतस्य यङो द्वित्वस्प्रत्यनिमित्तत्वात्। तस्मात्तत्राचीत्यस्य 'अधिजगे' इत्येतदेव व्यावर्त्यं बोध्यम्, "गाङ्लिटि" (पा०सू०२-४-४९) इति द्विलकारकनिर्देशमाश्रित्य लावस्थायामेव गाङादेशविधानात्। अज्ग्रहणन्तु ज्ञापकं रूपस्थानिवद्भावस्येति तत्रत्यवार्त्तिकमपि 'अधिजगे' इत्येतस्मिन्नुदाहरणे कार्यातिदेशाश्रयणेऽज्ग्रहणवैयर्थ्यं स्यादित्येव योज्यमिति दिक्।

यत्त्वसिद्धवत्सूत्रे वक्ष्यते—'अत्र ग्रहणं समानाश्रयप्रतिपत्त्यर्थम्' तन्न, आश्रयत्वं स्थानितया निमित्ततया वा कथञ्चिदाश्रयणमात्रेण न तु निमित्ततयैवेत्याग्रहः। तेन "शा हौ" (पा०सू०६-४-३५) इति शाभावो हेर्धित्वे कर्त्तव्ये ऽसिद्धो भवति। अन्यथा धित्वे हेः कार्यितया निमित्तत्वाभावादसिद्धत्वं न स्यात्। अत एव समानाश्रयमाभीयमाभीये ऽसिद्धमित्येवाहुर्न तु समाननिमित्तमिति।

इदञ्च सूत्रं भाष्यवार्तिकयोः प्रत्याख्यातम्। तथाहि, दीधीवेव्यौ छान्दसौ धातू न तु लोके प्रयोगार्हौ। छन्दसि चानयोर्गुणो दृश्यते—'होत्राय वृतः कृपयन्नदीधेत्' 'अदीधयुर्दाशराज्ञे वृतासः' इत्यादौ। न चायस्बाहुलकेन समाधेयः, तथा सति निषेधसूत्रानारम्भस्यैव लाघवेनोचितत्वात्। तथेटोऽपि ग्रहणं व्यर्थम् "आर्द्धधातुकस्येट्" (पा०सू०७-२-३५) इत्यत्र हि "नेड् वशि कृति" (पा०सू०७-२-८) इति सूत्रादिड्ग्रहणमनुवर्त्तते। तच्चेटो विकाराभावार्थम् इट् इडेव न तु विकृत इति व्याख्यानात्। ततो लघूपधगुणाभावात्सिद्धं 'कणिता श्वः' 'रणिता श्वः' इत्यादि। न चैवं 'पिपठीः' इत्यत्र दीर्घो न स्यादिति वाच्यम्, तस्य नियमं प्रत्यसिद्धत्वाद्। 'अपाठीत्' इत्यत्र सवर्णदीर्घस्तु न वार्यते "सिज्लोप एकादेशे सिद्धो वक्तव्यः" (का०वा०) इति ज्ञापकात्। यद्वा, अङ्गाधिकारे क्रियमाणो नियम आङ्गमेव विकारं व्यावर्त्तयति। तेन "र्वोः"(पा०सू०८-२-७६) इति "अकः सवर्णे" (पा०सू०६-१-१०१) इति च दीर्घो भवत्येव। 'ग्रहीता' इत्यत्र तु "ग्रहोऽलिटि" (पा०सू०७-२-३७) इत्यारम्भसामर्थ्याद्दीर्घो भवत्येव।

इदं त्ववशिष्यते—'पिपठीषि ब्राह्मणकुलानि' इत्यत्र "सान्तमहतः

संयोगस्य" (पा०सू०६-४-१०) इति दीर्घत्वं न स्यात् । सिद्धत्वादाङ्गत्वात् 'तेजांसि' इत्यादौ चरितार्थत्वाच्च 'पिपठीः' 'अपाठीत्' 'ग्रहीता' इत्यादिपूर्वोदाहृतेभ्योऽस्य वैलक्षण्यादिति । अत्राहुः—'पिपठींषि' इति प्रयोगोऽसाधुरेव । न ह्यत्र नुमागमो लभ्यते अल्लोपस्य स्थानिवद्भावेनाझलन्तत्वात् । न चैवमजन्तत्वप्रयुक्तो नुम् स्यादेवेति वाच्यम्, तस्य सकारादुत्तरत्र प्रसक्त्या दीर्घस्य तथाऽप्यप्रवृत्तेः, सान्तसंयोगाभावात् । वस्तुतस्त्वजन्तत्वप्रयुक्तो नुमत्र न भवत्येव स्थानिवद्भावासंभवात् । अनादिष्टादचः पूर्वस्य विधौ हि सः । न चाजन्तमनादिष्टादचः पूर्वं, येन तस्य नुमि कर्त्तव्येऽल्लोपः स्थानिवत्स्यात् । ननु झलन्तत्वप्रयुक्तो नुम् दुर्वारः । न च तस्मिन्कर्त्तव्ये स्थानिवद्भावः शङ्क्यः, "क्वौ लुप्तं न स्थानिवत्" (का०वा०) इति निषेधात् । अन्यथा सखीयतेः क्विपि सखीः, सुतीयतेः सुतीरित्यादि न स्यात्, अल्लोपस्य स्थानिवद्भावेन यणादेशप्रसङ्गात् ।

अत्रोच्यते, "क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम्"(का० वा०) इति तावद्वार्त्तिकशरीरम् । तत्र क्वीत्यंशो यद्यपि द्वेधा व्याख्यास्यते—क्वौ लुप्तं न स्थानिवदिति, 'क्वौ विधिम्प्रति न स्थानिवदिति च । देवयतेः क्विपि 'द्यूः' इत्यादेरन्यतरव्याख्यानाश्रयणेन सिद्धावपि सखीयतेः सखीरित्यस्याद्यव्याख्यानं विना असिद्धेः, लवमाचक्षाणो 'लौः' इत्यस्य द्वितीयव्याख्यानं विनाऽसिद्धेश्च, तथापि 'क्वौ विधिं प्रति' इति द्वितीयव्याख्यानमेव सार्वत्रिकम् । "क्वौ लुप्तम्" इति तु क्वाचित्कं "ख्यत्यात्" (पा०सू०६-१-११२) इत्यत्र "मपर्यन्तस्य" (पा०सू०७-२-९१) इत्यत्र च भाष्यादावाश्रितं न तु सार्वत्रिकम् । अत्र चेड्ग्रहणप्रत्याख्यानपरमत्रत्यभाष्यमेव प्रमाणम् । कथमन्यथा 'पिपठींषि' इत्यादौ दीर्घस्येष्टत्वे सूत्ररीत्या च तल्लाभे इड्ग्रहणं प्रत्याचक्षीत । तस्मात् 'पिपठिषि ब्राह्मणकुलानि' इत्येव रूपं भवतीति स्थितम् ।

हलोनन्तराः संयोगः (पा०सू०१-१-७) । अज्भिरव्यवहिता हलः संयोगसंज्ञा स्युः । संज्ञाप्रदेशाः "संयोगान्तस्य" (पा०सू०८-२-२३) इत्येवमादयः । इहान्तरशब्देन छिद्रवाचिना बहुव्रीहौ निश्छिद्रा इत्यर्थलाभादवग्रहे संज्ञया न भाव्यम् । आधेयप्रधानेनान्तरेत्यव्ययेन सह बहुव्रीहौ त्वाधेयनिषेधप्रतीतेरवग्रहेऽपि भाव्यमेव संज्ञया । न हि तत्रान्तरा मध्ये किञ्चिदस्ति किन्तु मध्यमात्रं वर्त्तते "मात्रा ह्रस्वस्तावदवग्रान्तरम्" (ऋ० प्रा-१-६) इति प्रातिशाख्यबलेन तत्र मात्राकालावसानाभ्युपगमात् । यत्तु प्रातिशाख्यान्तरम्-"अर्द्धमात्रोऽवग्रहः" इति,

तत्तु सर्वत्र संहितायामर्द्धमात्राकालस्य सत्त्वात्ततोऽतिरिक्तोऽर्द्धमात्राकालोऽवग्रहेऽस्तीत्येतत्परम्। अतः प्रातिशाख्ययोरविरोधः। तदिह कतरः पक्षो ग्राह्य इति चेत्? उभयथाऽप्यदोष इति भाष्यकाराः। ननु 'अप्सु' इत्यादौ सत्यां संयोगसंज्ञायां "संयोगे गुरु" (पा०सू०१-४-१०) इति गुरुत्वाद् "गुरोरनृतः" (पा०सू०८-२-८६) इति प्लुतेन भाव्यं न त्वन्यथेति महान्फले विशेषः। तत्कथं पक्षद्वयाभ्युपगम इति चेत्? न, 'अप्सु' इत्यस्याधिकरणवृत्तेर्दूराद्धूतसम्बन्धाभावात्। "विचार्यमाणानाम्" (प०सू०८-२-९७) इत्यादौ तु "वाक्यस्य टेः" (पा०सू०८-२-८२) इत्यनुवर्त्तते न तु "गुरोरनृतः" (पा०सू०८-२-८६) इति। ननु 'अप्सु भवोऽप्सव्यः', दिगादिषु पाठाद्यत् "अपो योनियन्मतुषु च" (का०वा०) इति सप्तम्या अलुक्। ततः सम्बुद्धौ 'हे अप्सव्य' इत्यत्र स्यादेव फलभेद इति चेत्?

अत्राहुः—नैवं विधे विषयेऽवग्रहं पदकाराः कुर्वन्तीति। अत्र च सम्प्रदाय एव शरणमिति बोध्यम्। उक्तञ्चैतत्–'गोभ्यो गातुं' 'गोभिर्मदाय' 'चित्रइद्राजा राजका इदन्यके' इत्यादौ गोभ्यो गोभिः राजका इत्यादीनां सत्यपि पदत्वेऽवग्रहाकरणात्। "ईयिवांसमतिस्रिधः" इत्यादावीयिवांसमिति विनापि पदसंज्ञां क्वसोः पूर्वमिडागमान्तेऽवग्रहकरणाच्च। एतेन 'सिसासन्' 'उक्थशसः' 'रिरिषः इत्यादौ पदकाले सत्त्वह्रस्वत्वादयोऽपि व्याख्याताः। यत्तु "मानो महान्तम्" [ऋ०सं०] इति मन्त्रे वेदभाष्यकारैरुक्तम्–"छान्दसः पदकालीनो ह्रस्वः" इति, तदपि संप्रदायमात्रपरतया कथं चिन्नेयम्। "न लक्षणेन पदकाराः" इति भाष्ये, "पदविभागः पौरुषेयः" इति कैयटादिभिरुक्तत्वादिति दिक्।

कथं तर्हि तत्रतत्रावग्रहे विशेष इत्युच्यते इति चेत्? अवान्तरपदत्वे सत्यवग्रहः क्रियते इत्युत्सर्गमभिप्रेत्येति गृहाण। "अप्सुयोनिर्वा अश्वः" इत्यादावपि सुशब्दात्पूर्वं नास्त्यवग्रहः, अवान्तरपदसंज्ञानेकत्वे उत्तरकालप्रवृत्तिकैयाऽवग्रह इति वैदिकसम्प्रदायात्। अत एव 'मयूररोमभिः' इत्यत्र भिसः पूर्वमवग्रहः। 'नमउक्तिभिः' इत्यत्राप्येवम्। "इन्द्रप्राणः पुरएतेव" इत्यत्र चेवशब्दात्प्रागिति दिक्।

महासंज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थम्। संयुज्यन्ते ऽस्मिन्समुदाये वर्णा इति। तेनात्र समुदाये वाक्यपरिसमाप्तिर्न तु गुणवृद्ध्यादिसंज्ञावत्प्रत्येकम्। तथा हि सति 'निर्यायात्' इत्यादौ यकारः संयोग इ. "वाऽन्यस्य संयोगादेः" (पा०सू०६-४-६८) इत्येत्वं स्यात्। सिद्धान्ते·

तु "अचो रहाभ्याम्" (पा०सू०८-४-४६) इति द्वित्वे सत्यपि तस्यासिद्धतया 'निर्यायात्' इत्यादावेत्वं न भवति। किञ्च, प्रत्येकं संज्ञेति पक्षे 'संहृषीष्ट' इत्यत्र "ऋतश्च संयोगादेः" (पा०सू०७-२-४३) इतीट् स्यात्। 'संह्रियते' इत्यत्र "गुणोऽर्त्तिसंयोगाद्योः" (पा०सू०७-४-२९) इति गुणः स्यात्। 'दृषत्करोति' इत्यत्र ककारसन्निधौ दकारस्य संयोगत्वात्संयोगान्तलोपः स्यात्। 'शक्ता' 'वस्ता' इत्यत्र झलि तकारे परतः "स्कोः" (पा०सू०८-२-२९) इति लोपः स्यात्। 'निर्यातः' इत्यादौ "संयोगादेरातो धातोर्यण्वतः" (पा०सू०८-२-४३) इति निष्ठानत्वं स्यात्।

जातौ चेदं बहुवचनं हल इति "जात्याख्यायामेकस्मिन्" (पा०सू० १-२-५८) इति वचनात्। तेन द्वयोरपि संयोगसंज्ञा भवति। अतः 'शिक्षा'इत्यादौ "गुरोश्च हलः" (पा०सू०३-३-१०३) इत्यप्रत्ययः सिध्यति। यत्र तु बहवो हलः संश्लिष्टास्तत्र द्वयोर्बहूनां वा विशेषेणसंज्ञा। न चैकाज्द्विर्वचनन्यायेन समुदायस्यैव स्यादिति वाच्यम्, वैषम्यात्। तथाहि, द्विर्वचनं समुदायावयवैकाचोर्युगपत्कर्त्तुमशक्यम्। संज्ञा तु शक्या। तथा समुदाये द्विरुक्तेऽवयवा अपि द्विरुक्ता भवन्ति "वृक्षः प्रचलन्सहावयवैः प्रचलति" इति न्यायात्। इह तु समुदाये प्रवृत्तया संयोगसंज्ञया नावयवानां तत्कार्यसिद्धिः। अतोऽविशेषेण द्वयोर्बहूनां च संज्ञेति स्थितम्। यदि तु बहूनामेव स्यात्तर्हि 'संस्वर्यते' इत्यत्र "गुणोऽर्ति" [पा०सू०७-४-२९] इति गुणो न स्यात्। 'गोमान्करोति' इत्यत्र संयोगान्तलोपो न स्यात्। 'निर्ग्लानः' इत्यादौ निष्ठानत्वं न स्यादिति दिक्।

ननु यदि द्वयोरपि संज्ञा तर्हीन्द्रीयतेः सनि'इन्दिद्रियिषति'इति न स्यात्। इह हि संयोगौ द्वौ नदौ दरौ च। तत्र नकारस्येव दकारस्यापि "नन्द्राः" (पा०सू०६-१-२) इति द्वित्वनिषेधः प्राप्नोति। नैष दोषः। तत्र ह्यजादेरित्यनुवर्त्तते। सा च कर्म्मधारयात्पञ्चमी। तेनादेरचः परे नदराः संयोगादयो न द्विरुच्यन्ते इति सूत्रार्थः। एवञ्च पूर्वसूत्रे द्वितीयस्येति न कर्त्तव्यमेवेति वक्ष्यते। हलः किम्? तितउभ्याम्। अत्र "तनोतेर्डउः सन्वच्च" (उ०सू०) इति डउप्रत्ययः, सन्वद्भावाद् द्वित्वं, "सन्यतः" (पा०सू०७-४-७९) इतीत्वं च। व्यस्तोच्चारणसामर्थ्याद् गुणाभावः। यदि ह्यचोरप्यनन्तरयोः संयोगसंज्ञा स्यात्तर्हीह "संयोगान्तस्य" (पा०सू०८-३-२३) इत्युकारलोपः स्यात्। अनन्तरा इति किम्? पनसम्। यदीह सकारमकारयोः संयोगसंज्ञा स्यात्तर्हि "स्कोः" (पा०सू० ८-२-२९) इति सूत्रेण सकारलोपः स्यादिति दिक्।

मुखनासिकावचनोऽनुनासिकः (पा०सू०१-१-८)। मुखसहिता नासिका मुखनासिका तयोच्चार्य्यमाणोऽनुनासिकसंज्ञः स्यात्। संज्ञाप्रदेशा "आङोऽनुनासिकश्छन्दसि" (पा०सू०६-१-१२६) इत्यादयः। अभ्रआँ अपो वृणाना, गभीरआँ उग्रपुत्रे।

इहोच्यत इति वचनः, "कृत्यल्युटो बहुलम् (पा०सू०३-३-११३) इति बाहुलकात्कर्मणि ल्युट्। 'राजभोजनाः शालयः' इतिवदिति वृत्त्यनुसारिणः।

भाष्यकैयटयोस्तु उच्यतेऽनेनेति वचनम्। करणे ल्युट्, सामान्ये नपुंसकम् 'शक्यं च श्वुदपहन्तुम्'इतिवत्, "तेन तुल्यं क्रिया चेत्" (पा०सू०५-१-११५) "संस्कृतं भक्षाः" (पा०सू०४-२-१६) इतिवच्च। इदञ्च"विशेषणानाञ्चाजातेः" (पा०सू०१-२-५२) इत्यत्र वक्ष्यमाणेन पदसंस्कारपक्षे गुणवचनानामित्यादि वाचनिकमित्यनेन सह यथा न विरुध्यते, तथा तत्रैव वक्ष्यामः। ततो मुखनासिका वचनं यस्येति बहुव्रीहिः। मुखेति किम्? यमानुस्वाराणामेव मा भूदिति भाष्यम्। तत्र वर्गेष्वादितश्चतुर्णां पञ्चमे परे तन्मध्ये पूर्ववर्णसमानाकारं वर्णान्तरं प्रातिशाख्येष्वागमत्वेन विहितं तद्यमसंज्ञम्। यम इव यमः,यमौ हि लोके प्रायेण समानाकारौ भवतः। यथा'पलिक्क्नीः' 'चख्ख्नतुः' 'अग्ग्निः' 'अघ्घ्नन्'इत्यत्र कखगघ इत्येभ्यः परभागे तत्तत्सदृशो यमागमः। यत्तूक्तं विवरणे "वर्गपञ्चमयुक्ताः प्रथमादयो यमाः" इति। तच्चिन्त्यम्, अयोगवाहत्वप्रतिपादकेन हयवरट्सूत्रस्थभाष्येण सह विरोधात्, केवलनासिक्यत्वपरेण यमानुस्वाराणामेवेति भाष्येण सह विरोधाच्च। यथेदं भाष्यं न केवलनासिक्यत्वपरं किन्तु आँ इत्यादीनां भागमात्रं नासिक्यं, यमानुस्वाराणां तु मुखनासिक्यत्वेऽपि प्रासादवासिन्यायेन नासिक्यत्वमप्यस्ति, न तु तदीयं भागमात्रं तथेत्येवंपरं; तथाप्यादितश्चतुर्णां तदसम्भव एव। किञ्चैवं "नैव दोषो नैव प्रयोजनम्"इति तदुत्तरभाष्यग्रन्थविरोधः 'यद् घ्नन्ति'इत्यादौ"यरोनुनासिके" (पा०सू०८-४-४५) इत्यस्य प्रवृत्त्यापत्त्या त्वत्पक्षे दोषस्योद्भटत्वात्। अत एव प्रातिशाख्ये "स्पर्शा यमाननुनासिकाः स्वान्परेषु स्पर्शेष्वनुनासिकेषु" (ऋ०प्रा०६-२९) इत्युपक्रम्य 'प्रदोधुवच्छ्मश्रुषु' इत्यत्र यमं निषेद्धुमारब्धे"न स्पर्शस्योष्मप्रकृतेः प(१)रस्ताद्यमापत्तिम्" (ऋ०प्रा०६-३०) इति सूत्रे परस्ताच्छब्दः प्रयुक्तः। "यमः प्रकृत्यैव सदृक्" "श्रुतिर्वा यमेन मुख्यास्ति समानकाले" (ऋ०प्रा०६-३३) इत्यादिसूत्रान्तरेष्वपि

(१) 'प्रतीयाद्यः' सूत्र पाठः।

ष्टमेव यमस्य वर्णान्तरत्वम् । तथा नारदीयशिक्षायामपि—

अनन्त्यश्च भवेत्पूर्वो ह्यन्तश्च परतो यदि ।
तत्र मध्ये यमस्तिष्ठेत्सवर्णः पूर्ववर्णयोः ॥ इति ।

सवर्णः सदृशः । अत्र पूर्ववर्णयोरिति द्वित्वमविवक्षितम् । 'यज्ञः' इत्यादौ जकारद्वयसत्त्वेऽपि 'उभया अत्र वसवोरन्तदेवाः' इत्यादौ जकारद्वयाभावादिति तद्व्याख्यातारः । तथा ऋक्तन्त्रव्याकरणाख्यस्य छान्दोग्यलक्षणस्य प्रणेता औदव्रजिरप्यसूत्रयत् "अनन्त्यान्त्यसंयोगे मध्ये यमः पूर्वस्य गुणः" इति । पूर्वस्य गुण इत्यस्य पूर्वभक्त इत्यर्थः । एतेनागमत्वं स्फुटीकरोति । तथा संयोगशृङ्खलाख्यायां गौतमशिक्षायामपि "अथ चतुरक्षराणामुदाहरणं 'सयमायमाभ्याम्' । सयमास्तावद्यथा 'अग्निः' इति द्वौ गकारौ यमनकारौ, 'यज्ञः' इति द्वौ जकारौ यमञकारौ" इत्यादि । तथाऽत्रैव ग्रन्थारम्भे—"अयस्पिण्डो दारुपिण्ड ऊर्णापिण्डश्चेति त्रेधा संयोगं विभज्य यमसहितमयस्पिण्डम्"इत्युक्त्वा,

"अन्तस्थ यमसंयोगे विशेषो नोपलभ्यते ।
अशरीरं यमं प्राहुरन्तस्थः पिण्डनायकः ॥"

इत्युक्तम् । अन्तस्थोऽत्र वर्गपञ्चमः । अशरीरमिति स्वरभक्त्यादिवद्व्यञ्जकलिपिविशेषशून्यमित्यर्थः । लक्षणवशेनैव तदीयस्थलविशेषनिश्चयसंभवाल्लिपिसंप्रदायप्रवर्त्तकाचार्यैः स्वरभक्तेरिव यमस्यापि व्यञ्जकीभूता लिपिर्न कल्पितेत्यर्थः । 'रलयोरूष्मणि परे मध्ये स्वरभक्तिः' इति हि प्रसिद्धं शिक्षादौ । यत्र तु नैवंविधेन लक्षणेन स्थलावधारणं कर्तुं शक्यते, तत्रागत्या लिप्यन्तरं प्रवर्त्तितम् । यथा विसर्गादौ ।

पाणिनीयशिक्षायामपि ।

त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः सम्भवतो मताः ।
प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयंभुवा ॥
स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ।
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ॥
अनुस्वारो विसर्गश्च ≍क≍पौ चापि पराश्रयौ ।
दुःस्पृष्टश्चेति विज्ञेयो ऌकारः प्लुत एव च ॥

[पा०शि०३।४।५] इति ।

अत्र हि यमानां पृथग्गणनात्स्पष्टमेव वर्णान्तरत्वम् । गणना त्वित्थम्—अइउऋ इति चतुर्णां ह्रस्वदीर्घप्लुतभेदात्त्रैविध्ये द्वादश, ऌकार एकः; एचां दीर्घप्लुतभेदादष्टौ, इत्थं स्वरा एकविंशतिः । स्पर्शाः पञ्चविंशतिः । यरलवशषसहेत्यष्टौ । यमाश्चत्वारः प्रथमयमद्वितीययमा-

दिभेदेन विभजनात्। अत एव कुं खुं गुं घुं इति यमचतुष्टयं न्यासादावुदाहृतम्। 'कचटतपाः कुः' 'खछठथफाः खुः' इत्यादिपरिभाषामाश्रित्य तत्तदुत्तरस्याशरीरस्यापि कथञ्चित्प्रदर्शनतात्पर्यकं चेदमिति ध्येयम्। अनुस्वारविसर्गᳲकᳲपाश्चत्वारः, दुस्पृष्टश्च बह्वृचानां प्रसिद्धः ईळे वोळ्हे इति। इत्थं त्रिषष्टिः। ऌकारस्य प्लुतसम्भवात्तेन सह चतुःषष्टिः। तदेतदुक्तं 'सम्भवतः' इति।

हयवरट्सूत्रे क्षीरस्वामी(?)ऽप्याह—"वर्गान्त्येनन्त्यात्परे तयोर्मध्यवर्ती नासिकास्थानो यमः" इति। यत्तु कश्चिदाह—यमा आदेशाः। न च तेषामानुनासिक्यपक्षे 'तज्ञः' 'तद् घ्नन्ति' इत्यादौ "यरोऽनुनासिके" [पा०सू०८-४-४५] इत्यनुनासिकादेशापत्त्या "नैव दोषो नैव प्रयोजनम्" इति भाष्यं विरुध्येतेति वाच्यम्, व्यवस्थितविभाषाश्रयणादिति। तन्तुच्छम्, प्रागुक्तप्रातिशाख्यनारदीयशिक्षादिसकलग्रन्थविरोधेन आदेशपक्षस्य गर्भस्रावेणैव गतत्वात्, व्यवस्थितविभाषाकल्पनस्य निर्मूलत्वाच्च। एतेन एतदीयलेखनप्रामाण्यभ्रमेण "अनुपसर्गात् ज्ञः" (पा०सू०१-३-७६) इत्यादौ चवर्गाभावं दृढीकृत्य श्चुत्वाभावं साधयन्तस्तदनुगामिनोऽपि परास्ताः, नारदेन 'यज्ञः' इत्यत्र जकारद्वयस्य स्फुटमभिधानात् "तस्यैतस्य त्रयस्याह्नामज्ञां पर्वणामिति" इत्यारण्यकप्रयोग इव सजातीयसमभिव्याहारान्न स्पष्टो भेद इति तु प्रसिद्धं शास्त्रं। अत एव "न व्यञ्जनपरस्यैकस्यानेकस्य वा विशेषोऽस्ति" इति भाष्यम्। व्यञ्जनात्परस्य व्यञ्जनं परं यस्येत्येवम्भूतस्य च दुर्लक्षो भेदाभेदविभाग इत्येवम्परतया तत्रतत्र कैयटेन व्याख्यातम्। अत एव च बहुषु पुस्तकेषु "तज्ज्ञापयत्याचार्यः" इति भाष्यग्रन्थः। "अनुपसर्गात्" (पा०सू०१-३-७६) इति सूत्रेऽपि केषाञ्चित् श्चुत्वपाठः सम्मत एव। पाठान्तरं तु "अल्पाच्तरम्" (पा०सू०२-२-३४) 'आलुच्' 'तदसहने' इतिवत्सौत्रत्वादसंहितया वा समाधेयमिति दिक्।

तदेतत्सकलमभिधाय प्रक्रियाप्रकाशे गुरुचरणैरुक्तम्—"तज्ज्ञानमित्यादौ तु श्चुत्वं भवत्येव"। यमश्च मुखनासिक्यः केवलनासिकास्थानो वेति मतद्वयम् "नासिक्या नासिकास्थानाः मुखनासिक्या वा" इति तैत्तिरीयप्रातिशाख्यात्। अनुनासिकविषये तु दर्शनत्रयम्—कृत्स्नो वर्णो मुखेन नासिकया चोच्चार्यत इत्येकम्, पूर्वो भागो मुखेन परो नासिकयेति द्वितीयं, तद्वैपरीत्यात्तृतीयम्। द्वितीयतृतीययोर्भागमात्रस्य नासिक्यत्वेऽपि तदुपरागाद्भागान्तरमपि तद्वदवभासते। तथा च सिकान्वयस्य भागमात्रविषयतया नासिकावचनग्रहणेन मुखनासिक्यो

वर्णो न गृह्येत । किन्तु मतविशेषे केवलनासिकास्थानतया यमादय एव गृह्येरन् । ततश्च विधिप्रदेशे "आङोऽनुनासिकः" (पा०सू०६-१-१२६) इत्यादौ यमानुस्वारा एव विधीयेरन् । "विड्वनोरनुनासिकस्यात्" (पा०सू०६-४-४१) इत्यादौ त्वनुवादे अप्रतिपत्तिरेव स्यादित्युदाहृतभाष्याशयः । तस्माद्दर्शनद्वये मुखपदोपादानं सार्थकमिति स्थितम् । प्रथमदर्शने तु प्रासादवासिन्यायाश्रयणेनोभयवचनानामपि सिद्धा संज्ञा । आन्तरतम्याच्च विधिप्रदेशेषु यमानुस्वाराणामप्रवृत्तिः । तथाच मुखशब्दोपादानं न कर्त्तव्यमिति भाष्ये स्थितम् । मुखवचन इत्यवाक्ये तु कचटतपादीनामपि स्यात् । ततश्च 'शक्तः' इत्यत्र कलोपः स्यात् । 'पक्वः' इत्यत्र चकारलोपः स्यात् । 'तप्तम्' इत्यत्र पलोपः स्यात् । 'ओदनपग्' इत्यादौ "अनुनासिकस्य क्विझलोः" (पा०सू०६-४-१५) इति दीर्घः स्यात् । अनु पश्चान्नासिका व्याप्रियते यस्मिन्नासिकायाः पश्चान्मुखं व्याप्रियते यस्मिन्निति वाऽन्वर्थसंज्ञेयम् । तेन नासिकाव्यापारस्य भागविषयकत्वसूचनात्प्रासादवासिन्यायस्याविषयोऽयमिति ध्वनितम् । एतच्च सूत्रं प्रत्याख्यातुं शक्यम् । प्रदेशवाक्येष्वेव प्रागुक्तस्य नासिकामनुगत इत्यस्य वा योगस्याश्रयणेन सकलेष्टसिद्धिरिति दिक् ।

तुल्यास्यप्रयत्नं सवर्णम् (पा०सू०१-१-९) । ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्युभयं यस्य वर्णस्य येन वर्णेन सह समानं स तस्य सवर्णो बोध्यः । संज्ञाप्रदेशाः "अकः सवर्णे दीर्घः" (पा०सू०६-१-१०१) इत्यादयः । यद्यपि तुलया सम्मितं तुल्यमित्यवयवार्थः "नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु" (पा०सू०४-४-७) इति सूत्रेण तुलाशब्दात्सम्मिते यद्विधानात्, तथाप्ययं सदृशमात्रे रूढः शब्दः । अस्यन्ति उच्चारयन्ति अनेन वर्णानित्यास्यम् । "असु क्षेपणे" (दि० प० १२१०) बाहुलकात्करणे ण्यत् । यद्वा, आस्यन्दते अन्नं प्राप्य द्रवीभवतीत्यास्यम् । "अन्येष्वपि" (पा०सू०३-२-१०१) इति डप्रत्ययः । अथवा 'अन्नेन द्रवीक्रियते इत्यास्यम्' अन्तर्भावितण्यर्थात्कर्मणि डः 'परितः खाता परिखा' इतिवत् । तत्र भवमास्यं ताल्वादिस्थानम् । "शरीरावयवाद्यत्" (पा०सू०५-१-६) । "यस्य" (पा०सू०६-४-१४८) इतिलोपे "हलो यमाम्" (पा०सू०८-४-६) इति यलोपः । न चाल्लोपस्य स्थानिवद्भावः शङ्क्यः, यलोपे कर्त्तव्ये तन्निषेधात् । प्रकृष्टो यत्नः प्रयत्नः । प्रकर्षश्चाभ्यन्तरत्वम् । प्रारम्भे यत्नो वा प्रयत्नः । आभ्यन्तरप्रयत्ना हि वर्णप्रारम्भकाल एव व्याप्रियन्ते । तथा च तुल्यौ स्थानप्रयत्नौ यस्येति द्वन्द्वगर्भो बहुव्रीहिः । यद्वा, तुल्यः आ-

स्ये प्रयत्नो येषामिति त्रिपदो बहुव्रीहिः । आस्ये इति विशेषणाद्बाह्यप्रयत्नव्युदासः । आस्य इत्येकत्वं विवक्षितं, तद्धितान्तास्यशब्दोपादानसामर्थ्यात् । तेन भिन्नस्थानानामर्थाद् व्युदासः । यद्वा, तुल्यः आस्ये तुल्यास्यः, मयूरव्यंसकादित्वात्साधुः । तुल्यास्यः प्रयत्नो यस्येति विग्रहः । यद्वा, आस्ये प्रयत्नः आस्यप्रयत्नः, स तुल्यो यस्येति । एकत्वविवक्षादिकं प्राग्वत् । तदेवं समासचतुष्टयमपि भाष्ये स्थितम्—"द्वन्द्वगर्भो बहुव्रीहिः, त्रिपदो वा, पूर्वभागे तत्पुरुषगर्भः, तदुत्तरभागे वा" इति ।

तुल्यशब्दस्य सम्बन्धिशब्दत्वाच्च येन सह तुल्यस्थानप्रयत्नं तेन सह सवर्णमिति लभ्यते । नहि माता पूज्येत्युक्ते स्वसुतमाता भार्या पूज्यते किन्तु पूजकस्यैव मातेति दिक् ।

तुल्यस्थानमिति किम् ? तुल्यप्रयत्नानामपि कचटतपानां मा भूत् । तेन 'तर्प्ता' इत्यत्र "झरो झरि" (पा०सू०८-४-६५) इति पकारलोपो न भवति । यत्नग्रहणं किम् ? चकारशकारयोर्मा भूत् । सति हि सावर्ण्ये 'वाक् श्च्योतति' इत्यत्र शकारलोपः स्यात् । आभ्यन्तरत्वविशेषणमप्येतदर्थमेव । अस्ति हि श्वासाघोषविवाराख्यबाह्यप्रयत्नसाम्यं चशयोरपि । ननु अल्पप्राणत्वमहाप्राणत्वकृतो भेदोऽस्तीति चेत् ? किं ततः । नहि सर्वप्रयत्नसाम्यं विवक्षितुं शक्यम् 'अङ्क्तिः' इत्याद्यसिद्धिप्रसङ्गात्, कङयोरपि बाह्यप्रयत्नभेदात् । सर्वप्रयत्नसाम्यं हि स्वस्य स्वेनैवायाति न तु परेण । तथा च सवर्णसंज्ञाप्रणयनमपि व्यर्थं स्यात्, "अणुदित्तुल्यास्यप्रयत्नस्य" इत्युक्तौ सर्वसामञ्जस्यात् । "झरो झरि" (पा०सू० ८-४-६५) इत्युक्ते "हलो यमां यमि" (पा०सू०८-४-६४) इत्यत्रेव यथासंख्यप्रवृत्त्या 'माहात्म्यम्' इत्यादौ मकारस्येव 'शिण्ढि' इत्यादौ डकारस्यापि लोपो न स्यादिति हि सिद्धान्ते सवर्णग्रहणं कृतम् । स चाव्याप्तिदोषो यावत्प्रयत्नसाम्यविवक्षायां तदवस्थ एव स्यात् । अथ यावद्बाह्यसाम्यं यावदाभ्यन्तरसाम्यं वा विवक्ष्येत एवमपि 'मधुलिट्स्थानम्' इत्यत्र "झरोझरि" (पा०सू०८-४-६५) इति सलोपः स्यात्, सकारथकारयोः श्वासाघोषविवारमहाप्राणत्वरूपबाह्यप्रयत्नचतुष्टयेनापि साम्यात् ।

अथ स्थानप्रयत्नविवेकः—अकुहविसर्जनीयाः कण्ठ्याः । इचुयशास्तालव्याः । ऋटुरषा मूर्द्धन्याः । लृतुलसा दन्त्याः । उपूपध्मानीया ओष्ठ्याः । एऐ कण्ठ्यतालव्यौ । ओऔ कण्ठ्योष्ठ्यौ । वकारो दन्त्योष्ठ्यः । जिह्वामूलीयो जिह्वामूलस्थानः । अनुस्वारो नासिक्यः ।

यत्नो द्विधा—आभ्यन्तरो बाह्यश्च । तत्राभ्यन्तरश्चतुर्द्धा—स्पृष्टता ईषत्स्पृष्टता विवृतता संवृतता चेति । तत्र स्पृष्टता स्पर्शानाम् । ईष-

त्स्पृष्टता अन्तस्थानाम्। ह्रस्वस्यावर्णस्य प्रयोगे संवृतता। शास्त्रीये कार्ये तु विवृतता प्रतिज्ञायते इति अइउण्सूत्रे प्रतिपादितम् "स्वृतः संवृताः" इति तु प्रातिशाख्योक्तत्वान्न सर्वसाधारणम्। ऊष्मणां स्वराणाञ्च विवृतता। एषां चतुर्णामप्याभ्यन्तरत्वं वर्णोत्पत्तिप्राग्भावित्वात्। तथा हि नाभिप्रदेशात्प्रयत्नप्रेरितो वायुः प्राणो नाम ऊर्ध्वमाक्रामन्नुरः प्रभृतीनि स्थानान्याहन्ति। ततो वर्णस्य तदभिव्यञ्जकध्वनेर्वा उत्पत्तिः। तत्रोत्पत्तेः प्राग्यदा जिह्वाग्रोपाग्रमध्यमूलानि तत्तद्वर्णोत्पत्तिस्थानं तात्वादि सम्यक् स्पृशन्ति तदा स्पृष्टता। ईषद्यदा स्पृशन्ति तदा ईषत्स्पृष्टता। समीपावस्थानमात्रे संवृतता। दूरत्वे विवृतता। अत एव इचुयशानां तालव्यत्वाविशेषेऽपि तालुस्थानेन सह जिह्वाग्रादीनां चवर्गोच्चारणे कर्त्तव्ये सम्यक् स्पर्शः, यकारे ईषत् स्पर्शः, शकारेकारयोस्तु दूरेवस्थितिरित्याद्यनुभवं शिक्षाकारोक्तिं चानुसृत्य विवेचनीयम्।

भाष्यकारास्तु "नाज्झलौ" (पा०सू०१-१-२०) इत्यस्य प्रत्याख्यानावसरे ऊष्मणां स्वराणां च ईषद्विवृतत्वं विवृतत्वं चेति वैलक्षण्यं वक्ष्यन्ति। तदप्यनुभवानुसार्येवेति सहृदयैराकलनीयम्।

बाह्याः प्रयत्नाः पुनरेकादश—विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति। एते च वर्णोत्पत्तेः पश्चान्मूर्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायौ उत्पद्यन्ते। अत एव बाह्या इत्युच्यन्ते। गलबिलस्य सङ्कोचात्संवारः। तस्यैव विकासाद्विवारः। एतौ च संवृतविवृतस्वरूपाभ्यामाभ्यन्तराभ्यां भिन्नावेव। तयोः समीपदूरावस्थानात्मकत्वादित्यवधेयम्। तत्र "वर्गाणां प्रथमद्वितीयाः शषसविसर्जनीयजिह्वामूलीयोपध्मानीया यमौ च प्रथमद्वितीयौ विवृतकण्ठाः श्वासानुप्रदाना अघोषाः, वर्गयमानां प्रथमे अल्पप्राणाः, इतरे सर्वे महाप्राणाः, वर्गाणां तृतीयचतुर्था अन्तस्था हकारानुस्वारौ यमौ च तृतीयचतुर्थौ संवृतकण्ठा नादानुप्रदाना घोषवन्तो वर्गाणां तृतीया अन्तस्थाश्चाल्पप्राणाः, यथा तृतीयास्तथा पञ्चमा आनुनासिक्यमेषामपरो गुणः" इति शिक्षासु स्थितम्। संग्रहश्च—

> खयां यमाः खय꠲क꠲पौ विसर्गः शर एव च।
> एते श्वासानुप्रदाना अघोषाश्च विवृण्वते॥
> कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः।
> अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः॥

यद्यप्येते बाह्याः प्रयत्नाः सवर्णसंज्ञायामनुपयुक्तास्तथाप्यन्तरतम-

त्वपरीक्षायामुपयोक्ष्यन्ते इतीह आभ्यन्तरत्वविशेषणव्यावर्त्यतया व्युत्पादिताः।

नन्विह सूत्रे प्रयत्नग्रहणं व्यर्थं, तद्धितान्तास्यशब्दबलादेव ताल्वादिस्थानस्य प्रयत्नस्य च लाभादिति चेत्? न, प्रत्येकं व्यापारनिरासार्थमुभयोरुपादानात्। तेन स्थानप्रयत्नोभयसाम्ये सत्येव संज्ञा न त्वन्यतरसाम्येऽपि। एवं स्थिते यत्फलितं तत्स्पष्टत्वार्थमुपन्यस्यते। अष्टादश अवर्णाः परस्परं सवर्णाः, एवमिवर्णोवर्णौ। ऋकारा अष्टादश, ऌवर्णास्तु द्वादशेति त्रिंशन्मिथः सवर्णाः, ऌवर्णस्य दीर्घा न सन्तीत्युक्तत्वात् ऋऌवर्णयोर्मिथः सावर्ण्यस्योपसंख्यानाच्च। एचस्तु द्वादश मिथः सवर्णाः, न तु एकारैकारौ ओकारौकारौ वा मिथःसवर्णौ। यथा चैतत्तथा "अइउण्" (मा० सू० १) इत्यत्रैव प्रतिपादितम्। अकारेणाप्येचां न सावर्ण्यं प्रयत्नभेदादिति इहैव सूत्रे भाष्ये स्पष्टम्। अतएव एदैतोरपि शकारेण न सावर्ण्यमिति तेषां "नाज्झलौ" (पा०सू०१-१-११०) इति सूत्रे उदाहरणत्वं नास्ति। न चात्र स्थानभेदेन निर्वाहः एचामकारेण सह कण्ठस्थानसाम्यात्, एदैतोः शकारेण सह तालुस्थानसाम्यात्। नहि यावत्स्थानसाम्यं विवक्षितम्, ञमङणनानां स्ववर्ग्यैः सह असावर्ण्यापत्तेः यवलानां सानुनासिकनिरनुनासिकानामसावर्ण्यापत्तेश्च। नहि निरनुनासिकानामपि नासिकास्थानम्, येन सर्वसाम्यं स्यात्। ननु तद्धितान्तास्यशब्दबलात्ताल्वादिसाम्यमात्रं लभ्यते। ओष्ठात्प्रभृति प्राक्काकलकाद्धि आस्यम्। काकलकं च ग्रीवाया उन्नतप्रदेशः यं कण्ठमणिरित्याचक्षते। तत्कथं नासिकास्थानभेदेनासवर्णत्वमापाद्यते इति चेत्? नासिका हि न बाह्या वर्णोत्पत्तौ निमित्तम्, तत्र जिह्वाग्रादिव्यापारविरहात् किन्तु अन्तरास्ये विततं चर्मास्ति पणवचर्मवत्, तत्संबद्धोरेखाविशेषो नासिका, सैव वर्णोत्पत्तौ निमित्तमिति सिद्धान्तात्। तस्याश्च ओष्ठादिभ्योऽविशेषात् वर्ग्यौ वर्ग्येण सवर्णः तुल्यास्यप्रयत्नत्वात्। रेफस्य रेफ एव सवर्णः, एवमूष्मणामपि ऊष्माण एव सवर्णा न त्वन्ये, तुल्यास्यप्रयत्नत्वाभावात्। शषसहानां यथाक्रमम् इकारऋकारऌकाराकाराः सूत्रकारमते यद्यपि तुल्यास्यप्रयत्नास्तथापि न सवर्णाः "नाज्झलौ" (पा०सू०१-१-११०) इति निषेधात्। भाष्यकारमते तु प्रयत्नभेद एवेति वक्ष्यते। इह स्थानभेदादप्राप्तां सवर्णसंज्ञां विधातुं वार्त्तिकमारभ्यते—"ऋकारऌकारयोः सवर्णविधिः" (का० वा०) इति। होतृऌकारः होतॄकारः। उभयान्तरतमश्च दीर्घो न सम्भवतीति परिशेषादीकारः।

कथं

स्यादेतत्, "अकः सवर्णे दीर्घः" (पा०सू०६-१-१०१) इत्यत्र "ऋति ऋ वा" वचनं "लृति लृ वा" वचनमिति वक्ष्यति। तस्यायमर्थः-अकः सवर्णे ऋति परे पूर्वपरयोः स्थाने वा ऋ अयमादेशो भवति। द्विमात्रोऽयम्। मध्ये द्वौ रेफौ, तयोरेका मात्रा, अभितोऽज्भक्तेरपरा। ईषत्स्पृष्टश्चायम्। तत्र प्रयत्नभेदादृकारेणाग्रहणादनच्त्वाद्दीर्घसंज्ञाया अभावादप्राप्तोऽयं विधीयते "लृति लृ वा" (का० वा०) इति। अयमपि द्विमात्रः, ईषत्स्पृष्टश्च। मध्ये द्वौ लकारौ तयोरेका मात्रा, अभितोऽज्भक्तेरपरा। पूर्ववदप्राप्तो विधीयते। तत्र वावचनमिति वाशब्दो दीर्घसमुच्चयार्थो भविष्यति।

वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये।

इत्यभिधानात्, तेनाप्राप्तएव दीर्घो भविष्यति। तत्किं सवर्णसंज्ञया? ननु "लृति लृवा" इत्यत्र सवर्णे इत्यनुवर्त्तते न वा? आद्ये 'होतृलृकार' इत्यत्र ऋलृवर्णयोः सवर्णसंज्ञाविधानं विना नेष्टसिद्धिः, अन्त्ये 'दध्लृकारो' 'मध्लृकार' इत्यादावतिप्रसङ्ग इति चेत्? न, प्रथमवार्त्तिके "ऋति" इत्यपनीय 'ऋतः' इति पञ्चम्यन्तपाठेनैव सर्वसामञ्जस्यात्। सवर्ण इति च पूर्ववार्त्तिकेऽनुवर्त्तते। तेन 'धात्रंशः' इत्यादौ नातिप्रसङ्गः। द्वितीयवार्त्तिके तु सवर्ण इति निवृत्तम्। ऋत इत्यनुवर्त्तते। तस्माद् "अकः सवर्णे" (पा०सू०६-१-१०१) इत्यत्रावश्यकर्त्तव्येन वचनद्वयेनैव सकलनिर्वाहादृकारलृकारयोः सवर्णविधिरितीहत्यं वार्त्तिकं व्यर्थमिति।

मैवम्, इहत्यमेकं वार्त्तिकमाश्रित्य षाष्ठवचनद्वयप्रत्याख्यानस्यैव न्याय्यत्वात्। तथाहि, तद्वचनद्वयं कुर्वताऽपि रेफद्वयलकारद्वयगर्भयोस्तद्विधेययोरच्त्वं तावदेष्टव्यम्। तन्निर्वाहार्थं वर्णसमाम्नाये तौ पठनीयौ। अन्यथा हि विधानमात्रमनयोः स्यान्न त्वच्कार्यं प्लुतः। तद्विधाने हि "अचश्च" (पा०सू०१-२-२८) इति परिभाषया 'अचः' इत्युपतिष्ठते। ननु ईषत्स्पृष्टस्यानच्त्वान्मा भूत् प्लुतः, विवृतस्य तु ऋकारस्याच्त्वेन प्लुतः सिद्ध एवेति चेत्? सत्यम्। विवृतः प्लुतः सिद्धः, ईषत्स्पृष्टौ तु प्लुतौ रेफद्वयलकारद्वयगर्भौ न सिध्यतः। अत एवाच्संज्ञामात्रेणापि न निस्तारः, ग्रहणकशास्त्रप्रवृत्तेस्तावन्मात्रेणानिर्वाहात् किन्त्वण्सु पाठ एव कर्त्तव्य इत्युक्तम्। सति त्वण्सु पाठे ताभ्यां त्रिमात्रयोरपि ग्रहणात्प्लुतसंज्ञायां सत्यां पक्षे ईषत्स्पृष्टौ प्लुतौ भवतः। एवं स्थिते षाष्ठं वचनद्वयं माऽस्तु, तद्विधेययोरपि दीर्घतया "अकः सवर्णे" (पा०सू० ६-१-१०१)इत्यनेनैव सिद्धेः। ननु 'स्थानेऽन्तरतमपरिभाषया विवृतस्य स्थानिनोविवृतावेव दीर्घौ स्यातां न त्वीषत्स्पृष्टाविति चेत्? न, रेफद्वययुक्त एवादेशः 'सुसदृशः' इत्यपि हि सम्भवति। तथा च किं रे-

ऋद्वययुक्तत्वमादर्त्तव्यं, किं वा विवृतत्वमित्यत्र विनिगमकाभावेन पर्यायेणोभयप्रवृत्तौ सिषाधयिषितस्य रूपद्वयस्य निर्वाहात् । लृकारेऽपि कदाचिदृकारान्तरतमो विवृतदीर्घः कदाचिद् लृकारान्तरतमो लृकारद्वयगर्भ ईषत्स्पृष्ट इति सकलेष्टसिद्धेः । तदेवं षाष्ठं वचनद्वयं न कर्त्तव्यमिति स्थितम् ।

ननु तदेवास्तु संज्ञाविधानं तु मास्त्विति चेत् ? न, वचनद्वयारम्भे गौरवस्य स्पष्टत्वात् । किञ्च, संज्ञाभावे "ऋत्यकः" (पा०सू०६-२-१२८) "उपसर्गादृति" (पा०सू०६-१-९२) "उरण्रपरः" (पा०सू०१-१-५१) इत्यादिषु ऋकारेण लृकारग्रहणं न स्यात् । न चैवं सिद्धान्तेऽपि 'तवल्कारः' इत्यादौ रपरत्वप्रसङ्गः रप्रत्याहारपरत्वस्य वक्ष्यमाणतया लपरत्वसिद्धेः । ऋदिताम्लृदितां च धातूनामनुबन्धकार्येषु सङ्करस्तु न भवति धातूपदेशे पृथगनुबन्धकरणसामर्थ्यात्, विधिवाक्येष्वपि पृथगनुवादसामर्थ्यात् । अन्यथा हि सर्वान् ऋदित एव लृदित एव वा पठित्वा विधावपि तेनैव रूपेणानुवदेत् । सम्भवत्यैकरूप्ये वैरूप्याश्रयणायोगात् ।

नाज्झलौ [पा०सू०१-१-१०] । अज्झलौ मिथः सवर्णौ न स्तः । अकारहकारयोरिकारशकारयो ऋकारषकारयोर्लृकारसकारयोश्चेति स्थलचतुष्टये पूर्वसूत्रेण प्राप्तं सावर्ण्यमनेन निषिध्यते । तेन 'आनडुहं चर्म' 'वैपाशो मत्स्यः' इत्यत्र "यस्येति च" (पा०सू०६-४-१३८) इति हकारशकारयोर्लोपो न । अन्यथा हि 'यस्य' इत्यनेन दीर्घाणामिव हकारशकारयोरपि ग्रहणं स्यात् । तथा 'दण्डहस्तः' 'दधिशीतं' 'कर्तृषट्कम्' इत्यादौ सवर्णदीर्घः स्यात् । 'दधिसान्द्रम्' इत्यादौ यणादेशश्च स्यात् । इहाज्झलौ कस्यापि न सवर्णौ स्त इति वाक्यार्थो न ग्राह्यः संज्ञारम्भवैयर्थ्यापत्तेः । विहितप्रतिषिद्धत्वेन विकल्पे तु लाघवात् "तुल्यास्यप्रयत्नं वा" इत्येव सूत्रयेत् । नाप्यचामज्भिर्हलां हल्भिः सावर्ण्यं निषिध्यते । "नाज्झलौ" [पा०सू०२-२-२०] इत्यत्रैव सूत्रे सवर्णदीर्घस्य "झयो हः" [पा०सू०८-४-६२] इति पूर्वसवर्णादेशस्य च निर्देशात् । ननु झलेवात्र निर्दिष्टो न तु हल्, तावतैवेष्टसिद्धेरिति चेत्तर्हि दीर्घनिर्देश एव ज्ञापकोऽस्तु । तेन ह्यचामज्भिः सावर्ण्यमनिषिद्धमिति ज्ञापिते परिशेषादज्झलोर्मिथो निषेध एव पर्यवस्यति । "झरो झरि सवर्णे" [पा०सू०८-४-६५] इति ज्ञापकाच्च । यत्तु नाणशलावित्येव कुतो न सूत्रितमिति । तन्न, 'कर्तृषट्कं' 'दधिसान्द्रम्' इत्याद्यसिद्ध्यापत्तेः, ऋलृकारयोरनण्त्वात्; ग्रहणकसूत्रातिरिक्ते पूर्वं एवाणित्युक्तत्वात् । अस्तु वा परेण, तथाप्यजपेक्षया व्यक्तिगौरवमेव स्यादित्यज्ग्रहणम्-

पनीयाण्ग्रहणं क्रियतामिति शङ्कायां गर्भस्रावेणैव गतार्थत्वात् । शलंशे तु व्यक्तिलाघवे सत्यपि वर्णोच्चारणे विशेषो नास्तीत्येवोत्तरम् । वस्तुतस्तु "नाज्झलौ" इत्येव सूत्रयितुमुचितम् ।

स्यादेतत्, शरां शर्भिरपि सावर्ण्यं निषिध्येत । ते हीकारादिभिर्गृहीतत्वादच्संज्ञकाः हल्षूपदेशाद्धलश्च । न चास्मादेव निषेधादिकारादयो न सवर्णा इति वाच्यम्, एतद्वाक्यार्थबोधात्प्राक् पदार्थोपस्थितेरावश्यकतया तस्यामवस्थायामिकारादिभिः शरामुपस्थापनस्य दुर्वारत्वात् । ततश्च 'परश्शताः' 'रामष्षष्ठः' 'यशस्सारम्' इत्यादौ "झरो झरि" (पा०सू०८-४-६५) इत्यस्य प्रवृत्तिर्न स्यात् । ततश्चैकत्र शत्रयं श्रूयेत । इष्यते तु द्वयम् । तथा च पूर्वपक्षवार्तिकम्-"अज्झलोः प्रतिषेधे षकारप्रतिषेधोऽज्झल्त्वात्" इति । अत्र शकारग्रहणं शरामुपलक्षणम् । किञ्चावर्णस्याष्टादशधा भिन्नस्य परस्परं सावर्ण्यं न स्यात् । ततश्च 'दण्डाग्रम्' इत्यादौ दीर्घो न स्यात् । तथाहि, हकारेण ग्रहणादकारो हल् अक्षु पाठाच्चाच् । न चास्मिन्नेव सूत्रे एतस्य प्रवृत्तिः, येन ग्रहणकशास्त्रमसावर्ण्यान्न प्रवर्त्ततेति । अत्र सिद्धान्तं वार्त्तिककार एवाह-"सिद्धमनच्त्वाद्वाक्यापरिसमाप्तेर्वा" इति । तत्र सूत्रप्रत्याख्यानेनोत्तरं प्रथमवार्त्तिकेऽभिप्रेतम् । तथाहि, शिक्षावाक्ये विवृतमूष्मणामिति योगो विभज्यते । तत्र चेषदित्यनुवर्त्तते । स्वराणाञ्चेति विवृतमित्यनुवर्त्तते । ईषदिति निवृत्तम । तथाच प्रयत्नभेदादूष्मस्वरयोः सावर्ण्याप्राप्तौ किं सूत्रेण ? तथाच शरामनच्त्वादेव सिद्धमित्यर्थः । उपलक्षणञ्चेदमकारस्याहल्त्वादित्यपि बोध्यम् । सूत्रारम्भमभ्युपेत्येदम् । वस्तुतस्तूक्तरीत्या सूत्रमेव नारम्भणीयमित्यर्थः ।

ईषदित्यस्याननुवृत्तिं समानप्रयत्नताञ्च स्वीकृत्य सूत्रारम्भपक्षेऽप्याह—वाक्यापरिसमाप्तेर्वेति । अयमाशयः-इह पूर्वं वर्णानामुपदेशः । तत इत्संज्ञा । तत "आदिरन्त्येन सहेता" (पा०सू०१-१-७१) इति प्रत्याहारसिद्धिः । ततो "नाज्झलौ" (पा०सू०१-१-१०) इत्येतद्वाक्यार्थबोधः । ततोऽपवादविषयपरिहारेण सवर्णसंज्ञानिश्चये सति ग्रहणकशास्त्रप्रवृत्तिः, नत्वेतत्सूत्रनिष्पत्तिसमये । अन्यथा तत्सूत्रेणैवेकारशकारादीनां सावर्ण्यनिषेधादिकारेण शकाराग्रहणे सत्यज्झल्त्वादिति हेतोरसिद्ध्या त्वदीयः पूर्वपक्षोऽसम्भवदुक्तिक एव स्यात् । अथ पदार्थज्ञानस्य वाक्यार्थबोधहेतुतयैतद्वाक्यस्थपदार्थबोधकाले एतद्वाक्यार्थग्रहाभावादिह सूत्रे इकारेण शकारग्रहः स्यादेवेतः पूर्वं सावर्ण्यनिषेधाग्रहादिति ब्रूषे तर्हीतः पूर्वं ग्रहणकशास्त्रमेव न निष्पन्नमिति कथं न

पर्यालोचयेः ? नन्वेवं "तुल्यास्यप्रयत्नं" (पा०सू०१-१-९) "नाज्झलौ" (पा०सू०१-१-१०) इत्यादौ "अकः सवर्णे दीर्घः" (पा०सू०६-१-१०१) इति दीर्घोऽपि न प्रवर्त्तेतेति चेत् ? न, सवर्णसंज्ञाद्युत्तरकाले प्रवर्त्तमानस्य दीर्घशास्त्रस्य दण्डाढकादाविवेहाप्यप्रतिबद्धप्रवृत्तिकत्वात्, उद्देश्यतावच्छेदकरूपाक्रान्तत्वाविशेषात्। न च सवर्णदीर्घविधानात्प्रागेतत्सूत्रार्थबोधानुपपत्तिरिति वाच्यम्, पदार्थोपस्थितिप्रभृतिसामग्रीसम्पत्तौ सत्यां साधुत्वबोधकवाक्यार्थज्ञानविलम्बेन शाब्दबोधे विलम्बादर्शनात्। अन्यथा व्याकरणशास्त्रपरिशीलनविकलानां क्वापि शाब्दबोधो न स्यात्। तथा वैयाकरणानामपि व्याकरणसूत्रघटकशब्देषु व्याकरणादेव साधुत्वबोधे तदुत्तरकाले च वाक्यार्थावगतावात्माश्रयान्योन्याश्रयचक्रकाणां दुर्वारत्वादिति दिक्।

साधुत्वज्ञानं तु न शाब्दबोधहेतुः। अस्तु वाभियुक्तवाक्यत्वेन साधुत्वानुमितिः, ततः शब्दबोधे जाते लक्ष्यान्तरेष्विव लक्षणवाक्यान्तर्गतेष्वपि लक्षणप्रवृत्तिरिति दिक्।

वस्तुतस्तु शरां परस्परं सावर्ण्यनिषेधे सत्यपि न क्षतिः। परःशतादिषु हि रूपद्वयं सिद्धान्तेऽपीष्यते। शतात्पराणीति विग्रहे "कर्तृकरणे कृता बहुलम्" (पा०सू०२-१-३२) इति बहुलवचनाद्वा "सुप्सुपा" (पा०सू०२-१-४) इति वा समासे कृते पारस्करादित्वात्सुटि सकारस्य श्चुत्वम्। ततः "अनचि च" (पा०सू०८-४-४७) इति द्विर्वचनम्। ननु "शरोऽचि" (पा०सू०८ ४-४९) इति "अनचि" (पा० सू०८-४-४७) इति वा द्वित्वनिषेधोऽस्त्विति चेत् ? न, तत्र "नाज्झलौ" (पा०सू०१-१-१०) इति निषेधादिकारेण शकाराग्रहणात्। ततो "झरो झरि" (पा०सू०८-४-६५) इति लोपविकल्पाद् द्विशकारं त्रिशकारं वा रूपमिति सावर्ण्यनिषेधेऽपि सिध्यत्येवेदं रूपद्वयम्, "अनचि च" (पा०सू०८-४-४७) इति द्वित्वस्यापि वैकल्पिकत्वात्। तत्र द्वित्वस्य वैकल्पिकत्वं "यरोऽनुनासिकेऽनुनासिको वा" (पा०सू०८-४-४५) इत्यतो वेत्यनुवर्तनात् "सर्वत्र शाकल्यस्य" (पा०सू०८-४-५१) इति पाक्षिकनिषेधाद्वा। लोपस्य वैकल्पिकत्वं तु "झयो होऽन्यतरस्याम्" (पा०सू० ८-४-६२) इत्यतोऽन्यतरस्यांग्रहणानुवृत्तेरित्यवधेयम्। तस्मात्सावर्ण्ये सत्यसति वा 'परश्शताः' इति द्विशकारकत्रिशकारकरूपयोरविशेषः।

परश्शताद्यास्ते येषां परा संख्या शतादिकात्। (अ०को०३-१-६४)

इत्यमरः। एवं 'रामष्षष्ठः' 'यशस्सारम्' इत्यादावपि। अत एव भाष्ये—"अपर आह" इत्युपक्रम्य वार्त्तिकद्वयमप्येकहेतुतया व्याख्याय

"अस्तु वा ग्रहणमिकारादिभिः शकारादीनाम् " इति वाक्यशेषाध्याहारेण प्रतिज्ञाविकल्पार्थो वाशब्द इति व्याख्यातम् । तत्र अपर आह-त्यपरितोषोद्भावनम् । तद्वीजन्तूक्तरीत्या शषु सावर्ण्यनिषेधानिषेधयोः फलाविशेषेऽपि प्रागुक्तरीत्या 'दण्डाग्रम्' इत्यादि न सिद्ध्येत् । तदर्थं च सूत्रप्रत्याख्यानस्य वाक्यापरिसमाप्तिन्यायस्य वाऽऽश्रयणे आवश्यके शरां शर्भिः सावर्ण्याभावाभ्युपगमो निर्मूल एवेति ।

स्यादेतत्, अगृहीतसवर्णानामेव "नाज्झलौ" (पा०सू०१-१-१०) इति निषेध इति तावत्स्थितम् । तथा चेकारादीनां शकारादिभिः सावर्ण्यानिषेधात् 'कुमारी शेते' इत्यादौ सवर्णदीर्घः स्यादित्याशङ्काचीत्यनुवृत्त्या-समाहितम् । एवं स्थिते 'मालासु' इत्यादौ षत्वं स्यात् । हकारेणाकारग्रहणे सति 'गौरीषु' इत्यादिवदिणः परत्वानपायात् । किञ्च 'विश्वपाभिः' इत्यत्र "हो ढः" (पा०सू०८-२-३१) इति ढत्वं स्यात्, 'वागाशीः' इत्यत्र "झयो होऽन्यतरस्याम्" (पा०सू०८ ४-६२) इत्याकारस्य घकारः स्यात्, 'गासीध्वम्' इत्यत्र "इणः षीध्वम्" (पा०सू०८-३-७८) इति मूर्द्धन्यादेशः स्यात्, 'दासीष्ट' इत्यादौ "दादेर्धातोर्घः" (पा०सू०८-२-३२) इति घत्वं स्यात्, 'राम आयाति' इत्यादौ "हशि च" (पा०सू०६-१-११४) इत्युत्वं स्यात्, 'देवा आयान्ति' इत्यादौ "हलि सर्वेषाम्" (पा०सू०८-३-२२) इति नित्यो यलोपः स्यात्, 'चाखायिता' इत्यादौ "यस्य हलः" (पा०सू०६-४-४९) इति यलोपः स्यात्, 'श्येनायिता' इत्यादौ "क्यस्य विभाषा" (पा०सू०६-४-५०) इति लोपः स्यात्, 'निचाय्य' इत्यादौ "हलो यमाम्" (पा०सू०८-४-६४) इति यलोपश्च स्यादिति बहूपप्लवप्रसङ्गः ।

अत्रोच्यते, आकारो न हकारस्य सवर्णः "तनोऽप्याकारः" इति अइउणसूत्रोदाहृतशिक्षारीत्या भिन्नप्रयत्नत्वात् । "सवर्णेण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्" इति वार्त्तिकमते तु हकाराकारयोरेकजात्यनाक्रान्तत्वादेव नातिप्रसङ्गः । यद्वा, आकारसहितोऽच् आच् स च हल् च आज्झलाविति सूत्रे आकारप्रश्लेषो व्याख्येयः । तेनाकारस्याचां च हलिभः सह सावर्ण्यं निषिध्यते । आकारप्रश्लेषे लिङ्गं तु "कालसमयवेलासु तुमुन्" (पा०सू०३-३-१६४) इत्यादिनिर्देशाः । अत्र पक्षे आश्च आश्चेति द्वन्द्वेन सवर्णदीर्घेण च "नाज्झलौ" (पा०सू०१-१-१०) इति सूत्रे दीर्घात् परः प्लुतोऽपि निर्दिष्ट इति व्याख्येयम् । तेन 'यियासो' इत्यादौ "गुरोरनृतः" (पा०सू०८-२-८६) इति प्लुतादाकारात्परस्य सनः सस्य षत्वं नेत्यवधेयम् । भाष्यमते तूष्मणामीषद्विवृतताभ्युपगमेन सा-

वर्ण्यप्रसक्तिरेव नास्तीति सूत्रप्रत्याख्यानात्सकलमनाविलम् ॥
इति शब्दकौस्तुभे प्रथमस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ॥४॥

---

ईदूदेद् द्विवचनं प्रगृह्यम् (पा०सू०१-१-११) ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात् । 'हरी एतौ' 'विष्णू इमौ' 'गङ्गे अमू' । "तपरकरणमसन्देहार्थम्" इति वृत्तिकाराः । अन्यथा हि यणादेशे कृते ह्रस्वस्यायं निर्देश इत्यपि सम्भाव्येत । ततश्च 'अकुर्वह्यत्र' इत्यादावतिप्रसङ्गः स्यादिति भावः । भाष्ये तु व्यक्तिः पदार्थो, भेदकाश्च गुणा इति पक्षमाश्रित्य गुणान्तरयुक्तानां दीर्घाणां सङ्ग्रहार्थं तपरकरणमित्युक्तम् । इदञ्च 'ईद्' इति प्रथमतकारस्यैव फलमित्यवधेयम् , तावतैव ऊकारेऽपि सिद्धेः ; तात्पर इति पञ्चमीसमासपक्षस्यापि स्थितत्वात् । एकारस्य त्वणत्वादेवाणुदित्सूत्रेण सवर्णग्राहकतासिद्धेः । ईदूतोः परमनण्त्वाद् गुणान्तरयुक्तसङ्ग्रहाय युक्तो यत्नः । तस्माद्भाष्यमतेऽपि ऊदेतोस्तपरकरणमसन्देहार्थमेव गुणानामभेदकत्वे त्वीदित्यपि तथेत्यभिप्रेत्यैकरूप्यं वृत्तिकृद्भिरुक्तम् । इह "तपरः" (पा०सू०-१-१-७०) इति सूत्रे पञ्चमीसमासोमाऽस्त्वित्यभिप्रेत्य ऊदिति, तथाऽतपर एवैकारो निर्दिष्ट इत्यपि सुवचम् ।

स्यादेतत् , असन्देहायापि क्रियमाणं तपरत्वं प्लुतं व्यावर्त्तयेदेव 'घटायोन्मीलितं चक्षुः पटं न हि न पश्यति' इति न्यायात् । अथायं दकारः "ऋदोरप्" (पा०सू०३-३-५७) इतिवदिति चेत् ? एवमप्येकारो गृह्णातु प्लुतम् , अण्त्वात् ; न त्वीदूतौ वाक्यापरिसमाप्तिन्यायेनानण्त्वात् । जातिपरो निर्देश इति चेत् ? तर्हि ह्रस्वेऽप्यतिप्रसक्तिः । दीर्घव्यक्तिरपि विशेषणीभूता विवक्षितेति चेत् ? कथं तर्हि प्लुतसङ्ग्रहः ? न च प्लुतव्यावृत्तिरिष्टैवेति वाच्यम् 'अग्नी ३ इति' इत्यत्र "अप्लुतवदुपस्थिते" (पा०सू०-६-१-२९) इति सूत्रेण प्लुतत्वप्रयुक्ते प्रकृतिभावे निषिद्धेऽपि प्रगृह्यत्वप्रयुक्तस्य तस्येष्यमाणत्वात् । "अप्लुतवत्" (पा०सू० ६-१-१२९) इत्यस्य तु 'देवदत्तेति' इत्यादौ चरितार्थत्वाद्वैयर्थ्यं न शङ्क्यम् । तथा च षाष्ठं वार्त्तिकम्—"वद्वचनं प्लुतकार्यप्रतिषेधार्थं प्लुतप्रतिषेधे हि प्रगृह्यप्लुतप्रतिषेधप्रसङ्गोऽन्येन विहितत्वात्" इति । अत्राह भाष्यकारः—"यथोद्देशं संज्ञापरिभाषम्" (पा०भा०२) इत्याश्रयणात् प्रगृह्यसंज्ञां प्रति प्लुतोऽसिद्धः । तथाच द्विमात्रत्वबुद्धेरप्रतिघातात् सिद्धा संज्ञा । कार्यकालपक्षे परं प्रगृह्यसंज्ञाया अपि "अणोऽप्रगृह्यस्य" (पा० सू०८-४-५७) इत्येतद्देशतया, तां प्रति प्लुतस्य सिद्धत्वेनाऽनुनासिकः प्रवर्त्ततैवेति स्यादेव दोषः । एतेन 'अग्नी ३ इति' इत्यादौ प्रकृतिभावो

ऽपि व्याख्यातः, "प्लुतप्रगृह्या अचि" (पा०सू०६-१-१२५) इति ज्ञापकात्स्वरसन्धिषु प्लुतस्य सिद्धत्वेऽपि संज्ञां प्रत्यसिद्धत्वानपायात्, यथोद्देशपक्ष एवेहाश्रीयते इत्युक्तत्वात्। वस्तुतस्त्वनुनासिकप्रवृत्तिभयेनैवेह यथोद्देशपक्षाश्रयणम्। प्रकृतिभावस्तु कार्य्यकालपक्षेऽपि सूपपादः। न च प्रगृह्यः प्रकृत्येत्यनेनैकवाक्यतापन्नां संज्ञां प्रति प्लुतस्य सिद्धतया त्रिमात्रस्य संज्ञा दुरुपपादेति वाच्यम्, प्लुतस्य सिद्धतायां बीजाभावात्। यत्तूक्तं प्लुतः प्रकृत्येत्येतदेव ज्ञापकमिति। तन्न, प्लुतशब्देन तत्स्थानिनो लक्षणया सर्वसामञ्जस्यात्। न चैवं लक्षणैव दोष इति वाच्यम्, श्रुतार्थापत्तिमूलकवाक्यान्तरकल्पनापेक्षया लक्षणाया एवाभ्यर्हितत्वात्। अस्तु वा विशेषापेक्षं ज्ञापकम्। सिद्धः प्लुतः प्लुतत्वप्रयुक्तं प्रकृतिभाव इति, न तु प्रगृह्यत्वप्रयुक्तेऽपि। तस्मात्कार्य्यकालपक्षमाश्रित्य प्रकृतिभावस्य समर्थयितुं शक्यत्वेऽप्यनुनासिकप्रवृत्तिवारणायैवेह यथोद्देशपक्षाश्रयणमिति स्थितम्।

अत्र हरदत्तः—यद्यपि संज्ञायामसिद्धः प्लुतस्तथाप्यनुनासिकपर्युदासे सिद्ध एव। ततश्च यस्यानेन सञ्ज्ञाकृता द्विमात्रस्य न सोऽनुनासिकविधौ स्थानी किन्तु त्रिमात्रः। न च स्थानिवद्भावात्तस्यापि प्रगृह्यत्वम्, अल्विधित्वात्। किञ्चावश्यं "सिद्धः प्लुतः स्वरसन्धिषु" इत्याश्रयणीयम्। 'दण्ड आढकम्' इति प्लुतस्य दीर्घेण निवृत्तिर्यथा स्यात्। अत एव 'सुश्लोका ३ इति, सुश्लोकेति' इत्यत्र गुणो भवन् प्लुतमेव निवर्त्तयति न तु स्थानिनम्। अन्यथा ह्यादेशरूपे प्लुतः श्रूयेत तदिह यथोद्देशेऽपि संज्ञापरिभाषे कथमिवेष्टसिद्धिः, कथं वा ग्रन्थेषु न पूर्वापरविरोध इति विपश्चितः प्रष्टव्या इति?

अत्राहुः—यद्यपि द्विमात्रस्त्रिमात्रेणापहृतस्तथापि "पूर्वत्रासिद्धम्" (पा०सू०८-२-१) इति शास्त्रासिद्धत्वबोधनात्त्रिमात्रेऽपि द्विमात्र एवायमिति बुद्ध्या प्रगृह्यसंज्ञा क्रियते। अत एव 'अमुना' इत्यत्र मुत्वे कृते तदुपजीवनेन नाभावे च कृते "सुपि च" (पा०सू०७-३-१०२) इति दीर्घो मुशब्द एव दशब्दोऽयमिति बुद्ध्या प्राप्नोति तत्परिहाराय तन्त्रावृत्त्याद्याश्रयणेन नाभावे कर्त्तव्ये कृते च सति मुभावो नासिद्ध इत्यष्टमे व्याख्यातम्। कृन्मेजन्तसूत्रे च सन्निपातपरिभाषया समाहितम्। न त्विह द्विमात्रे कृतां संज्ञां स्थानिवद्भावेन त्रिमात्रे आनयामः, येन "अनल्विधौ" (पा०सू०१-१-५६) इति निषेधः शङ्क्येत। न हि रजतभ्रमप्रयुक्ता प्रवृत्तिं शुक्तिं न गोचरयतीति युक्तम्। एतावानेव परं विशेषः—

रजतभ्रमोऽनाहार्यः प्रवर्त्तकः, इह तु शास्त्रप्रामाण्यादाहार्यारोपोऽपि न-त्तच्छास्त्रप्रवृत्तावप्रवृत्तौ च नियामक इति। तदेतत्कैय्यटेनैव स्फुटीकृतम्। यदाह शास्त्रासिद्धत्वाश्रयणाच्च प्लुतबुद्धावसत्यां प्रगृह्यत्वे विधीयमाने द्विमात्रत्वबुद्धिः प्रवर्त्तते। तथा च वक्ष्यति—"असिद्धवचनमुत्सर्गलक्षण-भावार्थमादेशलक्षणप्रतिषेधार्थं च" इति। "षत्वतुकोरसिद्धः" (पा०सू०६-१-८६) इत्येतत्सूत्रस्थं वार्त्तिकमिदम्। उत्सृज्यते निवर्त्यते आदेशेनेत्युत्स-र्गः स्थानी, स लक्षणं निमित्तं यस्य कार्यस्य तुगादेस्तस्य प्रवृत्त्यर्थमि-त्यर्थः। तथा चैकरूप्यार्थं सर्वत्र शास्त्रासिद्धत्वमेवेति भावः। एतेन य-स्यानेन संज्ञा कृता न सोऽनुनासिकविधौ स्थानीति प्रथमदूषणमु-द्धृतम्। यदपि 'दण्डाढकं' "सुश्लोकेति" इत्यादावादेशः प्लुतः श्रूयेने-ति। तदपि न, उक्तरीत्या तत्राप्यादेशेन प्लुतस्यैव निवृत्तेः। प्लुतो मयाऽपह्रियते इति बुद्धिः परं तस्य नास्तीत्यन्यदेतत्।

यत्तु षष्ठे भाष्यकारो वक्ष्यति—"सिद्धः प्लुतः स्वरसन्धिषु" इति, तत्त्विहानुनासिकपर्य्युदासानुरोधाद्यथोद्देशपक्ष एवाश्रयणीय इति स्थि-ते स्वरसन्धिसामान्यापेक्षज्ञापकाश्रयणेऽपि न दोष इत्याशयेन, न तु सामान्यापेक्षतायामेव किञ्चिदाग्रहे बीजमस्तीति दिक्।

ननूदाहरणेष्वीदादिकमेव द्विवचनं न तु तदन्तमिति चेत्?, व्यप-देशिवद्भावेन तदन्तत्वात्। नन्वीदूदन्तं द्विवचनान्तमित्येव कथं न व्याख्यातम्? एवं हि सति व्यपदेशिवद्भावो नाश्रयणीय इति चेत्? न, 'कुमार्योरगारं कुमार्यगारं' 'वध्वोरगारं वध्वगारम्' इत्यत्र प्रत्ययलक्ष-णेन द्विवचनान्तेऽतिव्याप्तेः "संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति" (प०भा०२७) इति "सुप्तिङन्तं पदम्" (पा०सू०१-४-१४) इत्यत्रान्तग्र-हणेन ज्ञापितत्वाच्च। एतेनेदाद्यन्तं यद् द्विवचनं तदन्तं प्रगृह्यं, कुमा-र्य्यगारादौ तु सकारान्तं द्विवचनं न त्वीदाद्यन्तमिति परास्तम्, संज्ञा-विधौ प्रत्ययग्रहणे तदन्ताग्रहणात्। यत्त्वस्मिन्पक्षे दूषणान्तरमुक्तम्-'अशुक्ले शुक्ले समपद्येतां शुक्लयास्तां वस्त्रे' इत्यत्र शब्दान्तरप्राप्त्या ऽनि-त्यं लुकं बाधित्वा परत्वाच्च्वीभावे कृते तस्य लुकि प्रत्ययलक्षणेन शुक्लीत्यस्य प्रगृह्यता स्यादिति। तन्न, "अन्तरङ्गानपि विधीन् बहि-रङ्गो लुग्बाधते" (प०भा०५२) इति परिभाषयौकारस्यैव लोपात्, त-स्य चेदाद्यन्तत्वविरहात्। अस्तु तर्हि ईदादि विशेष्यं, तथा च द्विवच-नसंज्ञं ईदादि प्रगृह्यमित्यर्थ इति चेत्? न, 'गङ्गे' इत्यादेः सिद्धावपि 'दृश्येते' इत्याद्यसिद्धेः। द्विवचनावयवो ह्ययमेकारो न तु द्विवचनम्। किञ्च प्रगृह्यमित्यस्य सन्निहितत्वाद् द्विवचनमेव संज्ञि न त्वीदादिः,

विप्रकृष्टत्वात् । तस्माद्यथाऽयाख्यानमेव मनोरमम् ।

अत्र वृत्तिकाराः–"मणीवादीनां प्रतिषेधो वक्तव्यः" इति पठित्वा 'मणीव' 'रोदसीव' 'दम्पतीव' 'जम्पतीव' इत्युदाजह्रुः । मुनित्रयानुक्तत्वादप्रमाणमिदमिति कैयटादयः । एवं वदद्भिः समानन्यायतयाऽन्येषां मुनित्रयानुक्तानां वृत्तिकृन्मात्रोक्तानां तुरीयस्येष्टिः, शंसिदुहिगुहिभ्यो वा, क्रमेके छन्दसि, भाषायां च अङ्गगात्रकण्ठेभ्यस्त्विष्यत इत्यादीनामनादर्त्तव्यतोक्ता । मणीवोष्ट्रस्य लम्बेते इति तु इवार्थकेन वाशब्देन निर्वाह्यमित्याहुः । न्यासकारस्तु "सम्बुद्धौ शाकल्यस्येतौ" (पा०सू०१-१-१६) इति शाकल्यग्रहणस्य सिंहावलोकितन्यायेनेह सम्बन्धाद्व्यवस्थितविभाषाश्रयणाच्चेदं लभ्यते इत्याह । केचित्त्विवार्थेयं वशब्दः प्रयुक्तो भीमो भीमसेन इतिवत् । 'कादम्बखण्डितदलानिव पङ्कजानि' इत्यादिवच्चेत्याहुः । वस्तुतस्तु "वद्वा यथा तथैवैवं साम्ये" (अ०को०३-४-९) इत्यमरग्रन्थे ववेति पाठमाश्रित्य "शात्रवं व वपुर्यशः" (र०वं०४-४२) इति कालिदासप्रयोगस्य तद्व्याख्यातृभिरुदाहरणात्सर्वं सुस्थम् । युक्तश्चायमेव पाठः प्रातिपदिकप्रक्रमे तद्धितस्य वतेरननुगुणत्वात् । एतेन—

> स्फुटोत्पलाभ्यामलिदम्पतीव
> विलोचनाभ्यां कुचकुड्मलाशया ।
> निपत्य विन्दू हृदि कज्जलाविलौ
> मणीव नीलौ तरलौ विरेजतुः ॥ (नै०)

इति श्रीहर्षप्रयोगोऽपि गतार्थः ।

अदसो मात् (पा०सू०१-१-१२) । अस्मात्परावीदूतौ प्रगृह्यौ स्तः । अमी ईशाः । रामकृष्णावमू आसाते । न चामू इत्युदाहरणं पूर्वसूत्रेण गतार्थमिति वाच्यम्, तस्मिन् कर्त्तव्ये मुत्वस्यासिद्धत्वात् । "अदसो मात्" (पा०सू०१-१-१२) इति सूत्रं प्रति तु नासिद्धत्वम्, आरम्भसामर्थ्यात् । तथा च वार्त्तिकम्–"आश्रयात्सिद्धत्वं च यथा रोरुत्वे" इति । पुंवद्वचनमेवोदाहरणं स्त्रीनपुंसकयोर्द्विवचने तु मुत्वस्यासिद्धत्वेऽप्येकारान्तत्वात्पूर्वेणैव सिद्धा संज्ञा । ततश्च प्रकृतिभावोऽनुनासिकपर्युदासश्च सिद्ध एवेत्यवधेयम् ।

यत्तु हरदत्तेनोक्तम् "अणोऽप्रगृह्यस्य" (पा०सू०८-४-५७) इत्यत्रोपस्थितेन पूर्वसूत्रेण संज्ञायां क्रियमाणायां मुत्वस्य सिद्धत्वाल्लिङ्गत्रयेपि द्विवचनेऽनुनासिकपर्युदासः पूर्वेणैव सिद्धः । एतत्सूत्रारम्भस्त्वद्विवचनार्थः, पुंसि द्विवचने प्रकृतिभावार्थश्चेति । तच्चिन्त्यम्, प्लुतसंग्रहानुरोधेन पूर्वसूत्रे यथोद्देशपक्षस्यैव स्थापितत्वात् । तस्मात् पुंसि द्वि-

वचनेऽनुनासिकपर्युदासोऽप्येतत्सूत्रस्य फलं न तु प्रकृतिभावमात्रमित्यवधेयम्।

अथापि कथञ्चिद्धरदत्तोक्तिस्समर्थयितव्येत्याग्रहस्तर्हि इत्थं समर्थनीया—पूर्वसूत्रे कार्यकालपक्ष एवास्तु। न चैवं प्लुतस्यानुनासिकपर्युदासो न स्यादिति वाच्यम् 'इ ई ३ त्' 'ऊ ऊ ३ त्' इति दीर्घात्परभागे प्लुतस्यापि प्रश्लिष्टनिर्देशात्। एकारस्त्वणत्वादेव प्लुतं ग्रहीष्यति। न च तादपि परस्तपर इति तत्कालग्रहणापत्तिः "ऋदोरप्" (पा०सू०३-३-५७) इतिवदृकार एवायमित्याशयात्। युक्तश्चैतत्, यथोद्देशपक्षे प्लुतात् प्रागेव संज्ञाप्रवृत्तौ सत्यां ततः प्लुते कृते तमेव द्विमात्रत्वेन पश्यन्त्या अपि संज्ञायाः पुनः प्रवृत्तौ बीजाभावात्। नाभावस्तु मुभावात्प्रागप्राप्तस्ततो मुत्वनिमित्तकं नाभावमाश्रित्य मुभावे दशब्दोऽयमिति बुद्ध्या प्राप्नुवन् दीर्घः प्रतिविधीयते इत्युचितम्। नत्वसौ प्लुतात् प्राक् प्रगृह्यसंज्ञावन्मुभावात् प्रागेव प्रवृत्तो येन पुनर्न प्रवर्त्तेत। एतेन पूर्वसूत्रस्थहरदत्तग्रन्थोऽप्युज्जीवित इति यावद्बाधं साधु। भाष्यकैयटयोस्त्वयं भावः— प्लुतात् प्राक् प्राप्ताऽपि प्रगृह्यसंज्ञा फलाभावान्न क्रियते। न च प्लुतेऽनुनासिकप्रवृत्तिरेव फलमस्त्विति वाच्यम्, संज्ञाया अप्रवृत्तावपि तल्लाभात्, प्रगृह्यत्वप्रयुक्तपर्युदासस्यैव विधिस्पृष्टस्य तत्फलत्वौचित्याच्चेति। 'सुश्लोकेति' इत्यादावप्यन्तरङ्गत्वात् प्लुतः 'अन्तरङ्गश्च बलीयः' (प०भा०३८) इति न्यायात्।

प्रकृतमनुसरामः—नन्वारभ्यमाणेऽप्यस्मिन् सूत्रे पूर्वसूत्रेणैकरूप्यार्थं यथोद्देशपक्ष एवाश्रयणीयः। तथाच रुत्वस्योत्वं प्रतीव प्रगृह्यसंज्ञां प्रत्येव मुत्वमीत्वयोः सिद्धत्वं स्यात्, न त्वयादीन् प्रत्यपि। ततश्च 'अमी आसते' इत्यत्रायादेशप्रसङ्गः, 'अमू आसाते' इत्यत्र पुंस्यावादेशः, 'अमी अत्र' इत्यत्र "एङः पदान्तादति" (पा०सू०६-१-१०९) इत्येकादेशप्रसङ्गश्च। न च संज्ञां प्रत्येव सिद्धत्वे वचनानर्थक्यं स्यादिति वाच्यम्, अनुनासिकपर्युदासेन चरितार्थत्वात्।

अत्रोच्यते—यद्यनुनासिकपर्युदासमात्रं प्रयोजनं स्यात्तर्हि संज्ञासूत्रं न प्रणयेत्। "अणोऽप्रगृह्यस्यानुनासिकः" "अदसो न" इत्येव ब्रूयात्। 'असौ' 'अमुके' 'अमुकाभ्याम्' इत्यादौ तु सिद्धान्तेऽपि न भवत्यनुनासिकः, अनण्त्वादनवसानत्वाच्च। अतस्तत्र माद्ग्रहणमीदूद्ग्रहणं वा न कर्त्तव्यम्। न चैवं 'हे अमुक' इत्यत्रापि निषेधापत्तिः, त्यदादीनां सम्बोधनविभक्तिविरहस्यौत्सर्गिकत्वात्। अतः संज्ञारम्भसामर्थ्यात्प्रकृतिभावार्थत्वमप्यस्य विज्ञायते। तद्बलाच्चायादिविरहोऽपि सिद्ध्यति, प्रकृतिभावस्या-

पवादरूपतया "उपसञ्जातनिमित्तोऽप्युत्सर्ग उपजनिष्यमाणनिमित्तेनाप्यपवादेन बाध्यते" (प०भा०६५) इति परिभाषावताराच्च। यत्तु संज्ञारम्भसामर्थ्यादयादीन्संज्ञां च प्रति मुत्वमीत्वयोः सिद्धत्वज्ञापनादयादीन् बाधित्वा परत्वान्मुत्वमीत्वे इति तन्न, अयाद्यभावस्य ज्ञापने लाघवात्। अर्थापत्तेर्हि साक्षादुपपादकविषयतौत्सर्गिकी। किञ्च मुत्वमीत्वयोरेकपदाश्रयत्वेन बलीयस्त्वम्, 'अन्तरङ्गम्बलीयः' (प०भा०३८) इति न्यायात्। तत्कथं विप्रतिषेधोपन्यासः? "नाजानन्तर्य्ये" (प०भा०५१) इति निषेधस्तु,"असिद्धं बहिरङ्गम्"(प०भा०५०) इत्यस्यैव न तूदाहृतपरिभाषायाः। यद्यपि "असिद्धं बहिरङ्गमन्तरङ्गे" (प०भा०५०) इत्यनयैव गतार्थत्वादन्तरङ्गम्बलवदिति पृथक् परिभाषा न कर्त्तव्येति "विप्रतिषेधे परम्" (पा०सू०१-४-२) इति सूत्रे भाष्यकृद्वक्ष्यति। तथाऽप्यभ्युच्चयमात्रं तत्, सापवादनिरपवादत्वाभ्यां फले विशेषात्। 'वृक्ष इह' इत्यत्र हि सप्तम्येकवचनेन सह गुणोऽन्तरङ्गः। सवर्णदीर्घत्वं तु बहिरङ्गम्। न चेहासिद्धपरिभाषया गुणो लभ्यते "नाजानन्तर्य्ये" (प०भा०५१) इति निषेधात्। अत एव "अचः परस्मिन्" (पा०सू०१-१-५७) इति सूत्रे भाष्यकृद्वक्ष्यति—

आरभ्यमाणे नित्योऽसौ परश्चासौ व्यवस्थया।
युगपत् सम्भवो नास्ति बहिरङ्गेण सिध्यति॥ इति॥

एतच्च तत्रैव स्फुटीकरिष्यते। अत एवोक्तं वार्त्तिककृता,—"शचङ्न्तस्यान्तरङ्गलक्षणत्वात्" इति 'धियति' 'अदुद्रुवत्' इत्यादि च तत्रोदाहृतम्। ज्ञापकं चात्र "ओमाङोश्च" (पा०सू०६-१-९५) इत्याङ्ग्रहणम्। तद्धि 'खट्वा-आ-ऊढा' इत्यत्र परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गयोः कार्यमन्तरङ्गमित्यन्तरङ्गत्वाद् गुणे कृते वृद्धिप्राप्तौ सत्यां पररूपं यथा स्यादिति क्रियते। एतच्च "सम्प्रसारणाच्च" (पा०सू०६-१-१०८) इति सूत्रे भाष्ये स्पष्टम्। कथं तर्हि वार्तिककृतोक्तं विप्रतिषेधाद्वेति? सत्यम्, अत एवापरितोषाद्भाष्यकारेणाथवेति पक्षान्तरमाश्रितमिति दिक्।

मात् किम्? अमुकेऽत्र। नन्विह सूत्रे ईदूतावेवानुवर्त्तेतौ न त्वेकारः। सत्यम, सति माद्ग्रहणे एकारो नानुवर्त्तते अदसो मात् परस्य तस्यासम्भवात्। अन्यथा त्वनुवर्त्तेत। एकदेशानुवृत्तिस्तु दुर्ज्ञाना। तस्मादेकारानुवृत्तितात्पर्यग्राहकफलकं माद्ग्रहणमिति स्थितम्। अत्रेदं चिन्त्यम्। "ईदूतौ सप्तम्यर्थे प्रगृह्यौ, अदसः, एच्च द्विवचनम्" इत्येव कुतो न सूत्रितम्? एवं हि पूर्वसूत्रस्थमीदूद्ग्रहणं प्रकृतसूत्रे माद्ग्रहणं च न कर्त्तव्यमिति महल्लाघवम्। एकदेशानुवृत्तिश्च नाश्रयणीया भवतीति॥

शे (पा०सू०१-१-१३)। अयं प्रगृह्यः स्यात्। अस्मे इन्द्राबृहस्पती।

चतुर्थीबहुवचनस्य स्थाने "सुपां सुलुक्" (पा०सू०७-१-३९) इति सूत्रेण शे आदेशः। शित्वात् सर्वादेशः। "शेषे लोपः" (पा०सू०७-२-९०) न युष्मे वाजबन्धवः। युष्मास्वित्यर्थः। अत्र पदपाठकाले 'युष्मे' इत्युदाहरणं बोध्यम्। संहितायान्त्वच्परत्वाभावेन सत्यसति वा प्रगृह्यत्वे विशेषालाभात्। एवं 'त्वे रायः सुदुघास्ते ह्यश्वाः' इत्यादीनामपि पदपाठकाले उदाहरणत्वं बोध्यम्। "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् (प०भा०११४)। तेनेह न—'काशे' 'कुशे' 'वंशे' 'हरिशे' 'बभ्रुशे'। हरि बभ्रु आभ्यां लोमादित्वाच्छप्रत्ययः। ततः सप्तम्येकवचनम्॥

निपात एकाजनाङ् (पा०सू०१-१-१४)। एकोऽज् निपात आङ्भिन्नः प्रगृह्यः स्यात्। अ निषेधाधिक्षेपयोः, 'अ अवद्यम्'। इ विस्मये, 'इ इन्द्रः' उ जुगुप्सासंतापान्वर्थाप्यर्थेषु 'उ उमेशः'। एकाजिति कर्मधारयः वर्तिपदार्थप्राधान्येनान्तरङ्गत्वात् "व्याहरति मृगः" (पा०सू०१-३-८३) इत्यादिनिर्देशाच्च। तेनेह—'प्रेदं ब्रह्मवृत्रतूर्येष्वाविथ' 'प्रेद्धः' इत्यादि।

स्यादेतत्, यद्ययं कर्मधारयस्तर्हि एकग्रहणं व्यर्थम्। निपातो योऽच् इत्येतावतैवाभिमतसिद्धेः। न च विपरीतविशेषणविशेष्यभावेनाजन्तो यो निपात इत्यर्थः स्याद्विशेषणेन तदन्तविधेरिति वाच्यम्, तथासति व्यावर्त्यालाभेन विशेषणवैयर्थ्यापत्तेः। न च हलन्तं व्यावर्त्यम्, तस्य सञ्ज्ञायां सत्यामपि बाधकाभावात्। न च 'पुरोऽस्ति' इत्यादौ हलन्तस्य संज्ञायां सत्यां प्रकृतिभावाद्रो रुत्वं न स्यादिति वाच्यम्, प्रगृह्यसञ्ज्ञां प्रति रुत्वस्यासिद्धतया दोषाभावात्। न च सान्तस्य कृता प्रगृह्यसञ्ज्ञा एकदेशविकृतस्यानन्यतया रेफान्तस्यापि स्यादेवेति प्रकृतिभावप्रसङ्गस्तदवस्थ एवेति वाच्यम्, प्रगृह्यसञ्ज्ञां प्रतीव प्रकृतिभावं प्रत्यपि रुत्वस्यासिद्धत्वात्। सकारान्तस्य तु न किञ्चिदपि सिद्धकाण्डस्थं प्राप्नोति यत्प्रकृतिभावेन व्यावर्त्येत। तस्मादचा निपातस्य विशेषणे अज्ग्रहणं व्यर्थमेव स्यादिति सुष्ठूक्तम्। नन्वजन्तस्यैव यथा स्यादज्मात्रस्य मा भूदित्येवमर्थं विशेषणं किन्न स्यादिति चेत्? न, व्यपदेशिवद्भावेन तस्याप्यजन्तत्वानपायात्। विशेषणसामर्थ्याद्व्यपदेशिवद्भावो न प्रवर्त्तते इति चेत्? न, तदन्तविधिपरित्यागेनापि तत्सार्थक्यस्य सुवचत्वात्। तथाप्यन्यतरपरित्यागे आवश्यकं विनिगमकं किमिति चेदाङ्ग्रहणमेवेत्यवेहि। तद्धि व्यपदेशिवद्भावमात्रबाधे व्यर्थं स्यात्' तस्मादची विशेषणत्वेनाङ्ग्रहणाज्ज्ञापकात्तदन्तविधिर्न। अचो विशेष्यत्वे तु सुतरां तदन्तविधिरिति। उभयथाऽप्येकग्रहणं व्यर्थमेवेति स्थितम्। नन्वच्समुदायनिवृत्त्यर्थमेकग्रहणमस्तु। 'अहउ अपेहि' इति

समुदायस्यैव संज्ञा स्यान्नावयवानामेकाज्द्विर्वचनन्यायादिति चरमस्यैव प्रकृतिभावः स्यान्न तु पूर्वयोरिति । मैवम्, अजित्येकत्वस्य विवक्षयैव समुदायनिरासस्सम्भवात् । अत्राह भाष्यकारः—अच्समुदायग्रहणशङ्कानिरासार्थमेकग्रहणं कुर्वन् ज्ञापयति वर्णग्रहणेषु व्यक्तिसङ्ख्या न विवक्ष्यते किन्तु जातिरेव निर्दिश्यते इति । तेन "दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धम्" इति वार्तिककृता वक्ष्यमाणं सूत्रेणैव ज्ञापितं भवति । दम्भेः सिद्धमित्यन्वयः । अत्र हेतुर्हल्ग्रहणस्य जातिवाचकत्वादिति । तेन दम्भेः सनि कृते "सनीवन्त" (पा०सू०७-२-४९) इति विकल्पादिडभावे "दम्भ इच्च" (पा०सू-७-४-५६) इतीदीतोः कृतयोः "अत्र लोपोऽभ्यासस्य" (पा०सू०७-४-५८) इत्यभ्यासलोपे "हलन्ताच्च" (पा०सू०१-२-१०) इति सनः कित्त्वान्नलोपे भष्भावे च कृते 'धिप्सति' 'धीप्सति' इति रूपद्वयं सिद्ध्यति । हल्ग्रहणस्य व्यक्तिपरत्वे तु योऽत्रेकः समीपो हल् नकारो न ततः परः सन्, यस्माच्च परः सन् भकारान्नासाविकः समीप इति कित्वं न स्यात् । तथा "तृंहू हिंसायां" (तु०प०१२१५) तुदादिः, ऊदित्वादिड् वा तितृंहिषति तितृक्षतीति स्यादिति दिक् ।

स्यादेतत्, 'अइउ अपेहि' इत्यत्र एकाज्द्विर्वचनन्यायोपन्यासो न युक्तः समुदायसंज्ञयाऽवयवानामननुग्रहात् । अत एव हि 'निर्ग्लायात्' 'निर्ग्लेयात्' इत्यादौ बहूनां सन्निपाते द्वयोः संज्ञा स्वीकृता । नापि निपातग्रहणेन ग्रहणमेकैकस्मिन्निपाते संज्ञाविधानसम्भवात् । सत्यम्, एकाज्समुदायग्रहणशङ्कामात्रं तु स्यादेव । तन्निरासायैव क्रियमाणमेकग्रहणं प्रागुक्तमर्थं ज्ञापयति । वस्तुतस्त्वपृक्तसंज्ञायामेकग्रहणमुक्तार्थे ज्ञापकमित्याश्रित्य प्रकृतसूत्रे एकग्रहणस्य परित्याग एव ज्यायान् । निपात इति किम्? चकारात्र । तथा अततेर्डः अः, 'हे अ आगच्छ' इत्यपि प्रत्युदाहरणम् । आङनाङोर्व्यवस्थामाह भाष्यकारः—

ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥ इति ॥

इह एतच्छब्देन पूर्वमनिर्दिष्टत्वादेतमित्यस्यैनादेशो न कृत इति काश्चित् । तन्न,—अन्वादेशश्च कथितानुकथनमात्रं न त्विदमेव कथितस्येदमाऽनुकथनमिति भाष्यकृता वक्ष्यमाणत्वात् । तस्माद्यत् किञ्चिद्विधाय वाक्यान्तरेणान्यदुपदिश्यते सोऽन्वादेशः । इह तु ईषदर्थादौ यो वर्त्तते इति वृत्तिर्न विधेया, किन्तु परिचायकतामात्रेणोपात्तः । अतो नैनादेशः । एतेन—

नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय ।

इत्यपि व्याख्यातम् । भीरुत्वस्य विधेयत्वाविवक्षणात् सिद्धस्यैव हेतुत्वेनानुवादादिति दिक् ।

ईषदर्थे-आ उष्णम् ओष्णम् । आङीषदर्थे इति "कुगति" (पा०सू० २-२-१८) इति सूत्रे वार्त्तिककृता ङिद्व्यवहृतः । क्रियायोगे-आ इतः एतः । प्रादिषु ङित्पठितः । मर्यादाऽभिविधौ चेति समाहारद्वन्द्वे आगमशासनस्यानित्यत्वान्नुमभावः । मर्यादया सहिते अभिविधाविति मध्यमपदलोपी वा समासः । मर्यादायाम्-आ उदकान्तात् ओदकान्तात् । अभिविधौ-आ अहिच्छत्रात् आहिच्छत्रात् । विना तेनेति मर्यादा,सह तेनेत्याभिविधिः "आङ् मर्यादाभिविध्योः" (पा०सू०२-१-१३) इति च ङिन्निर्दिष्टः । पूर्वप्रक्रान्तस्य वाक्यार्थस्यान्यथात्वद्योतनाय आकारः प्रयुज्यते-'आ एवं नु मन्यसे' । नैवं पूर्वममंस्थाः, संप्रत्येवं मन्यसे इत्यर्थः । वाक्यारम्भसूचनाय आकार इत्यपरे । तथा स्मृतेः सूचक आकारः प्रयुज्यते । ततः स्मृतोऽर्थो निर्दिश्यते—आ एवङ्किल तदिति ।

अत्र च वाक्यस्मरणयोरङिदित्यत्रैव तात्पर्यम् । अतो वाक्यस्मरणाभ्यामन्यत्रेषदर्थाद्यभावेऽपि ङित्वं बोध्यम् । तेन "अभिन्यस्य रजसोयदभ्रआँ अपो वृणाना" इत्यत्र सप्तम्यर्थवृत्तेरप्याकारस्य ङित्वेन "आङोऽनुनासिकश्छन्दसि" (पा०सू०६-१-१२६) इति प्रवर्त्तते इति षष्ठे हरदत्तादयः ।

युक्तश्चैतत् । ङिदङिद्रोरन्यतरलक्षणमात्रेणार्थादुभयविवेकलाभे तत्रापि लाघवादङिल्लक्षणे तात्पर्यमाश्रित्य भागान्तरस्यावयुत्यानुवादरूपत्वात् ।

ओत् (पा०सू०१-१-१५) । ओदन्तो निपातः प्रगृह्यसंज्ञः स्यात् । आहो इति, उताहो इति । निपात इति किम्? देवोऽसि । वषट् ते विष्णवास आ । वायवायाहि । विष्णोव । यत्तु 'गवित्ययमाह' इत्येतदेव निपातग्रहणस्य व्यावर्त्यमिति । तन्न, प्रगृह्यसंज्ञायां सत्यामपि क्षत्यभावात् । न चैवं प्रकृतिभावापत्तिः, प्रकृतिभावविधौ पदान्ताधिकारात् । न चायं पदान्तो भवत्येवेति भ्रमितव्यम्, अनुकार्यानुकरणयोरभेदविवक्षयाऽर्थवत्त्वाभावेनाप्रातिपदिकत्वाद्विभक्तेरनुत्पत्तावेव तद्रूपाभ्युपगमात् । अन्यथा विभक्तिश्रवणापत्तेः । न चैवमपदस्य प्रयोगासङ्गतिरिति वाच्यम्, "अपदं न प्रयुञ्जीत" इत्युद्घोषस्य अपरिनिष्ठितं न प्रयुञ्जीतेत्येवं परत्वात्, तस्य च सुप्तिङादिविषयकतत्तद्विधिशास्त्रमूलकत्वात्, इह तूक्तरीत्या सुब्विभक्तेरप्यप्राप्त्या गो इति स्वरूपस्यैव परिनिष्ठित-

त्वात्। अत एवेह "लोपः शाकल्यस्य" (पा०सू०८-३-१९) इत्यपि न प्रवर्त्तते। कथं तर्हि पूर्वसूत्रे "शेऽर्थवत् ग्रहणात्" इति वार्त्तिके "एङः पदान्तात्" (पा०सू०-६·१-१०९) इति पूर्वरूपं कृतमिति चेत्? तत्रानुकार्यानुकरणयोर्भेदं विवक्षित्वा विभक्तिं च कृत्वा शेश्चर्थवान् शेऽर्थवानिति समासेन सुपो लुकं कृत्वा व्याख्यानात्। एतेनोत्तरसूत्रे 'सम्बुद्धाविति किम्? 'गवित्ययमाह' इत्युदाहरन्तो वृत्तिकारा अपि प्रत्युक्ताः। तस्मादिह 'देवोऽसि' इत्यादिकमेव प्रत्युदाहरणं बोध्यम्। न च "एङः पदान्तात्" (पा०सू०६-१-१०९) इत्यारम्भसामर्थ्यादेव तत्सिद्धिः, 'हरेऽव गच्छ' इत्यादौ चरितार्थत्वात्। न चैङ्ग्रहणसामर्थ्यम्। "ङसिङसोश्च" (पा० सू०६-१-११०) इत्युत्तरार्थत्वात्। उत्तरसूत्रे तु सम्बुद्धिग्रहणाभावे 'आहो इति' इत्यादावपि परत्वाद्विकल्पापत्तिः, पूर्वसूत्रस्य 'अहो ईशाः' इत्यादावुत्तरस्य तु 'विष्णो इति' इत्यादौ लब्धावकाशतया विप्रतिषेधसम्भवात्। न चेह ओदन्तस्य कार्यितयोत्तरत्र तु विशेष्यासन्निधानेन तदन्तविधिविरहादोकारमात्रस्य कार्यितया भिन्नविषयकत्वे कथं विप्रतिषेध इति वाच्यम्। 'त्रपूणाम्' इत्यादौ प्रकृतिप्रत्ययावयवयोर्नुम्नुटोरिवेहापि फलविरोधेन विषयभेदेऽपि विप्रतिषेधसम्भवात्, अर्थाधिकारपक्षे उत्तरसूत्रेऽप्योकारान्तस्य संज्ञित्वाच्च, शब्दाधिकारपक्षेऽपि "इको झल्" (पा०सू०१-२-९) इत्यत्र सनाक्षिप्तस्य धातोरिका विशेषणवदिहापि सम्बुध्याक्षिप्तायाः प्रकृतेरोकारेण विशेषणे तदन्तविधिसम्भवाच्च। तस्मात्सूत्रद्वयेऽपि 'गवित्ययमाह' इति प्रत्युदाहरणं नेति स्थितम्। प्रकृतिभावे पदान्तग्रहणं न सम्बध्यते इत्याशयेन तु वृत्तिग्रन्थो योज्यः। अस्मिंश्च पक्षे मण्डूकप्लुतिन्यायेन "इकोऽसवर्णे" (पा० सू०६-१-१२७) इत्यत्र पदान्तग्रहणं सम्बन्धनीयमेव। अन्यथा 'गौर्यौ' 'गौर्य्यः' इत्यादावतिप्रसक्तेरिति दिक्।

स्यादेतत्, निपातसमुदाया एते। आह उ आहो, उत आहो उताहो इत्यादि। ततश्चादिवद्भावात् "निपात एकाज्" (पा०सू०१-१-१४) इत्यनेनैव सिद्धा संज्ञा। न चैवम् 'आहो इति' इत्यादिषु "ऊँ" (पा०सू० १-१-१८) इत्यस्य प्रसङ्गः, निरनुबन्धकोऽयमुकारः न तूञ् इति समाधानात्। अत एव "उञः" (पा०सू०१-१-१७) इति सूत्रे ञकारोच्चारणमपि सार्थकम्। अत एव च "उञः" (पा०सू०१-१-१७) "ऊँ" (पा०सू० १-१-१८) इत्यत्र भाष्यकृतोक्तम्—"द्वावुकाराविमौ। एकोऽननुबन्धकः, अपरः सानुबन्धकः" इति। न चैवमपि आ उ ओ इत्यत्राऽऽङनाङोरेकादेशस्यानाङिति प्रतिषेधे प्राप्ते प्रतिप्रसवायेदमिति वाच्यम्, अ-

नाङित्यस्य पर्युदासाश्रयणेनाऽऽङनाङोरेकादेशस्यादिवद्भावादनाङ्ग्रहणेन ग्रहणात्। प्रसज्यप्रतिषेधे ह्यसमर्थसमासो वाक्यभेदश्च स्यात्। भाष्येऽपि प्रतिषिद्धार्थमेतदित्युक्तिरभ्युच्चयमात्रम्। कथमन्यथाऽनुपदमेव 'अदोभवत्' इत्यत्रातिप्रसङ्गमाशङ्क्य प्रतिपदोक्तस्यैवौकारस्य ग्रहणमिति समादधीत। तस्मादिदं सूत्रं विनाऽपि सर्वं लक्ष्यं निर्व्यूढमेवेति चेत्?

अत्रोच्यते—आहो उताहो इत्यादयो न निपातसमुदायाः, किन्त्वखण्डा एव। एतच्च एवत्सूत्रबलात्प्रतिपदोक्तस्यौकारस्य ग्रहणमिति भाष्यबलाच्चाध्यवसीयते। तेन 'आम् आहो देवदत्त' इत्यत्र "आम एकान्तरमामन्त्रितम्" (पा०सू०८-१-५५) इति निघातप्रतिषेधः सिद्धः। अत एव पदकारैरपि "ओषुवर्त्तमरुत" इत्यादौ 'ओ' इत्याद्येकपद्येनैव पठ्यते। तदेवं सूत्रकारभाष्यकारपदकाराणां सम्वाद एवेति स्थिते निपातसमुदाय एवायमित्याश्रित्यैतत्सूत्रं प्रत्याचक्षाणाः परास्ताः।

स्यादेतत्, अनदोऽदः समभवदित्यत्रातिप्रसङ्गः, च्व्यन्तस्य निपातत्वात् "ऊर्यादिच्विडाचश्च" (पा०सू०१-४-६१) इति गतिसंज्ञाविधानेऽपि "प्राग्रीश्वरान्निपाताः" (पा०सू०१-४-५६) इत्यस्याधिकारात्। न च लक्षणप्रतिपदोक्तपरिभाषया लाक्षणिक ओकारो व्यावर्त्यत इति वाच्यम्, वर्णग्रहणेषूक्तपरिभाषाया अप्रवृत्तेः। अन्यथा "एचोऽयवायावः" (पा०सू०६-१-७८) इत्यपि 'हरये' इत्यादौ न प्रवर्त्तेत, 'चक्रे' 'चक्रिरे' इत्यादौ प्रतिपदोक्ते चारितार्थ्यात्। वर्णस्य प्राधान्ये माऽस्तु परिभाषा, विशेषणत्वे तु स्यादेवेति चेत्! न, अविशेषेणाप्यप्रवृत्तेः सूपपादत्वात्। तथा च षष्ठे वक्ष्यामः-"अभ्युपेत्यापि ब्रूमः-अगोगौः समभवद्गोऽभवदित्यादौ "गमेर्डो" (उ०सू०१-२-२३५) इत्योकारस्य प्रतिपदोक्ततयाऽतिप्रसङ्गः स्यादेव"। नन्विह गौणमुख्यन्यायेन समाधानमस्तु। तथाहि, 'संघीभवन्ति ब्राह्मणाः' 'स्वङ्गवति देवदत्तः' 'मद्भवसि त्वं' 'त्वद्भवाम्यहम्' इत्यादौ वचनपुरुषव्यवस्थानुरोधेन च्विप्रत्ययस्थले सर्वत्र प्रकृतेरेव कर्तृत्वमिति सिद्धान्तस्थितिः। तथाच प्रकृतावारोपेण वर्त्तमानाद्विकृतिवाचकाच्छब्दाच्च्वेरुत्पत्तौ च्विप्रत्ययं प्रति प्रकृतिभूतस्य वाहीकादिवृत्तेर्गोशब्दस्य गौणार्थता स्पष्टैव। अत एव 'अमहान् महान् भूतो महद्भूतश्चन्द्रमाः' इत्यादौ "आन्महतः" (पा०सू०६-३-४६) इत्यात्वं न प्रवर्त्तते इति चेत्? न, दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्। तथाहि, विशिष्टरूपोपादाने गौणमुख्यन्यायः। तस्य "अर्थवद्ग्रहणे नानर्थकस्य" (प०भा०१४) इत्येतत्परिभाषामूलकत्वात्, अर्थोपस्थितेश्च रूपविशेषग्रह-

सापेक्षत्वात् । तथा च "आन्महतः" (पा०सू०६-३-४६) इति विशिष्टरूपग्रहणेन विधीयमानमात्वं गौणे न भवतीति युक्तम् । इह तु "ओत्" (पा०सू०१-१-१५) इति वर्णपुरस्कारेण विधीयमाना प्रगृह्यसंज्ञा कथं गौणार्थवृत्तेर्न भवेत । निपातसंज्ञा तु तस्यापि मुख्यैव । अत एव संज्ञाश्वशुरस्यापत्यं-'श्वाशुरिः' इत्यत्र "राजश्वशुराद्यत्" (पा०सू०४-१-१३६) न प्रवर्त्तते । "अत इञ्" (पा०सू०४-१-९५) तु प्रवर्त्तते एव । अन्यथा इञो यतश्च तुल्ययोगक्षेमतैव स्यात् । अत एव 'गौर्वाहीको ब्रूते' 'गां वाहीकं पाठय' इत्यादौ वृद्ध्यात्वे स्त एव तयोरपि वर्णाश्रयत्वात, "गोतः" (पा०सू०७-१-९०) इति तपरत्वमोकारान्तोपलक्षणार्थमिति वक्ष्यमाणत्वात् । तथा च "औतोऽम्" (पा०सू०६-१-९३) इति सूत्रे भाष्यकृद्वक्ष्यति—"गामित्यत्र परोऽपि वृद्धिर्निरवकाशेनाऽऽत्वेन बाध्यते" इति । तत्रैव कैयटोऽपि वक्ष्यति—ओत इति सूत्रं पाठ्यम् । ओकारान्तोपलक्षणतया वा "गोत" (पा०सू०७-१-९०) इत्येतद्व्याख्येयम्" इति । वृत्त्यादिग्रन्थेष्वप्येवमेव स्थितम् ।

यत्तु वदन्ति—मुख्यएव स्वार्थे साक्षादिमति गोशब्दो वृद्ध्यात्वे लभते । ततो वाहीकादिशब्दान्तरसन्निधानाद्गौणताप्रतीतिः । 'गोभवत्' इत्यत्र तु गौणार्थतां विना च्विरेव दुर्लभ इति वैषम्यम् । तस्मात् पदकार्येष्वयं न्यायो न प्रातिपदिककार्येष्विति स्थितमिति । तच्चिन्त्यम्, वाक्यसंस्कारपक्षे वृद्ध्यात्वप्रवृत्तितः प्रागेव गौणार्थावगतेः । यत्तु कारकाणां क्रिययैव श्रौतःसम्बन्धस्ततत एकक्रियावशीकृतानामरुणैकहायनीन्यायेन पार्ष्णिकः परस्परावच्छेदः । तथाच 'गामानय' इत्यन्वयवेलायां न गौणार्थता, किन्तु वाहीकेन सह पार्ष्णिकावच्छेदवेलायाम् । न चान्तरङ्गत्वेन प्रवृत्तः पदसंस्कारो बहिरङ्गगौणत्वप्रतीतावपि निवर्त्तते इति । तदपि न, तावताऽपि 'ब्रूते' 'पाठय' इति क्रियान्वयायैव गौणताया आश्रयणीयत्वात, कटोऽपि कर्म, भीष्मादयोऽपीति पक्षे कथञ्चिदुक्तिसम्भवेऽपि सामानाधिकरण्याद्भीष्मादेर्द्वितीयेत्येवं रूपे भाष्योक्तपक्षान्तरे त्वदुक्तन्यायानवताराच्च, 'श्वाशुरिः' इत्यत्रेञोप्यभावापत्तेश्च, शब्दप्रयोक्ता वाहीकनिष्ठस्यैव कर्मत्वादेर्विवक्षितत्वाच्च । तस्माद्वर्णाश्रयत्वाद् वृद्ध्यात्वे इत्येव तत्त्वं, न तु प्रातिपदिककार्य्यत्वादिति । अत एव च "एकाच्च प्राचाम्" (पा०सू०५-३-९४) इत्यादौ प्रातिपदिककार्यत्वेऽपि न स्मायादयः, विशिष्टरूपपुरस्कारेणैव सर्वनामसंज्ञाविधानात् । "अभिव्यक्तपदार्था ये" इत्यपि गौणमुख्यन्यायसिद्धार्थकथनपरं, प्रसिद्धाप्रसिद्धत्वे एव हि मुख्यत्वगौणत्वे इत्यन्यत्र विस्तरः ।

अत एव सर्वादिसूत्रे "संज्ञोपसर्जनप्रतिषेधः" इति वार्त्तिकं प्रत्याचक्षाणो हरदत्त आह—"संज्ञाप्रतिषेधस्तावन्न वक्तव्यः अभिव्यक्तपदार्था ये इत्येव सिद्धत्वात्" इति। यत्तु तत्र कैयटो वक्ष्यति—"प्रसिद्ध्यप्रसिद्धिवशात्सम्भवन्नपि गौणमुख्यन्यायो नेहोक्तः। पदकार्येष्वयं न तु प्रातिपदिककार्येष्वित्योत्सूत्रे उक्तत्वात्" इति। तदभ्युच्चयमात्रम्, युष्मदस्मदोः स्वरूपमात्राश्रयाणां कार्याणामुपसर्जनतायामिव संज्ञायां प्रवृत्त्यापत्तेः, "युष्मद्युपपदे" (पा०सू०१-४-१०५) "अस्मद्युत्तमः" (पा० सू०१-४-१०७) इत्यादावपि तदापत्तेश्चेति दिक्।

तदेवम् 'अदोभवत्' 'गोभवत्' इत्यादौ "ओत्" (पा०सू०१-१-१५) इति प्रगृह्यसंज्ञाऽव्ययत्वादिवद् दुर्वारेति पूर्वपक्षः पर्य्यवसन्नः।

अत्रोच्यते, पूर्वसूत्रेऽनाङिति पर्युदासादाङ्सदृशाः प्रतिपदपाठिता एव निपाता गृह्यन्ते। इहाप्यर्थाधिकारेणानाङ्ग्रहणानुवृत्त्या वा तथैवेति सर्वं सुस्थम्। तथाच सर्वादिसूत्रे "अकारात्कारौ अनुपसर्जनत्वे सत्येव भवतः" इति प्रघट्टके "तदोः सः सौ" (पा०सू०७-२-१०६) इति सत्वं तद्यविशेषितत्वाद्गौणतायामपि स्यादित्याशङ्क्य "त्यदादीनामः" (पा० सू०७-२-१०२) इत्यत्र "अनुपसर्जनात्" (पा०सू०४-१-१४) इति परिभाषयाऽनुपसर्जनानामेव ग्रहणे सिद्धे तथाभूतानामेव सत्वविधावनुवर्त्तनान्न कश्चिद्दोष इति समाधत्त कैयटः।

सम्बुद्धौ शाकल्यस्येतावनार्षे (पा०सू०१-१-१६)। ऋषिर्वेदः "तदुक्तमृषिणा" इत्यादौ तथा दर्शनात्। संम्बुद्धिनिमित्तक ओकारोऽवैदिके इतौ परे प्रगृह्यो वा स्यात्। 'विष्णो इति' 'विष्णविति'। संम्बुद्धाविति किम्? गवित्ययमाहेति वृत्तिकारः। एतन्निष्कर्षश्च पूर्वसूत्रे उक्त एव। अनार्षे किम्? ब्रह्मबन्धवित्यब्रवीत्। इताविति किम्? पटोऽत्र।

उञः (पा०सू०१-१-१७)। उञ इतौ प्रगृह्यसंज्ञा वा स्यात्। 'उ इति' 'विति'।

ऊँ (पा०सू०१-१-१८)। उञ इत्यनुवर्त्तते, शाकल्यस्येति, प्रगृह्यमिति च। प्रगृह्यस्य उञ इतौ परे ऊँ आदेशो वा स्यात्। दीर्घोऽनुनासिकश्च ऊँ इति। इह यद्येको योगः स्यात् उञ ऊँ इति, तदादेशे विकल्पिते रूपद्वयमेव स्यात्—'ऊँ इति' 'उ इति'। अतो योगं विभज्य प्रगृह्यसंज्ञाऽपि विकल्पिता। एवमपि "ऊँ" (पा०सू०१-१-१८) इति द्वितीयसूत्रे यदि प्रगृह्यग्रहणं शाकल्यग्रहणं चेत्युभयमपि नानुवर्त्तेत, तदा उञ्मात्रस्य नित्यमूँभावविधानात्प्रगृह्यस्यैवाप्रगृह्यस्याप्यादेशः

स्यात्। तत्र प्रगृह्यस्यादेशे कृते स्थानिवद्भावेन प्रगृह्यत्वात् 'ऊँ इति' इति रूपं सिद्धम्। न च "अनल्विधौ" (पा०सू०१-१-५६) इति प्रतिषेधः, उञ इति समुदायरूपेणाश्रयणात्। तथा च "इट ईटि" (पा० सू०७-२-२८)इति सूत्रे इट इति समुदायरूपाश्रयणाद् 'अग्रहीत्' इत्यत्र च "ग्रहोऽलिटि" [पा०सू०७-२-३७] इति दीर्घस्य स्थानिवद्भावमाश्रित्य सिज्लोपः सिद्ध्यतीति स्थानिवत्सूत्रे वक्ष्यते। अप्रगृह्यस्य त्वादेशेऽनुनासिको यण् स्यात्। तथा चेष्टरूपत्रितयमध्ये 'ऊँ इति' इत्येकमेव सिद्धं न त्वपरं द्वयमित्यव्याप्तिः। अतिव्याप्तिश्च सानुनासिकवकारयुक्तस्यानिष्टस्यापि प्रसङ्गात्। अथ प्रगृह्यग्रहणमात्रमनुवर्त्तेत तदा प्रगृह्यस्योञो नित्यमादेशः स्यात्तश्च 'विँति' 'ऊँ इति' इति द्वे एव रूपे स्यातां, न तु 'उ इति' इति तृतीयम्। अथ शाकल्यग्रहणमात्रमनुवर्त्तेत तत उञ्मात्रस्यादेशविकल्पनाद् 'ऊँ इति' 'उ इति' इति द्वयं प्रगृह्यस्य, 'विँति' 'विति' इति द्वयमप्रगृह्यस्येति संकलनया रूपचतुष्टयं स्यात्। तत्र त्रितयस्येष्टत्वेऽपि सानुनासिकवकारयुक्तमनिष्टमापतति। तस्माच्छाकल्यग्रहणं प्रगृह्यग्रहणं चेत्युभयमनुवर्त्तेत इत्युक्तम्। इह विभक्तिविपरिणामेन प्रगृह्यस्योञ इति व्याख्यातम्। आदेशसमानाधिकरण्येन प्रगृह्यं ऊँ इत्येतदादेशो भवतीति व्याख्यानेऽपि न कश्चिद्विशेष इत्यवधेयम्।

ननु परिनिष्ठितमेव प्रयोगार्हं, परिनिष्ठितत्वं च अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम्। निहते तिङन्तादावव्याप्तिवारणायाप्रवृत्तेति। वैकल्पिकेडागमोद्देश्यतावच्छेदकाक्रान्ते 'सेद्धा' इत्यादावव्याप्तिवारणायोक्तं नित्येति। अत एव 'पच्' 'लट्' इत्यादीनामलौकिकतेति सिद्धान्तः। तथाच 'उ इति' इत्येतद्रूपं न स्यादेव। अत्र हि शाकल्यमते ऊँआदेशेन भाव्यमेव। इतरेषां मते तु प्रगृह्यत्वमेव नास्तीति चेत्? भवेदेवं यदि शाकल्यग्रहणं यथाश्रुतं स्यात्, तत्तु विकल्पमात्रतात्पर्यकम्। तथाच भाष्यम्—"शाकल्यस्य विभाषा यथा स्यात्" इति "ऊं वा शाकल्यस्य" इति च। तथाच तत्र कैय्यटः—"शाकल्यश्रुतेरेव फलं वाग्रहणेन प्रतिपादयति" इति, "स्मृत्यन्तरानुसन्धानद्वारेण विभाषा सम्पद्यते" इति च। यद्वा, अस्तु शाकल्यग्रहणं यथाश्रुतम्। तथापि "निपात एकाज्" (पा०सू०१-१-१४) इत्यनेनैव सिद्धे "उञः" (पा०सू०१-१-१७) इति तावन्नियमार्थम्। तथा च शाकल्यभिन्नमते न प्रगृह्यतेति प्रथमसूत्रार्थः। उत्तरसूत्रे च प्रगृह्यस्योञ इत्येतावतैव शाकल्ये लब्धे पुनः शाकल्यानुवृत्त्येतरेषामपि मते पाक्षिकः प्रगृह्योऽस्तीत्यनुमीयते। तेन 'उ इति' रूपं सिद्धम्। अथ वोत्तरसूत्रे पुनः शाकल्या-

नुवृत्तिसामर्थ्याच्छन्दोऽधिकाराश्रयणेन शाकलस्यैव ऋषेरपत्यान्तरं गृह्यते। अस्मिंश्च पक्षे प्रगृह्यस्योञ इत्यनुवादसामर्थ्यादेव प्रगृह्यताऽपि लभ्यते यथा "ढकि लोपः" (पा०सू०४-१-१३३) इत्यनुवादसामर्थ्याड्डगिति दिक्।

आदेशश्चायमनुनासिक इति निर्देशादेव व्यक्तम्। तथा च बह्वृचप्रातिशाख्यम्—"उकारश्चेति करणेन युक्तो रक्तो पृक्तो द्राघितः शाकलेन" (ऋ०प्रा०१-१८) इति। रक्तसंज्ञोऽनुनासिक इति च। अत एव 'यदेतनूँ इति पदकाराः पठन्ति' इत्यनुकरणे "यरोऽनुनासिकेऽनुनासिको वा" (पा०सू०८-४-४५) इत्येष विधिः प्रवर्त्तते।

ईदूतौ च सप्तम्यर्थे (पा०सू०१-१-१९)। शाकल्यस्य इताविति निवृत्तम्। ईदन्तमूदन्तं च शब्दरूपं सप्तम्यर्थे वर्त्तमानं प्रगृह्यं स्यात्। 'अध्यस्यां मामकीतनू'। मामक्यां तन्वामिति प्राप्ते "सुपां सुलुक्" (पा०सू०७-१-३९) इति लुप्तसप्तमीकावेतौ। मामकी इति, तनू इतीति पदकाले कार्योदाहरणे बोध्ये। 'सोमो गौरी अधिश्रितः' इति संहितायामप्युदाहरणम्। ईदूताविति किम्? प्रियः सूर्य्ये प्रियो अग्ना भवाति। अग्निशब्दात्परस्याः सप्तम्या डाआदेशः। पदकारैः प्रगृह्योष्वितिशब्दप्रयोगस्य नियमितत्वेनेहापि पदकाले इतिशब्दप्रयोगप्रसङ्ग इति प्रत्युदाहरणमिदम्। सप्तमीग्रहणं किम्। धीती, मती, सुष्टुती। धीत्या, मत्या, सुष्टुत्येति प्राप्ते तृतीयैकवचनस्य पूर्वसवर्णं ईकारः। ततः "अकः सवर्णे दीर्घः" (पा०सू०६-१-१०१) इत्येकादेशः। न त्विह सुपो लुक् ह्रस्वश्रवणापत्तेः। अर्थग्रहणं किम्? वाप्यामश्वो वाप्यश्वः। नद्यामातिर्नद्यातिः "संज्ञायाम्" (पा०सू०२-१-४४) इति सप्तमीसमासः। ननु सप्तम्यर्थोपहितास्त्येव तत्कथमर्थग्रहणे कृतेऽपीष्टसिद्धिरिति चेत्? इत्थम्, जहत्स्वार्थावृत्तिरिति पक्षे पदे वर्णवद्वृत्तौ वर्त्तिपदानामानर्थक्यादीदन्तमिहानर्थकं, न तु सप्तम्यर्थवृत्तीति स्पष्टमेव। अजहत्स्वार्थावृत्तिरिति पक्षेऽपि उपसर्जनपदं न स्वार्थमात्रे पर्यवस्यति किन्तु तत्संसृष्टे प्रधानार्थे। अर्थग्रहणसामर्थ्याच्च यावानर्थः सप्तम्याऽभिधीयते आधेयासंसृष्टो निष्कृष्टाधिकरणरूपस्तावन्मात्रस्येह ग्रहणमिति वृत्तिप्रविष्टेन भविष्यति। यद्यपि वाक्यवत्समासेऽपि लुप्तसप्तमीबलेनाधिकरणमात्रबोधः पश्चाद्विक्रियार्थतया संसृष्टबोध इति वक्तुं शक्यते, तथापि सिद्धान्ते तावत् "समर्थः पदविधिः" (पा०सू०२-१-१) इति परिभाषानुरोधात् समासस्थले एकार्थीभाव एव सामर्थ्यं, न तु व्यपेक्षा। अत एव "उपसर्जने विशेषणान्वयो न भवति शक्यैकदेशत्वात्" इति

द्वितीये वक्ष्यते। मीमांसकादीनामपि निषादस्थपतिन्यायेन पूर्वपदार्थसम्बन्धिनि लक्षणाऽभ्युपगमाद्युक्तैवार्थग्रहणेन वाप्यश्वनद्यातिप्रभृतेर्व्यावृत्तिः। आतिः बलाका।

शरारिरातिराटिश्च बलाका बिसकण्ठिका। (अ० को०२-५-२७)

इत्यमरः। आद्यास्त्रयोऽपि स्त्रीलिङ्गाः बलाकासाहचर्यादिति केचित्। वस्तुतस्तु शरार्यादयस्त्रयः पक्षिविशेषवाचका न तु बलाकापर्यायाः। अतो बलाकासाहचर्यमकिञ्चित्करं स्त्रीत्वं परमस्त्येव। रत्नकोशे स्त्रीलिङ्गकाण्डे—"आटिः शरारिर्वरटी" इत्युक्तेः। आतेरपि तत्साहचर्यात्।

तपरकरणमसन्देहार्थमिति वृत्तिः। अत्र वार्त्तिकम्—

ईदूतौ सप्तमीत्येव लुप्तेऽर्थग्रहणाद्भवेत्।
पूर्वस्य चेत्सवर्णोऽसावाडाम्भावः प्रसज्यते॥
वचनाद्यत्र दीर्घत्वं तत्रापि सरसी यदि।
ज्ञापकं स्यात्तदन्तत्वे मा वा पूर्वपदस्य भूत्॥

अस्यार्थः-ईदूतौ सप्तमीत्येवास्तु नार्थोऽर्थग्रहणेन। अत्रोत्तरमाह—लुप्त इति। संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेरभावात्। सप्तम्या एव संज्ञा स्यात्। लुप्तेऽपि सुपि प्रकृतिभागस्य संज्ञासिद्धये तु कर्त्तव्यमेवार्थग्रहणमित्यर्थः। ननु 'सोमो गौरी' इत्यादौ विभक्तिर्न लुप्यते किन्तु 'धीती' 'मती' इत्यादाविव पूर्वसवर्णे कृते "अकः सवर्णे" इति दीर्घैकादेशे तस्यादिवद्भावात्सप्तमीग्रहणादस्त्येव सप्तमीत्याशङ्क्याह-पूर्वस्येति। आडाम्भाव इति। एकादेशं बाधित्वा परत्वादाङ्गत्वाच्चाऽऽडामौ स्यातामित्यर्थः। तस्माल्लुगेवेति स्थितेऽर्थग्रहणं कर्त्तव्यमेवेति भावः। नन्वर्थग्रहणं माऽस्तु वचनसामर्थ्याच्च संज्ञाविधावपि तदन्तविधिर्भविष्यतीत्याशङ्क्याह-वचनादिति। यत्र दीर्घत्वं तत्रैव वचनात्स्यात् "दृतिं न शुष्कं सरसी शयानम्" इति यथा। अत्र हि सरश्शब्दात्परस्य सप्तम्येकवचनस्य "इयाडियाजीकाराणामुपसंख्यानम्" (का०वा०) इतीकारादेशे सप्तमी श्रूयते। तथाच 'सोमो गौरी' इत्यादौ न स्यादेवेत्यर्थः। एतद् दूषयति-तत्रापीति। तत्रापि सप्तम्या लुगेव न त्वीकारः। यदि सरसीशब्दोऽपि वर्त्तते। असन्दिग्धे 'सन्दिग्धवचनमेतच्छास्त्राणि चेत्प्रमाणं स्युरिति यथा। अस्ति हि सरसीशब्दो "दक्षिणापथे हि महान्ति सरांसि सरस्य इत्युच्यन्ते" इति भगवदुक्तेः "कासारः सरसी सरः"(अ०को०१-१०-२८) इत्यमरकोशाच्च। तथा च "सरसीः परिशीलितुं मया" इत्यादि प्रयोगोऽपि दृश्यते। एवञ्च सरसीशब्दोऽपि

लुप्तविभक्तिक एवेति वचनात्तदन्तविधिरिति स्थितम्। ननूक्तरीत्याऽस्तु सरसीशब्दः, सरस्शब्दोऽपि सान्तो निर्विवाद एव। तथाच सान्तादेवेकारादेशोऽयमस्तु। एवं हि सति संज्ञाविधौ ज्ञापकात्त्यक्तस्य तदन्तग्रहणस्य पुनराश्रयणं न कर्त्तव्यं भवतीति चेत्? न, तथा सतीकारस्य सुप्त्वेनानुदात्ततया सरःशब्दस्य च सृधातोरसुनि व्युत्पादितस्य नित्स्वरेण सरसीति पदमाद्युदात्तं प्रसज्येत। गौरादिषु "पिप्पल्यादयश्च" (का०वा०) इति पाठात्पिप्पल्याद्यन्तःपातिनः सरःशब्दान्ङीषा त्वन्तोदात्तमिष्यते। तथैव वेदे पाठात्। एवन्तर्हि प्रगृह्यसंज्ञाप्रकरणे प्रत्ययलक्षणं नास्तीति ज्ञापनायेदमर्थग्रहणमस्तु। एवञ्च "ईदूदेद् द्विवचनम्" (पा०सू०१-१-११) इति सूत्रे ईदूदेदन्तं द्विवचनान्तमिति पक्षे ईदूदेदन्तं यद्द्विवचनं तदन्तमिति पक्षश्च समर्थितो भवति। तत्र हि कुमार्य्योरगारं कुमार्य्यगारम्, अशुक्ले शुक्ले सम्पद्येतां शुक्लयास्तां वस्त्रे इत्यत्रातिव्याप्तिरिति दोषः। स च प्रत्ययलक्षणविरहादेवोद्धृत इत्याह—ज्ञापकमिति। प्रगृह्यसंज्ञाप्रकरणे प्रत्ययलक्षणाभावस्येति शेषः। क्वेदं ज्ञापनमुपयुज्यते, तदाह-तदन्तत्व इति। तदन्तगर्भे पक्षद्वयेऽपीत्यर्थः। ननु संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेरभावादेव तदन्तपक्षस्तत्र न स्थित इत्यपरितोषादाह-मा वेति 'वाप्यश्वः' इत्यादौ मा भूदित्यर्थः।

अत्रेदमवधेयम्, "अवितॄस्तृतन्त्रिभ्य ईः"(उ०सू०३-४४६) इति सूत्रादीरित्यनुवर्त्तमाने "यापोः किद्वे च"(उ०सू०३-४४७) "वातप्रमीः"(उ०सू०४-३४९) इति सूत्राभ्यां शब्दत्रयं व्युत्पादितम्। यान्त्यनेनेति ययीर्मुक्तिमार्गः। पिबति रसान्पाति वा लोकमिति पपीः सूर्य्यः। वातं प्रमिमीते सम्मुखधावनादिति वातप्रमीः निःशृङ्गो मृगाकृतिर्वातमृगनामा पशुविशेषः। एभ्यस्त्रिभ्योऽपि ङौ सवर्णदीर्घात् 'पपी' 'ययी' 'वातप्रमी' इति रूपं निर्विवादम्। तथाचेह श्रूयमाणस्येकारस्य सप्तमीत्वात् 'तत्रापि सरसी यदि'इत्यसङ्गतम्, ईकारस्य श्रूयमाणस्यासम्भवात्। सामर्थ्यात्तदन्तविधिर्भविष्यतीत्यस्यार्थः। तस्मादूकारांशे सामर्थ्यात्तदन्तविधौ लब्धे 'सोमो गौरी' इत्यादावपि भाव्यमितीत्याशयः। 'ययी आसक्तः' इत्यादौ तु भाव्यमेव प्रकृतिभावेन। न चायं योगश्छान्दसस्तथाविधानामेवोदाहरणानां दत्तत्वादिति वाच्यम्, मुनित्रयोक्तिं विनाऽस्मदिच्छया छान्दसत्वकल्पनेऽतिप्रसङ्गात्, लोके प्रगृह्यत्वं न भवतीत्यस्मिन्नर्थे प्रमाणानुपलम्भाच्च, 'अप्रतिषिद्धमनुमतं भवति' इतिन्यायेन लोके 'ययी' 'पपी' 'वातप्रमी' इत्येतेषां प्रगृह्यत्वस्यैव न्याय्य-

त्वाच्च । अत एव "दृग्दृशवतुषु" (पा०सू०६-३-८९) इति सूत्रे "दृक्षे च" (का०वा०) इति वार्तिकमुपादाय क्सप्रत्ययः सादेशश्च छन्दस्येव, भाष्ये 'सदृक्षासः' इत्युदाहृतत्वादिति केचिदिति व्याचक्षाणा हरदत्ताद-यश्छान्दसत्वं वदतां मते स्वस्यापरितोषमाविश्चक्रुरिति दिक् ।

दाधाघ्वदाप् (पा०सू०१-१-२०) । दारूपा धारूपाश्च धातवो घु-संज्ञाः स्युर्दाप्दैपौ वर्जयित्वा । तत्र दारूपाश्चत्वारः—"डुदाञ्" (जु०उ०१०९१) प्रणिददाति, "दाण्" (भ्वा०प०९३०) प्रणियच्छति, "दो" (दि०प०११४८) प्रणिद्यति, "देङ्" (भ्वा०आ०९६२) प्रणि-दयते । धारूपौ द्वौ-"डुधाञ्" (जु०उ०१०९२) प्रणिदधाति, "धेट्" (भ्वा०प०९०२) प्रणिधयति वत्सो मातरम् । अदाबिति किम् ? "दाप् लवने" (अ०प०१०५९) दातं बर्हिः । लूनमित्यर्थः । घुत्वाभावाद् "दोदद्घोः" (पा०सू०७-४-४६) इति न प्रवर्त्तते । "दैप् शोधने" (भ्वा०प०९२४) अवदातं मुखम् । इह घुत्वाभावाद् "अच उपसर्गात्तः" (पा०सू०७-४-४७) इत्येतन्न । घुप्रदेशा "नेर्गद-नद" (पा०सू०८-४-१७) इत्यादयः । इह दोदेङ्धेटामनुकरणानि व्यव-स्थाप्य तत्र "प्रकृतिवदनुकरणम्" (प०भा० ) इत्यतिदेशाद् "आदेच उपदेशेऽशिति" (पा०सू०६-१-४५) इत्यात्वं क्रियते, अनैमित्तिकमात्वं शिति तु प्रतिषेध इति सिद्धान्तात् । न चैवं विभक्तेरुत्पत्तिर्न स्यादधा-तुरिति प्रातिपदिकसंज्ञानिषेधादिति वाच्यम्, अधातुरिति पर्युदा-सोऽयं न तु प्रसज्यप्रतिषेधः । अस्ति चेह स्वाश्रयमधातुत्वम् । यद्वा, "यत्तदेतेभ्यः" (पा०सू०५-१-३९) इत्यादाविवेहापि कार्यविशेषपुर-स्कारेणैवातिदेशप्रवृत्त्यप्रवृत्ती भविष्यतः । ततश्चतुर्णां दारूपाणां द्वयोश्च धारूपयोरेकशेषं कृत्वा द्वन्द्वः कर्त्तव्यः । 'प्रणिदाता' इत्यादौ कृता-त्वानां दोदेङ्धेटां तु स्थानिवद्भावात्सिद्धं घुत्वं लक्षणप्रतिपदोक्तपरि-भाषाया "निरनुबन्धकग्रहणे न सानुबन्धकस्य" (प०भा०८२)इत्यस्याश्च नेह प्रवृत्तिः, सर्वेषां स्वरूपेणैवानुकृतत्वात् । अत एव दारयतिधारय-त्योर्नातिप्रसङ्गः, तयोरनुकरणे आत्वालम्भात्रेनेह द धृ इत्यनयोरनुपात्त-त्वात् । ननु कृतात्वस्य सूत्रे निर्देशात् 'प्रणिद्यति' 'प्रणिधयति' इत्यादौ चात्वविरहात्कथं घुत्वमिति चेत् ? भ्रान्तोऽसि । न हि वयं कृतात्व-मनुकुर्मो येनोक्तदोषः स्यात, अपि तु देदोधे इत्येजन्तेष्वेवानुक्रियमाणेषु लक्षणवशान्निष्पन्नमात्वमित्युक्तम् । न च लक्षणेन स्वरूपान्यत्वेऽप्यनु-करणता हीयते "सख्युरसम्बुद्धौ" (पा०सू०७-१-९२) इत्यत्रापि सखि-रूपप्रतीतेः, 'गवित्ययमाह' इत्यत्र गोशब्दप्रतीतेश्च । दीङस्तु नेह प्र-

हणं, तदनुकरणे आत्वासम्भवात्। वार्तिकमते एजन्तानां दीङादीनामात्वविधानात्। भाष्यमते त्वेज्निमित्ते परतस्तद्विधानात्। तेन दीङस्तृजादावात्वे कृतेऽपि घुसंज्ञाविरहात् 'प्रनिदाता' इत्यत्र "नेर्गद" (पा०सू०८-४-१७) इति नित्यं णत्वं न भवति "शेषे विभाषा" (पा०सू० १-२-२७) इति वैकल्पिकं तु स्यादेव। तथा 'उपादास्तास्य स्वरः शिक्षकस्य' इत्यत्र "स्थाघ्वोरिच्च" (पा०सू०१-२-१७) इतीत्वं न भवतीति सूत्रकारस्य मतम्। नन्वस्मिन्पक्षे दाप्दैपावनुकृतौ न वा? आद्येऽनुकरणपर्युदासोभयसामर्थ्यात्तयोर्घुसंज्ञाविकल्पः स्यात्, अन्त्ये अदाबिति व्यर्थं स्यात् अननुकृतत्वादेव दाप्दैपोर्घुसंज्ञाप्राप्तिविरहादिति चेत्? न, अदाबित्यस्मिन्नसति तयोरप्यनुकरणं सम्भाव्येत। न हि लक्षणैकचक्षुषा दोदेङादीनां दाप्दैपोश्च वैलक्षण्यं किञ्चिदनुभूयते यद्बलाद् ग्रहणाग्रहणे व्यवस्थाप्येयाताम्। "व्याख्यानतो विशेषप्रतिपत्तिः" (प०भा०१) इति परमवशिष्यते। किन्त्वगतिकगतिरेषाऽनभिधानवत्। न च तद्बलेन सिद्धस्य प्रत्याख्यानं शोभते।

वार्तिककारमते तु प्रयोगस्थानामेव दाधारूपाणामिदमनुकरणम्। न चैवं 'प्रणिद्यति' 'प्रणिद्यते' इत्यादौ शिति न स्यात्, आत्वाभावात्। तथा "देङ् रक्षणे" (भ्वा०आ०९६२) अदित "धेट्" (भ्वा०प० ९०२)व्यत्यधित, 'प्रणिदाता' 'प्रणिधाता' इत्यादावपि न स्यादात्वस्य लाक्षणिकत्वात् "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणम्" (प०भा०११४) इति न्यायादिति वाच्यम्, वचनबलेनैव तत्समाधानात्। तथाच कात्यायनवार्तिकम्—"घुसंज्ञायां प्रकृतिग्रहणं शिदर्थम्" इति। भारद्वाजीयास्तु पठन्ति—"शिद्विकृतार्थम्" इति। तथाच दाधाप्रकृतयो घु इति पठित्वा दाश्च धाश्च प्रकृतयश्चेति द्वन्द्वं कृत्वा सन्निधानाद्दाधामेव प्रकृतय इति व्याख्येयम्।

भाष्यकारास्तु वार्त्तिकं प्रत्याचख्युः। तथाहि, "नेर्गद" (पा०सू० ८-४-१७) इति सूत्रे तावदवश्यं प्रकृतिग्रहणं कर्त्तव्यं 'प्रणिमयते' 'प्रण्यमयत' इत्यत्रापि णत्वं यथा स्यात्। तदेव पुरस्तादपकृष्य घुप्रकृतिमा इति पठिष्यामः। घुश्च प्रकृतिश्च माश्चेति द्वन्द्वः। सन्निधानाच्च पूर्वोत्तरयोः प्रकृतिर्ग्रहीष्यते। न चैवं मीनातिमिनोत्योरपि माप्रकृतित्वाद्ग्रहणापत्तिः, माङो ङकारानुबन्धस्यैव तत्रावश्यं पठनीयत्वात्। अन्यथा 'मामानः' इत्यत्रातिप्रसङ्गात्। तस्माद् घुप्रकृतिमाङिति पाठेन 'प्रणिद्यति' 'प्रणिदयते' इत्यादेः सिद्धत्वाच्छिदर्थं तावद् घुसंज्ञायां प्रकृतिग्रहणं न कर्त्तव्यमिति स्थितम्। भारद्वाजीयोक्तरीत्या 'विकृतार्थं कर्त्त-

व्यम्' इति पुनरवशिष्यते। तदपि न, "गामादाग्रहणेष्वविशेषः" (प०भा० ११५) इति परिभाषयैव लाक्षणिकस्यापि दारूपस्य घुसंज्ञासिद्धेः। अस्यां च परिभाषायां दैपः पित्त्वं लिङ्गम्। तद्धि दाविति सामान्यग्रहणार्थं क्रियते लाक्षणिकत्वादेव घुसंज्ञायां दैप्ग्रहणाभावे तु किं निषेधे सामान्यग्रहणार्थेन पित्त्वेन? न चैवमपि धेटो घुसंज्ञा न स्यादेवेति वाच्यम् "दो दद् घोः" (पा०सू०७-४-४६) इत्यत्र धेटो निवृत्त्यर्थं क्रियमाणेन द इत्यनेन धेटोऽपि घुसंज्ञाज्ञापनात्। न च दधातिनिवृत्त्यर्थं द इत्युक्तमिति वाच्यम्, तत्र दधातेर्हिः" (पा०सू०७-४-४२) इति ह्यादेशविधानादेव दद्भावाप्रसङ्गात्। नन्वेवमपि "गामादाग्रहणेष्वविशेषः" (प०भा० ११५) इत्येतेन लक्षणप्रतिपदोक्तपरिभाषाया "निरनुबन्धकग्रहणे" (प० भा०८२) इति परिभाषायाश्च यथा बाधस्तथार्थवद्ग्रहणपरिभाषाया अपि बाधः स्यात्। तथाच 'प्रनिदारयति' 'प्रनिधारयति' इत्यत्राप्यतिप्रसङ्ग इति चेत्? न, गदादीनां य उपसर्गस्तत्स्थान्निमित्तादुत्तरस्य तानेव गदादीन् प्रत्युपसर्गस्य नेरिति व्याख्यानात्। दारयतिधारयत्यवयवयोस्तु दाधारूपयोरनर्थकत्वान्न तं प्रत्युपसर्गत्वम्, यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञा इति वक्ष्यमाणत्वात्। न चैवं 'प्राणिदापयति' 'प्राणिधापयति' इत्यत्रापि णत्वं न स्यादिति वाच्यम्, तत्र पुगागमात्पूर्वं दा धा इत्यवस्थायां घुसंज्ञाप्रवृत्तौ पुग्विशिष्टस्यापि घुग्रहणेन ग्रहणात्। 'अनागमकानां सागमका आदेशाः' इति पक्षे तु स्थानिवद्भावेन घुसंज्ञाप्रवृत्तेः। नन्वनान्तर्यमेवैतयोरान्तर्य्यं सम्प्रयोगो वा नष्टाश्वदग्धरथवदिति स्थानेन्तरतमसूत्रस्थभाष्यरीत्या दारयत्यादेरपि दापयत्यादिसाम्यमेव, निष्पन्नस्याणो रपरत्वाभ्युपगमेन रेफपुकोरविशेषादिति चेत्? सत्यम्, "सिद्धन्तु प्रसङ्गे रपरत्वात्" इत्युरण्रपरसूत्रस्थवार्त्तिकरीत्या समाधानं कृतम्। उक्तभाष्यरीत्या तु प्रसक्तो दोषः प्रागुक्तसूत्रकारमतमाश्रित्योद्धर्त्तव्यः। न हि दध्रृ इत्यनयोरनुकरणे आत्वं लभ्यते इति दिक्।

इदं त्ववधेयम्, 'प्रणिदापयति' इत्यत्राप्युपसर्गयोः प्रकृत्यर्थविशेषणत्वे सत्येव "नेर्गद" (पा०सू०८-४-१७) इति नित्यं णत्वं, ण्यर्थविशेषकत्वे तु घुसंज्ञकं प्रत्यनुपसर्गत्वात् "शेषे विभाषा" इति विकल्प एव न तु नित्यं णत्वमिति।

स्यादेतत्, 'उपादिदीषते' इत्यत्र "सनि मीमा" (पा०सू०७-४-५४) इतीस्भावः स्यात्, वार्त्तिककृता घुसंज्ञायां प्रकृतिग्रहणात्। सूत्रकारभाष्यकारयोस्तु नासौ दोषः, सूत्रकृता दीङोननुकृतत्वात्, भाष्यमते णत्वे प्रकृतिग्रहणेपि घुसंज्ञायान्तद्विरहादिति चेत्? सत्यम्, वार्त्तिक-

मतेऽपि नेयं दाप्रकृतिः, एजन्तानामात्वविधानाभ्युपगमात् । न चैवमादन्तत्वनिबन्धनयुच्प्रत्ययासिद्धिः, तत्राकारान्तलक्षणप्रत्ययविधिरिति वचनेनैव तत्सिद्धेः। भाष्ये त्वेतद्वचनप्रत्याख्यानायैज्विषये आत्वं सिद्धान्तितमित्यन्यदेतत् ।

इदं त्ववशिष्यते, भाष्यवार्त्तिकोभयमतेऽपि "उपादास्तास्य स्वरः शिक्षकस्य" इत्यत्र "स्थाघ्वोः" (पा०सू०१-२-२७) इतीत्वं प्राप्तं, तच्च भाष्ये सन्निपातपरिभाषया परिहृतम्। उप दी स् त इति स्थिते एज्विषये प्रवर्त्तमानमात्वं सिचोऽकित्त्वमुपजीवति। यदि चात्र घुसंज्ञा स्यात्तर्हि "स्थाघ्वोरिच्च" (पा०सू०१-२-२७) इति सिचः कित्त्वं स्यादतोऽकित्त्वमुपजीव्य प्रवृत्त आकारः कित्वप्रवर्त्तिकां घुसंज्ञां न प्रवर्त्तयत्येवेति ।

वार्त्तिककृता तु "दीङः प्रतिषेधः स्थाघ्वोरित्वे"(का०वा०) इति वचनमेव कृतम् । उभयमतेऽपि दीङस्तृजादावात्वे कृते 'प्रणिदाता' इत्यादौ "नेर्गद" [पा०सू०८-४-१७] इति णत्वं भवति । अत एव वार्त्तिककृता "दीङः प्रतिषेधः" इत्येव नोक्तं किन्तु "स्थाघ्वोरित्वे"इति विषयविशेषो निर्दिष्टः ।

सूत्रमते तु न भाव्यं णत्वेनेति स्पष्टमेव । किञ्च भाष्यवार्त्तिकयोर्न केवलं सूत्रकृता सह विरोधः किन्तु परस्परेणापि। तथाहि, भाष्यमते 'प्रणिदीयते' 'प्रणिदीनः' इत्यादावपि नित्यं णत्वं णत्वविधौ प्रकृतिग्रहणात् । वार्त्तिकमते तु वैकल्पिकम्, एजन्तानामेव प्रकृतित्वाभ्युपगमेनेदन्तस्याप्रकृतित्वात् । अन्यथा 'उपदिदीषते' इत्यत्रेस्भावापत्तेः । तदेवं 'प्रणिदाता' इत्यादौ सूत्रकृता सह द्वयोर्विरोधः । 'प्रणिदीनः' इत्यादौ तु भाष्यकृता सहेतरयोर्विरोधो दुष्परिहर इति ।

अत्रेदं वक्तव्यम्, 'यथोत्तरं मुनीनां प्रामाण्यम्' इति सिद्धान्ताद्भाष्योक्तरीत्या सर्वत्र दीङि परे नेर्नित्यं णत्वमिति स्थिते सूत्रवार्त्तिकमतेऽपि "शेषे विभाषा" (पा०सू०८-४-१८) इति व्यवस्थितविभाषामाश्रित्य भाष्याविरोधः सम्पादनीयः, एकवाक्यतयैव सर्वनिर्वाहसम्भवे मतभेदकल्पनस्यानाश्रयणीयत्वादिति । नन्वदाविति प्रतिषेधे "दाप् लवने" (अ०प०१०५९) इत्यस्यैव ग्रहणं युक्तम्, न तु दैपः। पकारे श्रूयमाणे आत्वायोगादिति चेत् ? न, "अनुबन्धा अनेकान्ताः" (प०भा०४) इति पक्षे श्रूयमाणस्यापि पकारस्य काकादिवदनवयवत्वेन धातोरेजन्तत्वानपाये आत्वप्रवृत्तेः। "एकान्ता अनुबन्धाः" (प०भा०५) इति पक्षेऽपि भवत्येवात्वम् "नानुबन्धकृतमनेजन्तत्वम्" (प०भा०७) इति सिद्धान्तात् । अत्र च "ईदीचां माङो व्यतीहारे" (पा०सू०३-४-१९)

इति कृतात्वस्य मेङो निर्देशो ज्ञापकः । न च "माङ्माने"(जु०आ०१०८८) इत्यस्यैवायं निर्देशो 'व्यतिमिमीते' इत्यादौ तस्यापि कदाचिद्व्यतीहारे वृत्तिसम्भवादिति वाच्यम्, अपूर्वकालार्थस्य क्त्वाप्रत्ययस्य "माङ् माने" इत्यस्मादनभिधानात् । अत्र च भाष्योक्तेरेव प्रमाणत्वादित्याहुः । एवञ्च मेङ इत्येव पठनीये "माङो व्यतीहारे" इति गुरुकरणं "नानुबन्धकृतमनेजन्तत्वम्" (प०भा०७) इति ज्ञापनार्थमेव ।

भाष्यकारास्तु नायं दैप् किन्तु दिवादिषु "दाप् शोधने" इत्येव पठिष्यतइत्याहुः । न च स्वरे भेदः 'दायति' इत्यादेरुभयथाप्याद्युदात्तत्वात् । ननु ताच्छीलिके चानशि 'दायमानः' इत्यत्र स्वरे भेदः । श्यनि धातोराद्युदात्तत्वं शपि तु चानशोऽन्तोदात्तत्वमिति चेत्? न, उभयथाऽप्यन्तोदात्तत्वानपायात् । न च श्यन्स्वरस्य सतिशिष्टत्वेन प्राबल्यमिति वाच्यम् "अन्यत्र विकरणेभ्यः" (प०भा०८०) इति पर्युदासात्, "आत्ममाने खश्च" (पा०सू०३-२-८३) इत्यत्रत्यभाष्यकैयटबलेन खशीव चानश्यप्यन्तोदात्ततया निर्णयात् । स्थानिवत्सूत्रीयः कैयटग्रन्थस्तु खश्सूत्रस्थभाष्यस्वोक्तिभ्यां विरोधात्प्रामादिक इति वक्ष्यते । ध्यायत्यादयस्तु दिवादिष्वेवादन्तत्वेन न पठिताः "गणकार्यमनित्यम्" (प०भा०९६) इति ज्ञापयितुम् । तेन "न विश्वसेदविश्वस्तं" "पथिकवनिताः प्रत्ययादाश्वसन्त्यः" (मे०दू०) इत्यादि सिद्धम् । यत्तु भाष्ये एकान्तत्वपक्षेऽपि न दोष इत्युपक्रम्य पकारलोपे कृते भविष्यति, दाप्त्वं तु भूतपूर्वमनुबन्धमाश्रित्य व्युत्पादनीयमिति सिद्धान्तितम् । तत्रेत्थं प्रत्यवतिष्ठन्ते-सत्यप्येजन्तत्वे उपदेशे एजन्तत्वं कथमिति ? अत्रोच्यते—पित्करणसामर्थ्यादुपदेशे एजन्तत्वाभावेऽप्यात्वप्रवृत्तिः । वस्तुतस्तूपदेशग्रहणं भाष्यकारो न मन्यते । तथाच तत्र वक्ष्यति-उपदेशग्रहणं न करिष्यते । यद्युपदेशग्रहणं न क्रियते 'चेता' 'स्तोता' इत्यत्रापि प्राप्नोति । अत्राप्याचार्यप्रवृत्तिर्ज्ञापयति न परनिमित्तस्यैच आत्वं भवतीति । यदयं क्रीङ्जीनां णावेच आत्वं शास्ति । नैतदस्ति ज्ञापकं नियमार्थमेतत्स्यात् क्रीङ्जीनां णावेवेति । यत्तर्हि "मीनातिमिनोतिदीङां ल्यपि च" (पा०सू० ६-१-५०) इत्यत्रैज्ग्रहणमनुवर्त्तयतीति । ननु 'प्रणिदापयति' इत्यत्राप्यदाबिति प्रतिषेधः स्यादिति चेत्? न, यथोद्देशपक्षेऽन्तरङ्गत्वोद्दावस्थायामेव घुसंज्ञाया निर्वृतत्वात् । कार्यकालपक्षे तु घुसंज्ञाया णत्वसमानदेशतया पुकं प्रति णत्वघुसंज्ञयोरसिद्धत्वेन प्रागेव पुक् ततो घुसंज्ञा न स्यादिति दोषः प्रसज्जत्येव । अत एव भाष्ये द्वेधा समाहितम्-दाधाध्वपिदिति वक्ष्यामि । यद्वा, बान्तावेतौ धातू सूत्रमपि बान्तम् । चर्त्वेन

सर्वत्र पकारो निर्दिष्टः। अतो 'दापयति' इत्यत्र नासौ निषेधः तस्यापि त्वादबान्तत्वाच्चेति।

आद्यन्तवदेकस्मिन् (अष्टा०सू०१-१-२१)। असहाये आदाविवान्त इव कार्याणि स्युः। औपगवः। यथा तव्यादीनां प्रत्ययाद्युदात्तत्वं प्रवर्त्तते, एवमिहाणोपि। आभ्याम्। यथा 'वृक्षाभ्याम्' इत्यादौ "सुपि च" (पा०सू०७-३-१०२) इति दीर्घत्वं भवति एवमिहापि। "ईङ्गतौ" दिवादिः-एयम्।" अचो यत्"(पा०सू०३-१-९७)इति अजन्ताद्धातोर्विधियमानो यत्प्रत्यये यथा 'चेयं' 'जेयम्' इत्यादौ भवति तथेहापि। इणस्तु "एतिस्तु" (पा०सू०३-१-१०९) इति क्यपि 'इत्यम्' इत्येवरूपं न तु 'एयम्' इति। एकस्मिन्निति किम्? सभासन्नयने भवः साभासन्नयनः। अत्र ह्याकारस्यादित्वे सति तमेवाश्रित्य सभासन्नयनशब्दस्य वृद्धत्वं स्यात्। ततश्चाणं बाधित्वा "वृद्धाच्छः" (पा०सू०४-२-११४) इति छः प्रसज्येत। ननु "वृद्धिर्यस्याचामादिः" (पा०सू०१-१-७३) इति सूत्रे आदिग्रहणस्यापीदमेव व्यावर्त्यम्। तत्सामर्थ्यादेव सभासन्नयनशब्दे वृद्धसंज्ञा न भविष्यतीति चेत्? न, यदि हि वृद्धसंज्ञासूत्रे आदिग्रहणसामर्थ्यादनातिदेशिकस्य मुख्यस्यैवादेर्ग्रहणं तर्हि जानातीति ज्ञा ब्राह्मणीत्यादिरसहायोऽपि वृद्धो न स्यात्। ततश्च ज्ञाया अयं 'ज्ञीयः' इत्यादि न सिध्येत्। असति हि प्रकृतसूत्रस्थैकग्रहणे यत्रादिव्यपदेशो मुख्यो नास्ति असहाये मध्ये अन्ते च स सर्वोऽप्यविशेषादतिदेशस्य विषयः स्यात्। यदि त्वतिदेशसामर्थ्याज्ज्ञाशब्दे वृद्धत्वं तर्ह्यविशेषात्सभासन्नयनेऽपि स्यात्। वृद्धसंज्ञायामादिग्रहणं तर्हि व्यर्थमेवेति चेत्? हन्तैवमतिदेशस्यादिग्रहणस्य च सामर्थ्यात्सर्वत्र विकल्पापत्तिः। इहैकग्रहणे कृते त्वन्त्यमध्ययोर्व्यावृत्त्या वृद्धसंज्ञायामादिग्रहणं सार्थकमिति दिक्।

यत्तु न्यासकृतोक्तम्—अतिदेशसूत्रे एकग्रहणाभावे वृद्धसंज्ञासूत्रस्थमादिग्रहणमनातिदेशिकप्रतिपत्त्यर्थं सदसहायानां ज्ञादीनामेव वृद्धसंज्ञां वारयेन्न तु सभासन्नयनस्य, सन्नयनेत्येतदन्तर्गतांश्चतुरोऽचोऽपेक्ष्यानातिदेशिकस्यादित्वस्य तत्र सत्त्वादिति। तच्चिन्त्यम्, परस्मिन्सति यस्मात्पूर्वो नास्ति स आदिरिति सिद्धान्तरीत्या मध्यस्थेऽप्यादित्वविरहात्। इयानेव हि विशेषः-असहाये सत्यन्तविशेषणविरहाद्विशिष्टाभावः, मध्यस्थे तु विशेष्याभावाद्विशिष्टाभाव इति।

वार्तिककारस्तु लाघवादपूर्वत्वमात्रमादिशब्दस्य प्रवृत्तिनिमित्तमनुत्तरत्वमात्रं चान्तशब्दस्य न तु सत्यन्यस्मिन्नित्यपि विशेषणं, गौरवात्। तथा चासहायेऽपि मुख्ययोरेवाद्यन्तयोः सम्भव इति मन्वानः

सूत्रमेतत्प्रत्याचख्यौ । आह च—"अपूर्वानुत्तरलक्षणत्वादाद्यन्तयोः सिद्धमेकस्मिन्" इति ।

भाष्यकारस्तु नैतन्मेने, सत्यन्यास्मिन्निति विशेषणप्रक्षेपप्रयुक्तस्य गौरवस्य प्रामाणिकत्वात् । लोके ह्ययमादिरन्तो वेत्युक्तेऽवशिष्टमपि किञ्चिदस्तीति नियमेन प्रतीयन्ति । पदान्नियतोपस्थितिश्च शक्तिसाध्या । अनुभवमपलप्यैकदेशमात्रे शक्तिकल्पने तु श्वशुरादिपदानामपि लाघवाद्भार्यात्वमात्रं पितृत्वमात्रं तद्घटकपुंस्त्वमात्रं वा शक्यतावच्छेदकं स्यादिति विशिष्टविषयकशक्त्युच्छेदेन सकलशिष्टव्यवहारव्याकोपः स्यादिति । नन्वेवमपि व्यपदेशिवद्वचनं कर्त्तव्यमेव, 'इयाय' 'आर' इत्यादौ धात्ववयवत्वं प्राथम्यमेकाच्त्वं चाश्रित्य द्वित्वं यथा स्यात् । एकाच इति हि बहुव्रीहिरिति वक्ष्यते । न चेणो वृद्ध्यायादेशयोरर्त्तेश्च वृद्धौ रपरत्वे च कृते आय् आर् इत्यनयोरेकाच्त्वं पचादेरिव मुख्यमेवास्तीति वाच्यम्, "द्विर्वचनेऽचि" (पा०सू०१–१–५९) इति रूपातिदेशेन इ ऋ अनयोरेव द्विरुक्तेः । किञ्च यजेः पञ्चमलकारे 'स देवान् यक्षदिषितो यजीयानि' इत्यादौ "सिब्बहुलं लेटि" (पा०सू०३–१–३४) इति सिप् । तस्य षत्वं व्यपदेशिवद्भावेनैव साध्यं, प्रत्ययस्य यः सकारस्तस्य षत्वमिति सिद्धान्तात् । तस्माद् "व्यपदेशिवदेकस्मिन्" (प०भा० ३२) इत्येव सूत्र्यतां किं प्रकृतसूत्रेण ? व्यपदेशो नाम विशिष्टो मुख्योऽपदेशो व्यवहार एकाच इत्यादिः सोऽस्यास्तीति व्यपदेशी, पचिप्रभृतिस्तस्मिन्निवासहायेऽपि कार्य्यं स्यादित्यर्थः । अत्राह भाष्यकारः "अवचनाल्लोकविज्ञानात्सिद्धम्" इति । वचननिरपेक्षाल्लोकव्यवहारादेव व्यपदेशिवद्भावसिद्धेराद्यन्तवदिति व्यपदेशिवदिति चोभयमपि न सूत्रयितव्यमित्यर्थः । अस्ति हि लोके निरूढोऽयं व्यवहारोऽयमेव मे ज्येष्ठः पुत्रोऽयमेव मध्यमोऽयमेव कनिष्ठ इति । तथा असूतायामसोष्यमाणायां च प्रथमगर्भेण हतेति व्यवहरन्ति । तथा पूर्वमनागतोऽग्रेऽनाजिगमिषुश्चाहं इदं मे प्रथममागमनमिति । ननु सर्वे इमे गौणा व्यवहारास्तत्कथं मुख्ये चरितार्थं शास्त्रं गौणे प्रवर्त्तेतेति चेत् ? न, निरूढतरतया गौणस्याप्यस्य मुख्यसमकक्षत्वात्, ज्ञापकाच्च । यदयम् "इट ईटि" (पा०सू०८–२–२८ इति) सिचो लोपं शास्ति तज्ज्ञापयति व्यपदेशिवदेकस्मिन्निति । न ह्यन्यथेट् लभ्यते । वलूरूपत्वेऽपि वलादित्वविरहात् । तथा "दीर्घ इणः किति" (पा०सू०७–४–६७) इत्यादीन्यपि ज्ञापकानि । न हि व्यपदेशिवद्भावं विना इणोऽभ्यासो लभ्यते इति दिक् ।

यत्तूक्तं कैयटेन—अर्थवता व्यपदेशिवद्भावात्कुरुत इत्यादौ तद्य-

ब्दाकारस्यानर्थकत्वेन तत्र टिसंज्ञासिद्धये आदिवद्भावो वचनेनैव साधनीय इति। अत्रेदं वक्तव्यम्, अर्थवता व्यपदेशिवद्भाव इति तावन्नेयं परिभाषा तस्या विध्यङ्गत्वात्। व्यपदेशिवद्भावस्तु लौकिक इत्युक्तया तं प्रत्यङ्गत्वायोगात्। किन्तु शास्त्रे व्यपदेशिवद्भावयोजनाय शब्दार्थसमुदायमाश्रित्य तस्यैकदेशः शब्द इति व्युत्पादयितुमर्थवत्ताऽपेक्षितेति परं तस्याशयः। अत एव षष्ठे "निजां त्रयाणां गुणः श्लौ" इत्येतेषु व्युत्पादनावसरे भाष्यकैयटयोरनर्थकेनापि व्यपदेशिवद्भावः स्वीकृतो लोक इव शास्त्रेऽप्यनर्थकस्य व्यपदेशिवद्भावसम्भवात्। तस्मादर्थवतेति प्रायोवादमात्रं, सूत्रप्रत्याख्यानं तु सम्यगेवेति दिक्॥

तरप्तमपौ घः (पा०सू०१-१-२२)। एतौ घसंज्ञौ स्तः। कुमारितरा। कुमारितमा। "घरूप" (पा०सू०६-३-४७)इति ह्रस्वः। नद्यास्तरो नदीतर इत्यत्र तु न भवति, तमपा साहचर्येण प्रत्ययस्यैव तरपो ग्रहणात्। यद्वा, तरबिति रूपं संज्ञाप्रवृत्तावाश्रितं तच्च परिनिष्ठिते प्रयोगे क्वापि नास्तीत्यौपदेशिकं गृह्यते। तच्च तरप्प्रत्ययस्यैवास्ति। अपिच प्रतिपदोक्तत्वमपीह सुलभम्। तेनावयवशो व्युत्पादिते नदीतरे नातिप्रसङ्गः। किञ्च समानाधिकरणे स्त्रीलिङ्गे परे ह्रस्वत्वं विधीयते। अन्यथा 'महिषीव रूपं महिषीरूपम्' इत्यत्रापि स्यात्। "सुप् सुपा" इति समासः। रूपमाकृतिः, महिषीवेयमाकृतिरित्यर्थः। सामानाधिकरण्यस्त्रीत्वे च स्वार्थिकत्वादातिशायनिकस्य स्तो न तु नदीतरे, अतो नोक्तदोषः। नन्वातिशायनिकप्रकरण एव तादी घ इति, पितौ घ इति वा क्रियतां लाघवादिति चेत्? न, प्रकरणोत्कर्षेणेह संज्ञाप्रकरणस्यान्योऽपि तरबस्तीति ज्ञापनार्थत्वात्। स चानिर्दिष्टार्थत्वात्स्वार्थे भवति। तेन "अल्पाच्तरम्" "लोपश्च बलवत्तरः" इत्यादि सिद्धम्। केचित्तु सामान्यापेक्षं ज्ञापकमाश्रित्य ईयसुनोऽपि स्वार्थिकतामाहुः। तेनाहो महीयस्तव साहसिक्यमित्यादि प्रयोगाः समर्थिता भवन्ति।

बहुगणवतुडति सङ्ख्या (पा०सू०१-१-२३)। एते सङ्ख्यासंज्ञाः स्युः। बहुकृत्वः "संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" (पा०सू० ५-४-१७)। बहुधा "संख्याया विधार्थे धा" (पा०सू०५-३-४२)। बहुभिः क्रीतो बहुकः "संख्याया अतिशदन्तायाः कन्" (पा०सू०५-१-२२) बहुशः "बह्वल्पार्थाच्छस्कारकात्" (पा०सू०५-४-४२) इत्यनुवर्त्तमाने "संख्यैकवचनाच्च वीप्सायाम्" (पा०सू०५-४-४३) इति शस्। गणकृत्वः, गणधा, गणकः, गणशः, तावत्कृत्वः, तावद्धा, तावत्कः, तावच्छः। "यत्तदेतेभ्यः परिमाणे वतुप्" (पा०सू०५-१-३९)। "आ सर्व-

नाम्नः" (पा०सू०६-३-९१) शेषं प्राग्वत् । कतिकृत्वः कतिकः, कतिधा कतिशः "किमः संख्यापरिमाणे डति च" (पा०सू०५-२-४१) शेषं प्राग्वत् ।

स्यादेतत्, वैपुल्येऽपि बहुशब्दो वर्त्तते, बहुर्हिमवानिति । सङ्घे च गणशब्दः, भिक्षुकाणां गण इति । "समवायश्चयो गणः" (अ०को०२-५-४०) इत्यमरः । तथाच सङ्घवैपुल्यवाचिनोरप्यनयोः संख्या संज्ञा स्यादिति चेत् ? न, संख्यायतेऽनयेत्यन्वर्थसंज्ञाविज्ञानात् । तस्मात्संख्यावाचिनोरेव बहुगणशब्दयोरिह ग्रहणम् । तच्च नियमार्थम्—अनियतबहुत्ववाचिनां मध्येऽनयोरेव संख्या संज्ञा न तु भूर्यादीनामिति । तेन बहुविषययोर्द्ध्येकयोर्नियतबहुत्ववाचिनां त्र्यादीनां च न व्यावृत्तिः । ननु नियमार्थत्वे सिद्धे सजातीयापेक्षत्वान्नियमस्य त्वदुक्तव्यवस्था सिध्येत् ! नियमार्थत्वमेव तु दुरुपपादम्, विध्यर्थताया एवौचित्यात् । तथाहि, अस्ति तावत् "कृत्रिमाकृत्रिमयोः कृत्रिमे कार्य्यसम्प्रत्ययः" (प०भा०अव०९) इति परिभाषा । सा च न्यायमूला । संज्ञासूत्रेण संज्ञिविशेषे नियम्यमानो हि संज्ञाशब्दः कथं तदितरं बोधयेत् । एवं स्थिते बहुगणयोरिह ग्रहणाभावे संख्याप्रदेशेषु ग्रहणमेव न स्यात्, अकृत्रिमत्वात् । तस्मात्स्वसङ्ग्रहार्थमेव बहुगणग्रहणं न तु भूर्यादिनिवृत्त्यर्थमिति । अत्राहुः—संज्ञिविशेषे क्रियमाणः संज्ञानियमो यदि सामान्यापेक्षस्तदा युक्ताऽकृत्रिमस्य व्यावृत्तिः ! विशेषपरत्वे तु सजातीयं कृत्रिमान्तरमेव नियमेन व्यावर्त्येत न त्वकृत्रिममपि । तदेतदुच्यते—"उभयगतिरिह शास्त्रे भवति" (प०भा०९) इति कृत्रिमाकृत्रिमयोरुभयोरपि ग्रहणमित्यर्थः । अस्ति च संख्याप्रदेशेषूभयग्रहणे लिङ्गं "संख्याया अतिशदन्तायाः कन्" (पा०सू०५-१-२२) इति सूत्रे शदन्तपर्युदासः । न हि कृत्रिमा संख्या शदन्ताऽस्तीति दिक् । तेन 'पञ्चधा' 'पञ्चकृत्वः' इत्यादि सिद्धं भवति । यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति, तथापि वतुडत्योः केवलयोः संज्ञायाः प्रयोजनाभावात्सामर्थ्यात्तदन्तग्रहणम् । तद्धितविधौ हि "ङ्याप्प्रातिपदिकात्" (पा०सू०४-१-१) इत्याधिकृतं, न च केवलस्य प्रत्ययस्य प्रातिपदिकत्वमस्तीति बोध्यम् । एतच्च सूत्रं भाष्ये प्रत्याख्यातम् । "बहुपूगगणसङ्घस्य तिथुक्" (पा०सू०५-२-५२) "वतोरिथुक्" (पा०सू०५-२-५३) "षट्कतिकतिपयचतुरां थुक्" (पा०सू०५-२-५१) इति सूत्रैर्डटि परे आगमा विधीयमाना बहुप्रभृतीनां डटो निर्वाहकं संख्यात्वं ज्ञापयन्तीति किमनेन सूत्रेण ? ननु "बहुपूगगणसङ्घ" (पा०सू०५-२-५२) इत्या-

दौ विशेषाश्रयणात्संघवैपुल्यवाचिनोरपि बहुगणशब्दयोः संख्याकार्यं स्यादिति चेत् ? न, अनियतसंख्यावाचिनोरप्येतयोः संख्याकार्यं भवतीत्येतावन्मात्रज्ञापनेन चरितार्थत्वे सति सर्वथा संख्यामप्रतिपादयतोरपि संख्याकार्यकल्पनस्य गौरवपरास्तत्वात् । भूर्यादीनां त्वनियतसंख्यावाचिनां ग्रहणं न भवति, नियतसंख्यावाचिनां पञ्चादीनामेव लोके संख्याशब्दत्वेन प्रसिद्धतरत्वात्; प्रसिद्धाप्रसिद्धयोः प्रसिद्धग्रहणस्य न्याय्यत्वात् । नन्वेवमपि बहुगणयोरिव पूगसंघादीनामपि धाशस्–कृत्वसुजादिसंख्याकार्यप्रसङ्गः । न च बहुगणयोः सामान्यापेक्षं ज्ञापकं पूगादीनां तु डट्विषयकमेवेति वाच्यम्; अनुपपत्तेः । समानत्वेन एकसूत्रोपात्तत्वेन च वैषम्ये बीजाभावादिति चेत् ? मैवम्, लक्ष्यानुरोधेन क्वचित्सामान्यापेक्षं क्वचिद्विशेषापेक्षं ज्ञापकमित्याश्रयणात्तदनुरोधेन वैरूप्यस्य सोढव्यत्वादिति दिक् । इमां कुसृष्टिमसहमानेनैव सूत्रकृता सूत्रमिदं प्रणीतमिति तु परमार्थः ।

अत्र वार्तिकानि—अध्यर्द्धग्रहणं समासकन्विध्यर्थम् । अर्द्धेनाधिकमध्यर्धम् । एकदेशवाचकोऽयमर्द्धशब्दः । तस्याधिशब्देन समासे कृते यौगिकार्थः प्रतीयते न संख्येति वार्त्तिकारम्भः । अध्यर्द्धेन शूर्पेण क्रीतमध्यर्द्धशूर्पं "दिक्संख्ये" (पा०सू०२–१–५०) इत्यनुवर्त्तमाने "तद्धितार्थ" (पा०सू०२–१–५१) इति समासः, ततः "शूर्पादञन्यतरस्याम्" [पा०सू० ५–१–२६) इत्यञष्ठञो वा "अध्यर्द्धपूर्व" [पा०सू०५–१–२८) इति लुक् । अध्यर्द्धेन क्रीतमध्यर्द्धकम् "संख्याया अतिशदन्तायाः कन्" [पा०सू० ५–१–२२] इति कन् । इह समासविध्यर्थमिति सम्बन्धसामान्ये षष्ठी । समासे विधीयमाने समासनिमित्ते वाऽन्यस्मिन्कार्ये विधीयमाने इत्यर्थः । तेन द्विगुनिमित्तो लुगपि लभ्यते । तथाच "अध्यर्द्धपूर्व" [पा०सू० ५–१–२८) इति सूत्रेऽध्यर्द्धग्रहणं न कर्तव्यं भवति । तदुक्तं, लुकि चाग्रहणमिति । अध्यर्द्धपूर्वपदश्च पूरणप्रत्ययान्तः । संख्येत्यनुवर्त्तते । पूरणप्रत्ययान्त इत्यस्य पूरणप्रत्ययान्तोत्तरपद इत्यर्थः । समासकन्विध्यर्थमित्येव । अर्द्धं पञ्चमं येषामिति बहुव्रीहिः । अर्द्धपञ्चमैरर्द्धाधिकैश्चतुर्भिः शूर्पैः क्रीतमर्द्धपञ्चमशूर्पं, पूर्ववदञष्ठञो वा लुक् । अर्द्धपञ्चमेन क्रीतमर्द्धपञ्चमकम् ।

अधिकग्रहणं चालुकि समासोत्तरपदवृद्ध्यर्थम् । अधिकया षष्ट्या क्रीतोऽधिकषाष्टिकः, अधिकसाप्ततिकः, "तद्धितार्थ" (पा०सू०२–१–५१) इति समासः । "प्राग्वतेष्ठञ्" (पा०सू०५–१–१८) । अलुकीति वचनात् लुकि कर्त्तव्ये संख्यासंज्ञा नास्तीति द्विगुत्वमपि न, तेन "अध्यर्द्धपूर्व-

द्विगोः" (पा०सू०५-१-२८) इति लुङ् न। ततः "संख्यायाः संवत्सरसंख्यस्य च" (पा०सू०७-३-१५) इत्युत्तरपदवृद्धिः। नन्वलुकीति व्यर्थम्, उत्तरपदवृद्ध्यर्थमिति वचनादेव लुगभावस्याक्षेप्तुं शक्यत्वादिति चेत्? न, अर्हत्यर्थात्परेष्वर्थेषु ये प्रत्ययास्तेषां लुगप्राप्त्या तत्रैवोत्तरपदवृद्धेः सावकाशत्वात्।

ष्णान्ता षट् (पा०सू०१-१-२४)। षान्ता नान्ता च संख्या षट्संज्ञा स्यात्। 'षट् तिष्ठन्ति' 'षट् पश्य' 'पञ्च' 'सप्त' इत्यादि। संख्येति किम्? विप्रुषः, पामानः। ननु 'शतानि' 'सहस्राणि' इत्यत्र नुमि कृते तस्य पूर्वभक्ततया नान्ता संख्येति षट्संज्ञा स्यादिति चेत्? अस्तु। न चैवं "षड्भ्यो लुक्" (पा०सू०७-१-२२) इति लुक् स्यादिति वाच्यम्, सर्वनामस्थानसन्निपातेन कृतस्य नुमस्तदविघातकत्वात्। नन्वेवमपि 'अष्टानाम्' इति न सिद्ध्यति। तथाहि, 'अष्टन् आम्'इति स्थिते परत्वान्नित्यत्वाच्च "अष्टन आ विभक्तौ" (पा०सू०७-२-८४) इत्यात्वे कृतेऽनान्तत्वात् संज्ञायामसत्यां "षट्चतुर्भ्यश्च" (पा०सू०७-१-५५) इति नुण्न प्राप्नोतीति चेत्? न, यथोद्देशपक्षे आत्वात्प्रागेव षट्संज्ञा, अन्तरङ्गत्वात्। ततः कृतेऽप्यात्वे एकदेशविकृतस्यानन्यतया षट्संज्ञकत्वेन नुटः सिद्धत्वात्। कार्यकालपक्षे तन्नुक्तदोषस्तदवस्थ एव। किञ्च यथोद्देशेऽप्यलिवाधित्वादतिदेशो दुर्लभः। अत एव 'वव्रश्च' इति "अचः परस्मिन्" (पा०सू०१-१-५७) इत्यस्य फलमिति कैयट इति चेत्? न, "अष्टनो दीर्घात्" (पा०सू०७-२-८४) इति दीर्घग्रहणेन कृतात्वस्यापि षट्संज्ञाज्ञापनात्। तथाहि, "त्रः संख्यायाः" (पा०सू०७-३-१६) इत्याद्युदात्तत्वं बाधित्वा घृतादिपाठादन्तोदात्तोऽष्टन्शब्दः साधितः। तस्माद्भिसि 'अष्टभिः' 'अष्टाभिः' इति रूपद्वयम्। तत्रात्वाभावे मध्योदात्तमात्वपक्षे त्वन्तोदात्तमिति सिद्धान्तः। तत्र "षट्त्रिचतुर्भ्यो हलादिः" (पा०सू०६-१-१७९) इति सूत्रेण 'षण्णां' 'षड्भिः' इत्यादाविव विभक्तेरुदात्तत्वं प्राप्तं तद्बाधित्वा "झल्युपोत्तमम्" (पा०सू०६-१-१८०) इति प्राप्तम्। षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं भवतीति हि तस्यार्थः। तद्बाधनाय "अष्टनो दीर्घात्" (पा०सू०६-१-१७२) इत्यारभ्यते। दीर्घान्तादष्टनः पराऽसर्वनामस्थानविभक्तिरुदात्ता भवतीति सूत्रार्थः। तत्र यद्यात्वपक्षे षट्संज्ञा न स्यात्तर्हि सावकाशोऽष्टनः स्वरः परत्वादात्वाभावपक्षे "झल्युपोत्तमम्"(पा०सू०६-१-१८०) इति षट्स्वरेण बाधिष्यते इति किं दीर्घग्रहणेन? कृतात्वस्यापि षट् संज्ञायां सत्यां तु षट्स्वरस्याष्टनः स्वरोऽपवादः सम्पद्यते। न चाष्टनः स्वरः शसि सावकाशः

इति वाच्यम्, तत्र "एकादेश उदात्तेनोदात्तः" (पा०सू०८-२-५) इति सूत्रेणैव गतार्थत्वात्; 'अष्टन्शब्दोऽन्तोदात्तः' इति समनन्तरमेवोक्तत्वात्। तेन दीर्घपक्ष इव तदभावपक्षेऽपि विभक्तेरुदात्तता स्यादिति तद्व्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणं सार्थकमेव। तस्माद्दीर्घग्रहणेनात्वपक्षेऽपि षट्संज्ञा ज्ञाप्यते इति स्थितम्। न चैवं दीर्घग्रहणस्यात्वविकल्पज्ञापकत्वं न स्यादिति वाच्यम्, उभयज्ञापकत्वसम्भवात्। न ह्येकेनैकमेव ज्ञाप्यते इति नियमः, यावता विनाऽनुपपत्तिस्तावतो ज्ञाप्यत्वात्। तच्चैकमनेकं वेत्यन्यदेतत्। प्रकृते चोभयं विना दीर्घग्रहणवैयर्थ्यानुद्धारादिति दिक्।

यदि तु ष्णाः षकारनकाराकारा अन्ते यस्याः सा ष्णान्तेति प्रकृतसूत्रे एवाकारोऽपि प्रश्लिष्येत तदा "द्वाभ्याम्" इत्यत्र "षट्त्रिचतुर्भ्यो हलादिः" (पा०सू०६-१-१७९) इति विभक्तेरुदात्तत्वं स्यात्। "आ द्वाभ्यां हरिभ्यामिन्द्र याहि" इत्यादावाद्युदात्तमेव द्वाभ्यामिति पदं पठ्यते तस्मादिहाकारप्रश्लेषो न वर्णनीयः, किन्तूक्तप्रकार एवादर्त्तव्य इति स्थितम्। तथा सप्तमे योगविभागं कृत्वा तद्बलेनापि द्वेधा भाष्ये समाहितम्। तथाहि, "षड्भ्यो लुक्" (पा०सू०७-१-२२) इत्यत्र षड्भ्य इति विभज्यते। "अष्टाभ्य औश्" (पा०सू०७-१-२१) इति सूत्रादष्टाभ्य इत्यनुवर्त्तते। तेन षड्भ्यो यदुक्तं कृताकारादष्टनोऽपि तत्स्यादिति सूत्रार्थः। न चैवं जश्शसोर्लुगप्यतिदिश्येतेति वाच्यम, औश्त्वविधिवैयर्थ्यापत्तेः। अथवा "अष्टन आ विभक्तौ" (पा०सू०७-२-८४) इत्यस्मादनन्तरं "रायः" (पा०सू०७-२-८५) इति योगं विभज्य हलीत्युभयोर्योगयोः शेषो व्याख्येयः। तेन 'अष्टानाम्' इत्यत्र नुटः पश्चादेवात्वं न तु ततः प्राक्। न चैवं जश्शसोरात्वं न स्यादिति वाच्यम, लाघवार्थमष्टभ्य इति निर्देष्टव्ये "अष्टाभ्य औश्" (पा०सू०७-१-२१) इति कृतात्वनिर्देशेन जश्शसोर्विषये आत्वानुमानात्। यत्रात्वं तत्रैवौश्त्वं यथा स्यादित्येतदर्थं हि तत्र दीर्घोच्चारणं कृतमिति।

स्यादेतत्, हलीति यद्युभयोः शेषस्तर्हि प्रियाष्टन्शब्दे औजसमौट्शस्टाङेङसिङसोसाम्ङ्योस्सु वैकल्पिकतयेष्यमाणमात्वं न सिद्ध्येत्। न च तत्रात्वं नेष्यत एवेति वाच्यम्, इतःप्राचीनपक्षाणामतिव्याप्तिप्रसङ्गात्। तेषु ह्यात्वं प्राप्यते एव विभक्तिमात्रे तद्विधानात्। न च "षड्भ्यो लुक् (पा०सू०७-१-२२) "षट्चतुर्भ्यश्च" (पा०सू०७-१-५५) इति सूत्राभ्यां विधीयमानौ लुग्नुटौ यथा गौणतायां न स्तस्तथात्वमपि न स्यादेवेति वाच्यम्, वैषम्यात्। लुग्नुटोर्विधौ हि 'षड्भ्यः' इति

'षट्चतुर्भ्यः' इति बहुवचननिर्देशात् षडर्थप्राधान्य एव तौ प्रवर्त्तेते। आत्व-विधौ तु 'अष्टनः' इत्येकवचननिर्देशाद् गौणेऽपि 'प्रियाष्टाभ्याम्' इत्यात्वं प्रवर्त्तते एव "पदाङ्गाधिकारे तस्य तदुत्तरपदस्य च" (प०भा०२९) इति वक्ष्य-माणत्वात्। न च जश्शसोरष्टाभ्य औशिति कृतात्वनिर्देशेनानुमीयमानमा-त्वं केवले प्राधान्ये च 'अष्टौ' 'परमाष्टौ' इत्यत्र यथा भवत्येवं गौणत्वेऽपि भविष्यतीति तदंशे नानुपपत्तिरिति वाच्यम् , औश्त्वं हि लुग्नुटाविव गौणत्वे न भवति 'अष्टाभ्यः' इति बहुवचननिर्देशात् । अन्यथा हि कृ-तात्वानुकरणेऽप्येकवचनेनैव निर्दिशेत्–अष्टा औशिति अष्ट इति वा। स्पष्टं चैतदिहैव सूत्रे भाष्यकैयटयोः। तथा चौश्त्वविधौ कृतात्वनिर्दे-शबलेनानुमीयमानमात्वमपि प्राधान्ये एव स्यान्न तु गौणतायामिति तदंशेऽप्यनुपपत्तिसाम्यात् । तस्माद्–

हलीत्युभयशेषश्चेन्न स्यादात्वं प्रियाष्टनः ।
टाङेङसिङसोसाम्सु तथैवौजसमौट्छसि ॥
प्रागुक्तेषु तु पक्षेषु भवेदात्वममीष्वपि ।
फलभेदे महत्येवं कथं पक्षविकल्पनम् ॥

अत्रोच्यते, प्रियाष्टन्शब्दस्याजादावात्वमनिष्टमेव, हलीत्युभयोः शेष-स्य भाष्ये एव सिद्धान्तितत्वात् । तथा सत्यौजसोः क्रमेण 'प्रियाष्टानौ' 'प्रियाष्टानः' इत्येव रूपं स्यान्न तु 'प्रियाष्टौ' 'प्रियाष्टा' इत्यपीत्याशङ्क्य "यथालक्षणमप्रयुक्ते" इत्यभिहितत्वाच्च । अत एव यथालक्षणमिति प्रतीकमुपादाय न भवत्येवात्रात्वमित्यर्थ इति कैयटो ऽव्याख्यत् । एवं स्थिते प्राचीनाः पक्षा अपरितोषग्रस्ता एव व्यवस्थितविभाषया गौण-तायामजादिष्वात्वं न भवतीत्याशयेन वा योज्याः, उदाहृतभाष्यकैयट-प्रामाण्यात् । तस्मात्प्रियाष्टनः सर्वेषु वचनेषु राजन्शब्दसाधारणं रूपं, हलादौ तु हाहाशब्दसाधारणमपरं रूपम् । औश्नुटोस्तु प्राप्तिरेव ना-स्तीति प्रामाणिकः पन्थाः । अत एव "सर्वादीनि सर्वनामानि" (पा०सू०१–१–२७) इति सूत्रे हरदत्तेन गौणत्वे औश्न भवतीति स्पष्ट-मेवाभिहितम् । अत एव "अष्टाभ्य औश्" (पा०सू०७–१–२१) इति सूत्रे "तदन्तग्रहणमत्रेष्यते परमाष्टौ" इत्युक्त्वा "प्रियाष्टान इत्यत्रात्व-स्याभावादौश्न भवति" इति काशिका संगच्छते । अत एव च "अष्टन आ विभक्तौ" (पा०सू०७–२–८४) इति सूत्रे तदन्तविधिश्चात्रेष्यते । प्रिया अष्टौ यस्य प्रियाष्टावित्यपि यथा स्यादिति काशिकाग्रन्थोऽपि सङ्गच्छते, हलादावात्वस्य निर्बाधत्वात् । हरदत्तस्तु "अष्टाभ्य औश्" (पा०सू०७–१–२१) इति सूत्रे प्रियाष्टान इत्यत्रेति वृत्तिग्रन्थमुपा-

२०

दाय यथा पुनर्गौणतायामात्वं न भवति तथा तद्विभावेव वक्ष्यत इति प्रतिज्ञाय "अष्टन आ विभक्तौ (पा०सू०७-४-८४) इति सूत्रे एकवचननिर्देशात्स्वरूपस्य ग्रहणं नार्थस्य, तेनोपसर्जनेऽप्यष्टानि भवति तत्रापि विकल्पितत्वात्। 'प्रियाष्टा, 'प्रियाष्टानौ, प्रियाष्टानः' इत्यपि भवति। तत्राप्यात्वपक्षे भसंज्ञाविषये आतो लोपमिच्छन्ति 'प्रियाष्टः पश्य' इत्याद्यात्वाभावपक्षेऽप्यल्लोपे ष्टुत्वं 'प्रियाष्ट' इति भवतीत्यन्तेन ग्रन्थेन पूर्वप्रतिज्ञातार्थविपरीतं भाष्यवृत्त्यादिविरुद्धं च कथमभिहितवानिति तस्याशयं स एव प्रष्टव्यः। अल्लोपे ष्टुत्वमित्यपि तदुक्तिश्चिन्त्यैव, पूर्वस्मादपि विधावल्लोपस्य स्थानिवद्भावेन ष्टुत्वायोगात। न च "पूर्वत्रासिद्धीये न स्थानिवत्" (भा०इ०) इति निषेधः "तस्य दोषः संयोगादिलोपलत्वणत्वेषु" (भा०इ०) इति सापवादत्वात्। ननु "रषाभ्यां नो णः" (पा०सू०८-४-१) इति प्रतिपदोक्तं णत्वं तत्र गृह्यते न तु ष्टुत्वविधिलभ्यमपि विलम्बितप्रतीतिकत्वादिति चेत्? न, "अपदान्तस्य मूर्द्धन्यः" (पा०सू०८-३-५५) इति सूत्रं संपूर्णं "रषाभ्याम्" (पा०सू०८-४-१) इति सूत्रेऽनुवर्त्य तत्रत्यस्य णग्रहणस्य "पदान्तस्य" (पा०सू०८-४-३७) इति निषेधसूत्रस्य च भाष्ये प्रत्याख्यातत्वात्; यथोत्तरं मुनीनां प्रामाण्यात्। न च मूर्द्धन्यशब्देन ष्टुशब्देन वा निर्वर्त्यमाने णकारे वैषम्यमस्ति सूत्रकाररीत्या कथंचित्संभवन्नपि न्यायोऽत्र भाष्यानुरोधात्त्याज्य एव। तथाच "शर्पूर्वाः खयः" (पा०सू०७-४-६१) इति सूत्रे खर्पूर्वग्रहणं कर्त्तव्यमिति वार्त्तिकं प्रत्याचक्षाणो भगवानाह—अभ्यासजश्त्वचर्त्वे सिद्धमित्येव पत्वतुग्ग्रहणं न कर्त्तव्यमिति। तथाच हलादिः शेषे कर्त्तव्ये तुकश्चुत्वेन निष्पन्नस्य चकारस्यापि चर्त्वेन सिद्धतया 'उचिच्छिषति' इति रूपं सिद्धमिति तदाशयः कैयटेन वर्णितः। तदेकं 'प्रियाष्नः' इत्याद्येव रूपमुचितम्। न 'चैवं पूष्णः' इत्यादावपि नकार एव पठ्येतेति वाच्यम्, तत्र "अट् कुप्वाङ्" (पा०सू०८-४-२) इति सूत्रेण णत्वप्रवृत्तेरिति दिक्।

डति च (पा०सू०१-१-२५)। डत्यन्ता संख्या षट्संज्ञा स्यात्। कति सन्ति, कत्यद्राक्षीः। षट्त्वाज्जश्शसोर्लुक्। संख्येति किम्? पातेर्डतिः, पतयः। न चास्य संख्यासंज्ञाऽपि स्यादिति वाच्यम, वतुसाहचर्येण तत्र तद्धितस्यैव ग्रहणात्। इदं सूत्रं प्रत्याख्यातं भाष्ये। बहुगणवतुसंख्या" "डति" संख्येत्यनुवर्त्तते। ततः "ष्णान्ता षट्" संख्या डतीत्युभयमप्यनुवर्त्तते। पूर्वसूत्रेऽप्यन्वर्थसंज्ञाविज्ञानात् संख्याप्रश्नविषयस्यैव डतेर्ग्रहणं न त्वौणादिकस्येति।

क्तक्तवतू निष्ठा (पा०सू०१-१-२६)। एतौ निष्ठासंज्ञौ स्तः। कृतः। कृतवान्। ननु विहितयोः प्रत्यययोरनेन संज्ञा । संज्ञया च विधानम्। वक्ष्यति हि तृतीये-निष्ठेति। तथाचान्योन्याश्रय इति चेत्? न, सूत्रशाटकवद्भाविसंज्ञाविज्ञानात्। तौ भूते काले भवतो ययोर्विहितयोर्निष्ठेत्येषा संज्ञा भविष्यतीति।

स्यादेतत्, अनुबन्धाः कार्यार्थमुपादीयन्ते न तु श्रवणार्थं, तेषां लोपविधानात्। तथाच लुप्तानुबन्धस्य परिनिष्ठितस्य यत्र सारूप्यं तत्र कानुबन्धकार्यं भवतु क्व वा नेति तु निश्चेतुमशक्यम्। न च काकादिवदुपलक्षणस्यापि व्यावर्त्तकता भविष्यतीति वाच्यम्, काकादिनाऽपि हि वेदिकापुण्डरीकादिकं स्थिरं किञ्चित्परिचाय्यते तद्बलाच्चोड्डीनेऽपि काके व्यवहारो न सङ्कीर्य्यते। न चेह परिचेयान्तरमुपलभ्यते क्तप्रत्ययतन्प्रत्यययोः काकादिकल्पौ हि ककारनकारौ तदपगमे संवृत्ते 'त' इत्यत्र परिचेयस्य परस्परव्यावृत्तस्य दुर्वचत्वादिति।

अत्राहुः-कालकारकविशेषादयो अर्था एवात्र वेदिकापुण्डरीकादिस्थानापन्नास्तद्दर्शनाच्चानुबन्धस्मृतौ सत्यां तत्तत्प्रयुक्तं कार्य्यं साधुतया ज्ञायते। तथा 'लूनः शालिः' इति केनचित्प्रयुक्ते लक्षणज्ञेन कर्मभूतकालबलात्क्तप्रत्ययोऽयमिति निर्णीयते। "लोतमालभेत" इति प्रयुक्ते तु मेषवाची लोतशब्दस्तन्प्रत्ययान्तः प्रयुक्त इति निर्णीयते "हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्" ( उ०सू०३-३७३ ) इत्युणादिसूत्रात्। "लोतः स्यादश्रमेषयोः" इति तु पञ्चपादीवृत्तौ स्थितम्। तथा 'प्राभित्त घटं देवदत्तः' इति प्रयोगे कर्त्रेकत्वाद्यवगमाल्लुङन्तस्यायं प्रयोगो न तु निष्ठान्तस्येति निर्णीयते।

स्यादेतत्, "अञ्जिघृसिभ्यः क्तः" (उ०सू०३-३७६) इति क्तप्रत्यये 'अक्तं' 'घृतं' 'सितम्' इति व्युत्पादितम्। तत्रापि निष्ठा संज्ञा स्यात्। ततश्च "निष्ठा च द्व्यजनात्" (पा०सू०६-१-२०५) इति स्वरः स्यात्। निष्ठान्तं द्व्यच्कं संज्ञायामाद्युदात्तं स्यात्स चेदादिराकारो नेति सूत्रार्थः। न चेष्टापत्तिः "घृतं मिमिक्षे" इत्यादावन्तोदात्तस्यैव पठ्यमानत्वादिति।

अत्राहुः-"अतः कृकमि" (पा०सू०८-३-४६) इति सूत्रे कमिग्रहणेनैव सिद्धे कंसग्रहणेन ज्ञापितमुणादयः क्वचिद्‌ व्युत्पत्तिकार्यं न लभन्ते इति। अतो नात्र निष्ठा संज्ञेति। यद्वा "घृतादीनां च" (फि०सू० १-२१) इति फिट्सूत्रेण सिद्धम्।

॥ इति श्रीशब्दकौस्तुभे प्रथमाध्यायस्य प्रथमे पादे पञ्चमान्हिकम् ॥

सर्वादीनि सर्वनामानि (पा०सू०१-१-२७)। एतानि सर्वनामसंज्ञानि स्युः। तद्गुणसंविज्ञानोऽयं बहुव्रीहिः। तस्यान्यपदार्थस्य गुणानां वर्त्तिपदार्थरूपाणां विशेषणानां कार्यान्वयितया संविज्ञानं यत्र स तद्गुणसंविज्ञानः। तत्र सर्व आदिर्येषां तानीति विग्रहः। तच्छब्दप्रयोगेणान्यपदार्थप्राधान्यं लभ्यते। एवं चित्रा गावो यस्य स इत्यादावपि। अन्यथा हि यस्य गावश्चित्रा इति गोशब्दार्थप्राधान्यं स्यात्। न चैवंविधेऽर्थे बहुव्रीहिरिष्यते। यत्तु वृत्तिवाक्ययोर्विशेष्यैक्यसरूपत्वाय चित्राणां गवामयमित्यादि विग्रहवर्णनं मीमांसावार्त्तिके कृतम्, तत्तु न मुनिवचसामनुकूलम्, अप्रथमाविभक्त्यर्थे बहुव्रीहिरिति वार्त्तिककृता वक्ष्यमाणत्वात्। भाष्यकृता च "शेषो बहुव्रीहिः" (पा०सू०२-२-२३) इति सूत्रे त्रिकतः शेषमाश्रित्य सूत्राक्षरैरेवोक्तस्यार्थस्य साधितत्वात्। द्वितीया श्रितातीतादिभिस्तृतीया तत्कृतार्थेनेत्यादि क्रमेण हि षण्णां त्रिकाणां समास उक्तस्तदपेक्षया शेषः प्रथमारूपः त्रिकस्तस्यैव बहुव्रीहिसंज्ञेति 'वृष्टे देवे गतः' इत्यादेरिव चित्राणां गवामित्यस्यापि दूरापास्तं बहुव्रीहित्वम्। किञ्च "मत्वर्थे बहुव्रीहिः" (का०वा०) इति कात्यायनवचनात्कथं चित्राणां-गवामित्यत्र तत्प्रसक्तिः? ननु 'दण्डी' इत्यादावपि दण्डस्यायमिति विग्रहाभ्युपगमादस्मद्रीत्याऽयमेव मत्वर्थ इति चेत्तर्हि सुतरां मुनिवचनविरोधः "तदस्यास्त्यस्मिन्" (पा०सू०५-२-९४) इति सूत्रेण प्रथमान्तादस्त्युपाधिकात्सबन्धिनि मतुब्विधानात् "समर्थानां प्रथमाद्वा" (पा०सू०४-१-८२) इति सूत्रेण प्रथमनिर्दिष्टस्यैव प्रकृतित्वावधारणाच्च। नन्वेतान्यपि सूत्रवार्त्तिकभाष्यवचांसि कथञ्चिद्भङ्क्त्वा नेष्याम इति चेत्? "समर्थः पदविधिः" (पा०सू०२-१-१) इत्यादीनि "व्रीहिभिर्यजेत" इत्यादिषु पदविधिभिन्नेष्वपि योजयित्वा सामर्थ्यं च भाष्यादिसम्मताद्विपरीतमेव वर्णयन् भवादृशो निरङ्कुशः किं किं न कुर्यात्? किन्तु व्याकरणाधिकरणे सिद्धान्तितं व्याकरणप्रामाण्यं कथं स्वेच्छया व्याकुलयसीति परं पर्यनुयोगे समाधानं विभावय। तस्माच्चित्रा गावो यस्येत्येव विग्रहः सकलशिष्टसम्प्रदायसिद्धो मुनित्रयवचसामनुकूलश्चेति दिक्।

आदिशब्दस्यावयववाचित्वादुद्भूतावयवभेदः समुदायः समासार्थस्तस्य च समुदायस्य युगपल्लक्ष्ये प्रयोगाभावादानर्थक्यात्तदङ्गेष्विति न्यायेन तदवयवेषु प्रवर्त्तमाना संज्ञाऽविशेषात्सर्वशब्देऽपि प्रवर्त्तते इति युक्तं तद्गुणसंविज्ञानत्वम्। "हलि सर्वेषाम्" (पा०सू०८-३-२२) इत्यादिनिर्देशाश्चेह लिङ्गम्। "जक्षित्यादयः षट्" (पा०सू०६-१-६) इति सूत्रे

तु जक्षिति योगं विभज्य जक्षेः संज्ञाविधानसामर्थ्यादेव इत्यादय इत्यतद्गुणसंविज्ञानो बहुव्रीहिः । एतेन 'कतन्तेभ्यः' 'कण्वादिभ्यः' इत्युभयत्रापि शकलशब्दसङ्ग्रहार्थं यथा तत्पुरुषबहुव्रीह्योरेकशेष इति चतुर्थे वक्ष्यते, तथेहापि "नपुंसकमनपुंसकेन" (पा०सू० १-२-६९) इति वा 'स्वरभिन्नानां यस्योत्तरः स्वरविधिः सशिष्यते" इति वा तत्पुरुषबहुव्रीह्योः सह विवक्षायां बहुव्रीहेः शेष इति परास्तम्, तद्गुणसंविज्ञानबहुव्रीहिणैव सर्वशब्दस्यापि संग्रहे सिद्धे एकशेषाश्रयणस्य गौरवपराहतत्वात् ।

महासंज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थं सर्वेषां नामानीति । तत्सामर्थ्याच्च सर्वार्थाभिधानसामर्थ्यविशिष्टानामेव संज्ञित्वमनुमीयते । तथा च तथाभूतानां गणे पाठस्यावश्यकतया प्रकारान्तरजुषां च पाठे प्रमाणाभावादेव विशेषेऽवस्थितानां संज्ञानामुपसर्जनानां च सर्वादित्वमेव नास्ति । तेन तेषां गणकार्यं संज्ञाप्रयुक्तकार्य्यं चेत्युभयमपि न भवति । गणकार्यं यथा-"त्यदादीनामः" (पा०सू०७-२-१०२) । तद् नाम कश्चित्, अतिक्रान्तस्तमतितत् । यथा-"अड्डतरादिभ्यः" (पा०सू०७-१-२५) । अन्यमतिक्रान्तमत्यन्यम् । अतिकतरम् । संज्ञाप्रयुक्तं यथा-"सर्वनाम्नः स्मै" (पा०सू०७-१-१४) । अतिसर्वाय । तदेतदभिप्रेत्योक्तं वार्तिककृता-"संज्ञोपसर्जनप्रतिषेधः पाठात्पर्युदासः पठितानां संज्ञाकरणम्" इति । तस्मात्प्रसिद्धेन प्रवृत्तिनिमित्तेन प्रयुक्त इतरं प्रत्यनुपसर्जनीभूत एवेह संज्ञीति स्थितम् ।

यत्तु स्वरूपमात्राश्रयं कार्य्यं न तु गणपाठं संज्ञां वापेक्षते । यथा "युष्मदस्मद्भ्यां ङसोऽश्" (पा०सू०७-१-२७) इत्यादि, तदुपसर्जनत्वेऽपि भवत्येवेत्यवधेयम् । न चैवं "युष्मद्युपपदे" (पा०सू०१-४-१०५) इत्यादावपि त्वमादिप्रसङ्गः, लोकप्रसिद्धार्थपरतायामेव तत्प्रवृत्तेः । "अभिव्यक्तपदार्था ये" इति न्यायात् । तदन्तग्रहणमत्र बोद्धव्यं "द्वन्द्वे च" (पा०सू०१-१-३१) इति ज्ञापकात् । तच्च तत्रैव वक्ष्यते, "प्रयोजनं सर्वनामाव्ययसंज्ञायाम्" इति वार्तिकवचनाच्च । तेन 'परमसर्वतः' 'परमसर्वत्र' 'परमसर्वके' इत्यत्र समस्तात्तसिल् त्रल् अकच्च सिध्यति । न च तसिलादिविधौ प्रातिपदिकादित्यनुवृत्तेः सर्वनाम्ना च तद्विशेषणे तदन्तविधिर्भविष्यतीति वाच्यम् "समासप्रत्ययविधौ न तदन्तविधिः" (का०वा०) इति निषेधात् । न चैवम् 'अतिसर्वाय' इत्यादावतिप्रसङ्गः, उपसर्जनपर्युदासस्योक्तत्वात् । अत एव 'परमसर्वस्मै' इत्यादौ स्मायादयो भवन्त्येव ।

स्यादेतत्, 'असः' 'अतस्मिन्' 'अनेषः' इत्यादावप्यत्वसत्वस्मिन्नादीनि न स्युः 'अतिसर्वे' इत्यत्रेवोपसर्जनत्वात्। तथा चाब्राह्मण इत्यादेर्ब्राह्मणभिन्न इत्यादिक्रमेण पूर्वपदार्थप्राधान्येन विवरणं कुर्वन्ति। सत्यम्, वैयाकरणमते नञ्समासस्योत्तरपदार्थप्राधान्यमेव । नञ्सूत्रे भाष्यकारेण तथैव सिद्धान्तितत्वात्। तथाहि, आरोपितत्वं नञर्थः। तथाच मायामनुष्यमायामृगव्याजनिशाकरकपटब्राह्मणादिशब्देभ्य इव आरोपितो मिथ्याभूतोऽयं ब्राह्मण इत्येवं शाब्दबोधपर्यवसाने ब्राह्मणभिन्न इत्यादिकमार्थिकार्थविवरणं न तु शाब्दोऽयमर्थः। अत एव "एतत्तदोः" (पा०सू०६-१-१३२) इति सूत्रेऽनञ्समास इति सार्थकम्। अत एव चौत्सर्गिकी तत्पुरुषस्योत्तरपदार्थप्रधानताऽपि निर्वहतीति दिक्।

ननु यदीह तदन्तविधिरिष्टस्तर्हि भाष्यविरोधः। तत्र हि "संज्ञोपसर्जनप्रतिषेधः" इति वार्तिकस्य प्रत्याख्यानमुपक्रम्यार्थद्वारकं विभक्तिविशेषणमाश्रित्यातिप्रसङ्ग उद्धृतः। सर्वनामार्थसमवेतसंख्याकारकाद्यभिधायिनो ङेः स्मै स्यादित्यादिनोक्तरीत्या तदन्तविधौ सति तु 'अतिसर्वाय' इत्यादौ समुदायस्य सर्वनामतयाऽर्थद्वारकाविभक्तियागोश्रयणेऽपि स्मायादिप्रसङ्गस्तदवस्थ एव स्यादिति चेत्? सत्यम्, अत एवापरितोषाद्भाष्ये "अथवा महतीयं संज्ञा क्रियते" इति पक्षान्तरमुपन्यस्तमिति गृहाण। ननु यदीयमन्वर्थसंज्ञा तर्हि "पूर्वपदात्संज्ञायामगः" (पा०सू०८-४-३) इति णत्वं स्यादिति चेत्? सत्यम्, अत एव निपातनाण्णत्वाभावः। सणत्वं तु रूपमसाध्वेव निपातनेन णत्वशास्त्रस्य बाधितत्वात्। अत एव 'शाश्वतकः' इत्याद्यप्यसाध्वेव। "येषां च विरोधः शाश्वतिकः" (पा०सू०२-४-९) इति निपातनेन "इसुसुक्तान्तात्" (पा०सू०७-३-५१) इत्यस्य बाधितत्वात्। नन्वेवम् "अपरस्पराः क्रियासातत्ये" (पा०सू०६-१-१४४) इति निपातनेन सन्ततशब्दो बाध्येतेति चेत्? न, तत्र 'सातत्ये' इत्यनेनैकदेशानुमतिद्वारा "लुम्पेदवश्यमः कृत्ये" इति पूर्वाचार्यपठितस्य श्लोकस्यैव ज्ञापनात्। नन्वेवमपि "पुराणप्रोक्तेषु ब्राह्मणकल्पेषु" (पा०सू०४-३-१०५) इति पुराणशब्देन पुरातनशब्दस्य बाधः प्राप्नोति। सत्यम्, पृषोदरादिषु पुरातनशब्दस्य पाठो बोद्धव्यः। आगमशास्त्रस्याव्ययटिलोपस्य चानित्यतामात्रं पुराणेति निर्देशेन ज्ञाप्यते इति तु तत्त्वम्। तदेव बाधकान्येव निपातनानीति भाष्ये स्थितम्।

यद्वा, नेदं संज्ञासूत्रम्, किन्तु गणशुद्धिमात्रफलकम्, यानि सर्व-

नामानि तान्येव सर्वादीनि न त्वितराण्यपीति व्याख्यानात्। यथा "तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः" (पा०सू०८-१-२७) इति सूत्रे कुत्सनाभीक्ष्ण्ययोरिति योगं विभज्य गोत्रादीनीत्यनुवर्त्यैतयोरर्थयोर्यानि वर्त्तन्ते तान्येव गोत्रादीनि इति गणशुद्धिपरतया व्याख्यास्यते तेन "चनचिदिव गोत्रादितद्धिताम्रेडितेष्वगतेः" (पा०सू०८-१-५७) "कुत्सने च सुप्यगोत्रादौ" (पा०सू०८-१-६९) इति सूत्रयोरपि विशिष्टार्थानामेव गोत्रादीनां ग्रहणं तथैहापि। ननूक्तरीत्या "त्यदादीनामः" (पा०सू० ७-२-१०२) इत्याद्यन्तर्गणकार्यं सिद्ध्यतु "सर्वनाम्नः स्मै" (पा०सू०७-१-१४) इत्यादिकं तु कृत्स्नसकलादिशब्देष्वतिव्याप्तं स्यादिति चेत्? न, गणपाठसामर्थ्यात्तत्र पठितानामेव ग्रहणात्। एतावानेव हि भेदः। यत्पूर्वोक्ते पक्षे संज्ञा विधेया गणशुद्धिस्त्वार्थिकी अस्मिंस्तु पक्षे गणशुद्धिःशाब्दी कृत्स्नादिव्यावृत्तिस्त्वर्थादिति। अथवोभयमनेन क्रियते पाठशुद्धिः संज्ञा च, तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणात्। तत्र सह विवक्षां विनाऽपि वाचनिक एकशेषः। आकृतिपक्षे हि प्रत्याख्यातं सरूपसूत्रम् "इको गुणवृद्धी" (पा०सू०१-१-३) इत्यादि यच्छास्त्रप्रक्रियार्थं तत्सहविवक्षां विनाऽप्येकशेषं विधत्ते। तदित्थं पञ्चापि पक्षाः स्थिताः। संज्ञाभूतानां व्यावृत्तिस्तु गौणमुख्यन्यायेनापि सिद्ध्यति। न चासौ पदकार्येष्वेवेति वाच्यम्, विशिष्टरूपोपादाने सर्वत्र तत्प्रवृत्तेरित्युपपादितमोत्सूत्रे। वार्त्तिकरीत्या त्वेकसंज्ञाधिकारे सर्वनामसंज्ञानन्तरमेकद्रव्यनिवेशिनी संज्ञेति संज्ञासंज्ञया सर्वनामसंज्ञा बाध्यते इत्यपि समाधानान्तरं बोद्धव्यम्। यद्वा "पूर्वपरावर" इति गणसूत्रेऽसंज्ञायामिति योगं विभज्य पूर्वोत्तरयोः शेषो व्याख्येयः। उक्ताः सर्वादयो वक्ष्यमाणाः स्वादयश्चासंज्ञायामिति। तस्मादुपसर्जनव्यावृत्तिरेवान्वर्थसंज्ञाश्रयणस्य मुख्यं फलम्। ननु "अनुपसर्जनात्" (पा०सू०४-१-१४ इति योगं प्रकारान्तरेण व्याख्याय तद्बलेनैवान्तर्गणकार्यं वारितं भाष्ये। तद्यथा—'अनुपसर्जन' इति लुप्तषष्ठीकं पदम्। अः आदिति च च्छेदः। अश्च अच्च तयोः समाहारः आत्। अकारात्परौ अ अत् इत्यादेशौ यत्र क्रियेते तत्रानुपसर्जनस्य ग्रहणमिति परिभाषार्थः। तेन त्यदाद्यत्वम् "अड्डतरादिभ्यः" (पा०सू०७-१-२५) इत्यदड्भावश्च गौणतायां न भवति। अकारात्परत्वेन विशेषणत्वं किम्? "पञ्चम्या अत्" (पा०सू०७-१-३१) युष्मानतिक्रान्तेभ्योऽतियुष्मत्। "एकवचनस्य च" (पा०सू० ७-१-३२] युष्मानतिक्रान्तादतियुष्मत्। न ह्ययमकारात्परो विधीयते इति। तथा चोपसर्जनव्यावृत्तेरन्यथासिद्धौ किं महासंज्ञयेति चेत्?

न, 'अतिसर्वाय' इत्यादिवारणस्य तदेकसाध्यत्वात् । न हीदम् "अनुपसर्जनात्" (पा०सू०४-१-१४) इत्यनेन साधयितुं शक्यते । एतदपरितोषादेव हि भाष्ये पक्षान्तराश्रयणमिति दिक् । एवञ्च "अनुपसर्जनात्" (पा०सू०४-१-१४) इति सूत्रं परिभाषात्वेनापि नोपयुज्यते इत्यर्थात्प्रत्याख्यानमेव भवतीत्यवधेयम् ।

स्यादेतत्, कौम्भकारेयसिद्धये सूत्रमारम्भणीयम् तत्र हि कुम्भकारीशब्दादेव ढगुत्पादयितव्यः। अन्यथा कुम्भेत्युकारस्य वृद्धिर्न स्यात्। तथाच विशिष्टस्य स्त्रीप्रत्ययान्तताप्येष्टव्या । सा च तदैव निर्वहति। यदि "टिड्ढाणञ्" (पा०सू०४-१-१५) इति सूत्रे प्रत्ययग्रहणपरिभाषयाऽणित्यनेनाणन्तग्रहणे तेन च प्रातिपदिकविशेषणादण्णन्तान्तं प्रकृतिः स्यात् । तच्च "समासप्रत्ययविधौ प्रतिषेधः" (का०वा०) इति "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न" (प०भा०३१) इति च प्रतिषेधाद् दुर्लभम् । "अनुपसर्जनात्"(पा०सू०४-१-१४) इत्युपसर्जननिषेधसामर्थ्यात्तु प्रधानेन तदन्तविधौ ज्ञापिते कौम्भकारेयः सिद्ध्यतीति स्पष्टमेव । न च "कृद्ग्रहणे गतिकारकपूर्वस्यापि" (प०भा०२८) इति परिभाषया कुम्भकारशब्दादेव स्त्रीप्रत्ययोऽस्त्विति वाच्यम्, अणिति हि तद्धितोऽपि गृह्यते । औपगवीति यथा । "कृद्ग्रहणे" (प०भा०२८) इति परिभाषा तु कृन्मात्रग्रहणे प्रवर्त्तते न तु कृदकृद्ग्रहणेऽपि एवमर्थमेवेदं सूत्रमिति भाष्यकृतैव चतुर्थे स्थापयिष्यते । तत्कथमिहोक्तम् "अनुपसर्जनात्" (पा०सू०४-१-१४) इत्ययं योगः प्रत्याख्यायते इति ?

अत्रोच्यते, चतुर्थे सूत्रकाराभिप्रायवर्णनमात्रं करिष्यते । निष्कर्षे तु क्रियमाणे सूत्रवैयर्थ्यमेवायातीत्याशयेनेह भगवतोक्तं प्रत्याख्यायते इति । तथाहि, कारशब्दान्ङीबुत्पत्तावपि कौम्भकारेयः सिध्यत्येव "ष्यङः सम्प्रसारणम्" (पा०सू०६-१-१३) इत्यत्र भाष्यकृता पठिष्यमाणया वाचनिक्या "स्त्रीप्रत्यये चानुपसर्जनेन" (प०भा०२६) इति परिभाषयाऽनुपसर्जने स्त्रीप्रत्यये तदादिनियमनिषेधेन कुम्भकारीशब्दाड्ढगुत्पत्तेः । अत एव हि 'परमकारीषगन्धीपुत्रः इत्यत्र ष्यङन्तस्योच्यमानं सम्प्रसारणं परमकारीषगन्ध्याशब्दस्यापि भवत्येव । न चैवम् 'अतिकारीषगन्धापुत्रः' इत्यादावतिप्रसङ्गः । "अनुपसर्जन इत्युक्तत्वेनोपसर्जने तदादिनियमसत्त्वात्। न चैवम् 'अर्धपिप्पली' इत्यादौ हल्ङ्यादिलोपो न स्यादिति वाच्यम्, हल्ङ्यादिसूत्रे दीर्घग्रहणसामर्थ्येन तत्रोपसर्जनेनापि तदादिनियमो नास्तीति ज्ञापितत्वात् ।

वस्तुतस्तु निष्कौशाम्ब्यादौ समुदायस्याङ्याबन्तत्वेऽप्यवयवस्य ङ्याबन्ततया ततः परस्य सोर्लोपप्राप्तेर्नैतज्ज्ञापकम् । अर्द्धपिप्पल्यादावप्यवयवस्य ङ्यन्ततयैव निर्वाहः । न च विहितविशेषणता वक्तुं शक्या 'या' 'सा' इत्यादावव्याप्तेः । न च तत्र हलन्तात् विहितत्वेन निर्वाहः 'कर्त्ता' 'हर्त्ता' इत्यादावलोपापत्तेः, 'यः' 'सः' इत्यादौ लोपापत्तेश्च । यद्वा, सुतिसीतिप्रत्ययैः प्रकृतिराक्षिप्यते हलन्त्यसूत्रे कैयटग्रन्थनिर्वाहाय विवरणे तथैव वर्णनात् । एवञ्च ज्ञापकं सुस्थमेकदेशस्याप्रकृतित्वात् । अत एव पञ्चमसमासौ "गोस्त्रियोरुपसर्जनस्य" (पा०सू० १-२-४८) इति सूत्रे च कैयटेन ज्ञापकत्वपक्ष एवोक्तः। ननूभयथापि 'माला दृष्टा' इत्यादौ समुदायादावन्तत्वप्रयुक्तः सुः स्यात्ततश्चैकपद्यैकस्वर्योरापत्तिः । एकवाक्यतया विधिरिति पक्षेऽपि 'पचतिकल्पम्' इत्यादिसिद्धये एकवचनमुत्सर्ग इत्यस्यावश्याश्रयणीयत्वादिति चेत् न, ङ्याब्ग्रहणस्यान्यार्थतया यथाकथञ्चित्प्रातिपदिकग्रहणे लिङ्गविशिष्टग्रहणेन ङ्याबन्तत्वात्सुबुत्पत्तेश्च वक्ष्यमाणत्वात् । इह च समुदायस्याप्रातिपदिकत्वात् । अर्थवत्समुदायानां समासग्रहणं नियमार्थमिति हि स्थास्यति । न चैवमपि कदाचित्कारीशब्दात् ढक् स्यादेवेति वाच्यम् एकाज्द्विर्वचनन्यायेन समुदायादेवोत्पत्तेः, कुम्भेनैकार्थीभूतस्य निष्कृष्यापत्येन योग इति वक्तुमशक्यत्वाच्च । किञ्च सूत्रमारभमाणस्याप्येषैव गतिः । 'औपगवी' इत्यादाविव केवलात्कारशब्दादपि कदाचिन्ङीप्प्रसङ्गेन कौम्भकारेये पाक्षिकदोषस्य त्वत्पक्षेऽपि तुल्यत्वात् ।

स्यादेतत्, अक्रियमाणेऽस्मिन् सूत्रे 'कुम्भकारी' इत्यत्र ङीबेव न स्यात् । कुम्भेनैकार्थीभूतस्याण्णन्तस्य स्त्रीत्वेनायोगात् । यस्य च स्त्रीत्वेन योगो विशिष्टस्य, न तदण्णन्तम् । तस्मादमहत्पूर्वादिति निषेधेन ज्ञाप्यमानस्तदन्तविधिरुत्तरत्राप्यभ्युपगन्तव्यः । स च यथा पूर्वत्रोपसर्जनेनापि भवति "न षट्स्वस्रादिभ्यः" (पा०सू०४-१-१०) प्रियपञ्चा द्रौपदी, "वनो र च" (पा०सू०४-१-७) अतिधीवरी इति, तथा टिदादावपि स्यात् । ततश्च 'बहुकुरुचरा' इत्यादवतिप्रसङ्गः । अतो निषेधसूत्रमिदं सार्थकम् । ननु पूर्वत्रोपात्तं तदन्तं च स्त्रियामित्यनेन विशेष्यते "टिड्ढाणञ्" (पा०सू०४-१-१५) इत्यादौ तूपात्तं टिदादिकमेव तेन 'बहुकुरुचरा' इत्यादौ टिदादेरस्त्रीत्वान्न ङीप् । 'कुम्भकारी' इत्यादौ त्वण्णन्तस्य स्त्रियां वृत्तेस्तदन्तादपि ङीप् भविष्यतीति चेत् ? न, एतद्विषयविभागस्य दुरूहतया तज्ज्ञानार्थमेव सूत्रारम्भस्योचितत्वात् । नैतदेवम्, आरब्धेऽप्यस्मिन्सूत्रे व्याख्यानस्यैव शरणीयत्वात् ।

अन्यथा 'पञ्चाजी' इत्यत्राजानामस्त्रीत्वेऽपि तदन्तस्य स्त्रियां वृत्त्या टाप्प्रसङ्गात्। अतो विशेषणविशेष्यभावं प्रति कामचाराद् "अजाद्यतष्टाप्" (पा०सू०४-१-४) इत्यत्र "टिड्ढाणञ्" (पा०सू०४-१-१५) इत्यादौ चोपात्तं स्त्रीत्वेन विशेष्यते "वनो र च" (पा०सू०४-१-७) इत्यादौ तूपात्तं तदन्तं चेति सकलेष्टसिद्धेः सूत्रं व्यर्थमेव।

स्यादेतत्, तदन्तविधिज्ञापनार्थमेवेदं सूत्रमारम्भणीयम्। न च 'अमहत्पूर्वा' (का० वा० प०) इत्यनेनैव तत्सिद्धिरिति वाच्यम्, तस्य ज्ञापकत्वायोगात्। 'पञ्चाजी' इत्यादिसिद्ध्यर्थमजादिभिः स्त्रीत्वं विशेष्यते इति हि वक्ष्यते। तथाच 'महाशूद्री' इत्यत्र समुदायस्य स्त्रियां वृत्तावप्यवयवस्यातथात्वेन सत्यपि तदन्तविधौ टाप् न प्राप्नोतीति कथं तदन्तविधिं ज्ञापयित्वा निषेधः पर्यवस्येत्? मैवम्, इतरैरजादिभिः स्त्रीत्वविशेषणेऽपि शूद्रशब्देनाविशेषणात्। एवञ्च स्पष्टमेव ज्ञापकपर्यवसानम्। न चैवं 'पञ्चशूद्री' इत्यत्रापि प्रसङ्गः जातिरित्यनेन शूद्रस्य विशेषणात्।

स्यादेतत्, "पूर्वसूत्रनिर्देशो वापिशलमधीत इति" इति कात्यायनोक्तरीत्या सूत्रं सार्थकम्। तथाहि, अप्रधानमुपसर्जनम्, तथैव पूर्वाचार्यसूत्रेषु लोके च व्यवहारात्। ततश्चाऽऽपिशलिना प्रोक्तम् "इञश्च" (पा०सू०४-२-११२) इत्यण्। ततोऽध्येत्र्यां "तदधीते" (पा०सू० ४-२-५९) इत्यण्। तस्य "प्रोक्ताल्लुक्" (पा०सू०४-२-६४) इति लुक्। आपिशला ब्राह्मणी। अत्र प्रोक्तार्थस्याणोऽप्रधानत्वात्तदन्तान्न ङीप्। अण् यः अः अनुपसर्जनमप्रधानमिति विशेषणात्। न चैवमप्यध्येत्र्यामुत्पन्नस्याणोऽनुपसर्जनतया तदाश्रयो ङीप् स्यादेवेति वाच्यम्, तस्य लुप्तत्वात्। न च प्रत्ययलक्षणं शङ्क्यम्, वर्णाश्रये तन्निषेधात्। "टिड्ढाणञ्" (पा०सू०४-१-१५) इत्यत्र ह्यत इत्यनुवर्तते। अणा च अकारो विशेष्यते। अण्योऽकार इति न तु विपरीतो विशेषणविशेष्यभावः। वर्णस्याप्राधान्ये प्रत्ययलक्षणापत्तेः 'अतृणेड्' इत्यत्र तृणहइम् वत्। ननु स्त्रियामित्यनेनाणो विशेषणान्नोक्तदोष इति चेत्? न, काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी, तामधीते काशकृत्स्ना ब्राह्मणी। अत्र द्वितीयेऽणि "प्रोक्ताल्लुक्" (पा०सू०४-२-६४) इति लुप्ते प्रथमोऽप्यण् स्त्रियामेवोत्पन्न इति तदन्ताद् ब्राह्मण्यां वर्तमानात् ङीप् स्यात्। तस्मात्प्रधानाद्यथा स्यादप्रधानान्मा भूदित्येतदर्थमारम्भणीयं सूत्रमिति।

अत्रोच्यते, अध्येत्र्यामभिधेयायामण ईकारेण भवितव्यम्। यश्चे-

हाध्येऽग्रामणुत्पन्नः स लुप्त एव । यश्च श्रूयते तस्मादीकार उत्पन्नो लुप्तश्चेति पुनर्न भवति सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात् । तस्माद् "अनुपसर्जनात्" (पा०सू०४-१-१४) इत्ययं योगः प्रत्याख्यात इति भगवदुक्तिर्निर्बाधैवेति दिक् ।

सर्वादयश्च पञ्चत्रिंशत्—सर्व, विश्व, उभ, उभय, डतर, डतम, अन्य, अन्यतर, इतर, त्वत्, त्व, नेम, सम, सिम, पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवतु, किम्, इति । तत्र सर्वविश्वशब्दौ कृत्स्नपर्यायौ सर्वशब्दस्य "स्वाङ्गशिटाम्" (फि०सू०२-२७) इत्याद्युदात्तत्वे प्राप्तेऽन्तोदात्तत्वं गणे निपात्यते । तेन सर्वेषां विकार इत्यत्र "अनुदात्तादेरञ्" (पा०सू०४-२-४४) सिद्धः । स ह्यनुदात्तादिप्रकृतिकाद्विधीयते इति ङ्याप्सूत्रे भाष्ये स्थितम् । प्रयोगे तु "सर्वस्य सुपि" (पा०सू०६-१-१९१) इत्याद्युदात्त एव ।

उभशब्दो द्वित्वविशिष्टस्य वाचकः । अत एव नित्यं द्विवचनान्तः । यद्येवं तर्हि किमर्थमसौ सर्वादिषु पठ्यते ? न ह्यत्र स्मायादयः सम्भवन्ति । काकचोस्तु नास्ति रूपे स्वरे वा विशेषः । अवग्रहस्तु कप्रत्ययेऽपि पदकारैर्न क्रियते "चित्र इद्राजा राजकाः" "इदन्यके" इत्यादौ तथैव निर्णीतत्वात् । न च 'उभाभ्यां हेतुभ्याम्' 'उभयोर्हेत्वोः' इत्यत्र "सर्वनाम्नस्तृतीया च" (पा०सू०२-३-२७) इति पाक्षिकतृतीयासिद्ध्यर्थं इह पाठ इति वाच्यम्, "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्" (का०वा०) इति वार्तिकेन गतार्थत्वात् । न च वृत्तिकृता "सर्वनाम्नस्तृतीया च" (पा०सू०२-३-२७) इति सूत्रे पठितत्वादिदं वार्त्तिकमपि सर्वनामसंज्ञासापेक्षमेवेति वाच्यम्, भाष्ये "हेतौ" (पा०सू०२-३-२३) इति सूत्रे तस्य पठितत्वात् । अत एव 'अन्नेन कारणेन वसति' 'अन्नस्य कारणस्य' इत्युदाहृतं हरदत्तेन ।

अत्रोच्यते, उभशब्दस्तावद् द्विवचनमात्रविषयः । वृत्तौ तु द्विवचनलोपान्नासौ प्रयुज्यते, उभाभ्यां पक्षाभ्यां विनीतनिद्रा इति विग्रहे 'उभयपक्ष' (र०वं०५-७२) इत्यादिप्रयोगदर्शनात् । कथं तर्हि उभस्थाने उभयशब्दसिद्धिरिति चेत् ? इत्थम्, "उभादुदात्तो नित्यम्" (पा०सू०५-२-४४) इत्यत्रोभादिति योगो विभज्यते । अवयववृत्तेः संख्यावाचिन उभशब्दादवयविन्यर्थे अयच् स्यात् । उभयो मणिः । ततो "नित्यम्" उभशब्दाद् वृत्तिविषये नित्यमयच् स्यात् । अनिर्दिष्टार्थ-

त्वात्स्वार्थे। तदेतदुक्तं वार्त्तिककृता—"उभयोऽन्यत्र" इति। एवं स्थिते 'उभयतः' 'उभयत्र' इत्यादाविव कप्रत्ययेऽप्युभय एव प्राप्तः। अकचि तु 'उभकौ" इत्यादि सिध्यति। न चेहापि 'उभये' इति स्यादेवेति वाच्यम्, अकजर्थं सर्वादिषु पाठेनायचो बाधात्। अन्यथा पाठवैयर्थ्यापत्तेरिति दिक्। "स्वाङ्गशिटामदन्तानाम्" (फि०सू०२–२९) इत्याद्युदात्तार्थं पाठ इति तु न युक्तम्, गणे एवान्तोदात्तस्य निपात्यमानत्वात्। अन्यथा "उभे भद्रे जोषयेते' 'उभाउ नूनम्' 'उभाभ्यां देव सवितः' 'सपत्यत उभयोर्नृम्णमयोः' इत्यादावाद्युदात्तप्रसङ्गात्। उभयशब्दस्त्ववयवद्वयारब्धेऽवयविनि वर्त्तते 'उभयो मणिः' इति यथा। श्यामलोहिताभ्यामवयवाभ्यामारब्ध इत्यर्थः। तिरोहितावयवभेदत्वादेकवचनम्। 'उभयमेव वदन्ति मनीषिणः' इत्यादौ तु समुदायद्वयघटितः समुदायोऽर्थः। तिरोहितावयवभेदत्वं तु तुल्यमेव। यदा तु वर्गद्वयारब्धे महासमुदाये वर्त्तते तदावर्ग्यभिन्नेन वर्ग्यद्वयेन महाभेदविवक्षयोद्भूतावयवभेदत्वाद्बहुवचनान्त एव, उभये देवमनुष्याः।

तस्य मित्राण्यमित्रास्ते ये च ये चोभये नृपाः।

इति यथा। यदा तु प्रागुक्तरीत्या 'उभयो मणिः' इति व्युत्पाद्य तादृशमेव मणिद्वयं सह विवक्ष्यते, तदैकशेषेण द्विवचनं प्राप्नोति। अनभिधानात्तु न भवति। तथाच "तद्धितश्चासर्वविभक्तिः" (पा०सू०१–१–३८) इति सूत्रे "कृत्तद्धितानां ग्रहणं च पाठ" इति भाष्यमवतारयन्कैयट आह—"उभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तित्वम्" इति हरदत्तस्तु तस्मिन्नेव सूत्रे उभयशब्दाद् द्विवचनमङ्गीकृत्य पाठाश्रयणं तु 'पचतिकल्पं' 'पचतिरूपम्' इत्यादावतिप्रसङ्गं वारयितुमित्याह। इहायजादेशस्य स्थानिवद्भावेन तयप्प्रत्ययान्ततया "प्रथमचरम" (पा०सू०१–१–३३) इति सूत्रेण जसि विभाषा प्राप्नोति व्यवस्थितविभाषया पूर्वविप्रतिषेधेन वा नित्यमेव जसि सर्वनामतेति केचित्। विभक्तिनिरपेक्षत्वेनान्तरङ्गया नित्यसंज्ञया बहिरङ्गा वैकल्पिकी बाध्यते इति तु सिद्धान्तः। "न वेति विभाषा" (पा०सू०१–१–४४) इति सूत्रे भाष्यकारस्त्वाह—अयच् प्रत्ययान्तरमेव न त्वसौ तयस्यादेशः "उभादुदात्तः" (पा०सू०५–२–४४) इति सूत्रे तयपोऽननुवृत्तेः। न चैवम् 'उभयी' इत्यत्र "टिड्ढाणञ्" (पा०सू०४–१–१५) इति सूत्रेण तयबन्तत्वप्रयुक्तो ङीप् न स्यादिति वाच्यम्, तत्र मात्राजिति मात्रशब्दात्प्रभृत्यायचश्चकारेण प्रत्याहारग्रहणात्। एवञ्च तयब्ग्रहणमपि न तत्र कार्यम्। यद्वा, द्वयसजिति प्रत्याहारः। तथाच दघ्नञ्मात्रचोरपि ग्रहणं न कर्त्त-

व्यमिति महदेव लाघवम् । वस्तुतस्तु "प्रमाणे मात्रज्द्वयसज्दघ्नचः" इति पाठ्यमिति भाष्याशयः । तथा च ततोऽपि लाघवम् । न चैवं 'कति स्त्रियः' इत्यत्रातिप्रसङ्गः अत इत्यनुवृत्तेः, "न षट्स्वस्रादिभ्यः" (पा०सू०६-४-१३७) इति निषेधाद्वा । न चैवं 'तैलमात्रा' इत्यादावति-प्रसङ्गः, सदृशस्याप्यस्य प्रत्याहारेऽसन्निविष्टत्वादिति ।

अत्र कश्चित्, उभयेत्यर्थपरो निर्देशः । तेन "व्यर्था द्वयेषामपि मेदिनीभृताम्" (मा०का० ) इति माघप्रयोगः समर्थितो भवती-त्याह । तन्न, अर्थपरतायां वृत्तिकाराद्यभियुक्तवचनानुपलम्भात् । महा-कविप्रयोगबलादेव कल्प्यते इति चेत्? न, महाकविभिरेव तद्विपरी-तस्य बहुशः प्रयोगात् । तथाच माघः "गुरुद्वयाय गुरुणोः" (मा०का० २-६) इति । कालिदासोऽपि—"अस्मिन् द्वये रूपविधानयत्नः" इति । श्रीहर्षश्च—

अये ममोद्भासितमेव जिह्वया द्वयेऽपि तस्मिन्न नतिप्रयोजने । इति ।

तस्माद् द्वयं द्वैधमिष्यन्ति गच्छन्तीति द्वयेषस्तेषां द्वयेषामितीषेः क्विबन्तस्य रूपं बोध्यम् ।

यत्तु कश्चिदाह–चान्द्रवर्मणव्याकरणे द्वयशब्दस्यापि सर्वनामता-ऽभ्युपगमात्तद्रीत्याऽयं प्रयोग इति तदपि न, मुनित्रयमतेनेदानीं साध्व-साधुविभागस्तस्यैवेदानींतनशिष्टैर्वेदाङ्गतया परिगृहीतत्वात् । दृश्यन्ते हि नियतकालाः स्मृतयः । यथा कलौ पाराशरस्मृतिरित्यादीति "श-ताच्च ठन्यतावशते" (पा०सू०५-१-२२) इति सूत्रे सर्वैकवाक्यतया सिद्धान्तितत्वात् ।

डतरडतमौ प्रत्ययौ । यद्यपि "संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं ना-स्ति"(प०भा०-२७)तथापीह"प्रयोजनं सर्वनामाव्ययसंज्ञायाम्"(का०वा०) इति वाचनिकस्तदन्तविधिः, केवलयोः संज्ञायाः प्रयोजनाभावाद्वा । अन्यो भिन्नः । अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद् द्विबहुविषये निर्धारणे वर्त्तेते इति परपशायां कैयटः । तत्रान्यतमशब्दस्य गणे पाठाभावान्न सर्व-नामकार्यम् । नापि "अड्डतरादिभ्यः"(पा०सू०७-१-२५) इत्याद्यन्तर्गणका-र्यम् । तथाच प्रयुज्यते "न तावत्सामान्यादिष्वन्यतमं तमः" इति । शा-कटायनस्त्वन्यतरान्यतमौ डतरडतमान्तौ व्युत्पादितवान् । तन्मतेऽन्य-न्यतरशब्दपाठस्य नियमार्थत्वादन्यतमशब्दोऽन्तर्गणकार्यं सर्वनामसंज्ञा-कार्यं च न लभ्यते इति तद्व्याख्यातारः "इतरस्त्वन्यनीचयोः" (अ०को० ३-३-२००) इत्यमरः । त्वत्व इति द्वावप्यदन्तावन्यपर्यायौ तत्रैक उदात्तः, परोऽनुदात्तः । "उत त्वं मन्ये दंश पुत्रमुत्तमम्" इत्युदात्तस्य प्रयोगः ।

"उत त्वः पश्यन्" इत्यादिरनुदात्तस्येति विवेकः। केचित्तु त्वदिति तान्त-मेकं पठन्ति। तथाच जयदेवः प्रायुङ्क्त—"त्वदधरमधुरमधूनि पिबन्तम्" इति। त्वत्तोऽन्यस्या अधर इति षष्ठीतत्पुरुषो न तु तवाधरस्त्वदधर इति, "पश्यति दिशिदिशि रहसि भवन्तम्" इति पूर्ववाक्येन सहानन्वयापत्तेः। अनुदात्तश्चायम् "त्वत्वसमसिमेत्यनुच्चानि" (फि०सू०४-७८) इति फिट्सूत्रात। तथाच प्रयुज्यते "स्तरीरुत्वद्भवति सूत उत्वत्" इति। त्वदिति सर्वनामसु पठितोऽनुदात्तोऽयमन्यपर्याय इति तद्व्याख्यायां वेदभाष्यकाराः। इह प्रागुक्तरीत्योदात्तानुदात्तयोरकारान्तयोरनुदात्तस्य तकारान्तस्य च प्रामाणिकत्वं निर्विवादमेव। गणपाठे परं विप्रतिपत्तिः। तत्राप्यनुदात्तस्याकारान्तस्य गणपाठे न संशयः "उतो त्वस्मै तन्वम्" इत्यादिप्रयोगात्। अवशिष्टयोर्मध्ये कतरस्य गणे पाठ इति तु संशयोदाहृतप्रयोगाणां तत्रौदासीन्यात्। तस्मात्तान्तस्याकजादिकमुदात्तस्य वा स्मायादिकं क्वचिच्छाखायां प्रयुज्यते नवेति विभाव्य तत्वं निर्णेयं बहुश्रुतैरिति दिक्।

वस्तुतस्त्वाद्यस्य तान्तच्छेद एव युक्तः। अन्यथा ऐक्ष्वाकशब्द इव स्वरसर्वनाम्ना एकश्रुत्योभयसङ्ग्रहसम्भवात्त्वशब्दमेकमेवापठिष्यदिति ध्येयम्। 'त्वे वसूनि' 'त्वे रायः' इत्यादयस्तु शेप्रत्ययान्तस्य युष्मदः प्रयोगो न तु त्वशब्दस्य। पदकारैः प्रगृह्यत्वप्रयुक्तस्येतिशब्दस्य प्रयोगादिति स्थितं वेदभाष्ये।

नेम इत्यर्द्धे। प्रयोगश्च "प्रनेमस्मिन्ददृशे सोम" इति। समः सर्वपर्यायः। "नभन्तामन्यके समे"। "मानोवृकाय वृक्ये समस्मै"। "उरुष्याणो अघायतः समस्मात्"। "उतो समास्मिन्"। तुल्यपर्यायस्य तु समशब्दस्य न सर्वनामता "यथासंख्यमनुदेशः समानाम्" (पा०सू० १-३-१०) इति ज्ञापकात्। "क्त्मेजन्तः" (पा०सू०१-१-३९) इति सूत्रे "एते दोषाः समा भूयांसो वा"इति भाष्यकारप्रयोगाच्च। एतेन "समे यजेत"इति प्रयोगो व्याख्यातः।

सिमः कृत्स्ने च शक्ते च स्यान्मर्यादावबद्धयोः।

इति निघण्टुः। "आद्रात्रीवासस्तनुते सिमस्मै"। "उच्छुक्रमत्कमजते सिमस्मात्"। यद्यपीह "त्वत्वसमसिमेत्यनुच्चानि" (फि०सू०४-७८) इति प्राप्तं तथापि "सिमस्याथर्वणेऽन्त उदात्तः" (फि०सू०४-७९) इत्युदात्तता। अथर्ववेदप्रविष्टे मन्त्रे ऋग्वेदादिगतेऽपीत्यभियुक्तैर्व्याख्यातत्वादित्यवधेयम्।

पूर्वपरावरोत्तरापराः पञ्च दिक्कालयोस्तद्वच्छिन्ने च। पूर्वस्यां

दिशि पूर्वस्मिन्काले पूर्वस्यां वाच्याम् पूर्वस्मिन्गुरावित्यादि। दक्षिणा-धरशब्दौ दिशि तदवच्छिन्ने च। अर्थनियमश्चायं व्यवस्थायामित्युक्ते-र्गम्यते। स्वाभिधेयेनापेक्ष्यमाणस्यावधेर्नियमो हि व्यवस्था। पूर्वादि-शब्दानामुक्तोर्थो हि नियमेन कञ्चिदवधिमपेक्षते। "स्थागापापचो भावे" (पा०सू०३-३-२५) इति क्तिनि प्राप्ते ऽत एव निपातनादङ्। व्यवस्थायां किम्? दक्षिणा गाथकाः। प्रवीणा इत्यर्थः। 'अधरे ता-म्बूलरागः' 'उत्तरे प्रत्युत्तरे वा शक्तः'। कथं तर्हि "तथा परेषां युधि च" (र०वं३-२१) इति कालिदासः? "अपरे प्रत्यवतिष्ठन्ते" इ-त्यादि च? अत्राहुः, देशवाचितया व्यवस्थाविषययोरेव परापरशब्द-योरुपचाराच्छत्रौ प्रतिवादिनि च प्रयोगः। न चैवमुपसर्जनता। न हि लाक्षणिकत्वमुपसर्जनत्वं, किन्तु स्वार्थविशिष्टार्थान्तरसंक्रमः। स तु न वृत्तिप्रविष्टस्यापि प्रधानस्य न वा लाक्षणिकस्यापि वृत्तिमप्रविष्टस्य। अत एव 'तस्माद्वह्निमान्' इत्यादौ ज्ञानलक्षणापक्षेऽपि सर्वनामकार्यम्। तद्योऽहं सोऽसौ, योऽसौ सोऽहमित्यत्र भागत्यागलक्षणायामपि सर्व-नामकार्यप्रवृत्तिरिति। भूवादिसूत्रे 'एतान्यपीत्येतत्प्रतिपाद्यानि वस्तू-नीत्यर्थः' इति कैयटश्च। वस्तुतस्त्वत्र शत्रुत्वादिप्रकारकोबोधोऽनश्वा-दिशब्देभ्यो भिन्नत्वादेरिवार्थिकः शब्दात्तु देशान्तरनिष्ठत्वादिप्रकारक एवेति तत्त्वम्।

असंज्ञायाङ्किम्? उत्तराः कुरवः। सुमेरुमवधिमपेक्ष्य कुरुषूत्तर-शब्दो वर्त्तते इत्यस्तीह व्यवस्था। प्रसिद्धत्वात्तु नावधेः प्रयोगः। 'मेघो वर्षति' इत्यत्र जलस्य यथा। एवं 'दिशः सपत्नी भव दक्षिणस्याः' इत्यादावपि वस्तुतो व्यवस्थाऽस्तीति सर्वनामकार्यं सम्भवत्येव। न च संज्ञात्वान्निषेधः आधुनिकसङ्केतो हि संज्ञा। न च दिक्षु साऽस्तीति पञ्चमेऽस्ताति प्रकरणे कैयटहरदत्तादयः। अत्र दिक्षु चिरन्तनः कुरुषु त्वाधुनिकः सङ्केत इत्यत्र व्याख्यातृवचनमेव प्रमाणम्।

स्वशब्दस्य चत्वारोऽर्थाः आत्मा आत्मीयो ज्ञातिर्धनं चेति।

स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने।

(अ०को०३-३-२१९)

इत्यमरः। यद्यपि "स्वामिन्नैश्वर्ये" (पा०सू०५-२-१२६) इति सूत्रे ईश्वरत्ववाच्यपि स्वशब्दः स्वीकृतस्तथाप्यसौ मत्वर्थीयमनिच्प्रत्यय-मात्रविषयो न तु केवलः प्रयोगार्हः। तत्र ज्ञातिधनयोर्निषेधादात्मात्मी-ययोरेव संज्ञा। आख्याग्रहणं किम्? आत्मीयत्वं पुरस्कृत्य ज्ञातिधन-योरपि प्रवृत्तौ सर्वनामता यथा स्यात्। आत्मात्मीययोरित्येव तु वक्तु-मिहोचितम्। स्वस्मै इत्यादि। जसि विभाषाविधायकेऽष्टाध्यायीस्थे

सूत्रेऽप्येवम्। यत्तु तत्र स्वमात्मीयइत्येव वक्तुमुचितमात्मवाचिनो नपुंसकतया जसि विभाषायामुपयोगाभावादिति केचित्। तच्चिन्त्यम्, सूत्रसामर्थ्यादेवात्मन्यपि पुंस्त्वलाभात्। अत एवामरकोशेऽप्यात्मनीति पूर्वान्वयि, स्वमिति तूत्तरान्वयि। तथा च हेमचन्द्रः—

द्यौः स्वर्गनभसोः स्वो ज्ञात्यात्मनोः स्वं निजे धने। इति।

मेदिनीकारोऽपि—

स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीये स्त्रियां धने। इति।

वस्तुतस्तु "पूर्वपर"इत्यादित्रिसूत्र्यामर्थनिर्देशः पाठविशेषणम्। तेनेतरेषां पाठादेव पर्य्युदासः। तथाच "विभाषा जसि" (पा०सू०१-१-३२) "इति प्रकरणे "पूर्वादीनि नव"इत्येव लाघवात्कर्त्तव्यम्। त्रिसूत्री तु न पठनीयैवेति निष्कर्षः। अथवा गणपाठ एव पूर्वादिनवकपाठानन्तरं "विभाषा जसि" (पा०सू०१-१-३२) इति कर्त्तव्यं, पूर्वादीनि चार्थविशिष्टान्यनुवर्त्तनीयानि। न च सर्वादीनामप्यनुवृत्तिः शङ्क्या, नेमस्य जसि विभाषारम्भात्। यद्वा, 'जस्ङसिङीनां शिस्मात्स्मिनः" "पूर्वादिभ्यो नवभ्यो वा' "औङ आपः शी" "नपुंसकाच्च"इति सप्तमे न्यासः कर्त्तव्यः। परमार्थस्तु सप्तमे यथान्यासमेवास्तु। "पूर्वादिभ्यो नवभ्यो वा" (पा०सू०७-१-१६) इत्येतत्तु"जसः शी" (पा०सू०७-१-१७) इत्यत्रानुवर्त्य वाक्यभेदेन सम्भन्त्स्यते "वा छन्दसि" (पा०सू०६-१-१०६) इत्येतद्"अमि पूर्वः" (पा०सू०६-१-१०७) इत्यत्र यथा तथा चेयं त्रिसूत्री अष्टाध्याय्यां न पाठ्येति स्थितम्। असंज्ञायामिति तु न कार्यमन्वर्थसंज्ञया 'अभिव्यक्तपदार्था ये' इति न्यायेन वा संज्ञाया व्युदस्तत्वात्। अन्तरशब्दस्तु नानार्थः। तथा चामरः—

अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये।
छिद्रात्मीयविनाबहिरवसरमध्येन्तरात्मनि च॥

(अ०को०३-३-९४) इति।

तत्र बहिर्योगोपसंव्यानयोरेवार्थयोः संज्ञा। बहिरित्यनावृत्तो देशो बाह्यं चोच्यते। तत्राद्ये अन्तरे अन्तरा वा गृहाः। नगरबाह्याश्चाण्डालादिगृहा इत्यर्थः। द्वितीये नगराभ्यन्तरगृहा इत्यर्थः। उपसंव्यानशब्दोऽपि करणव्युत्पत्त्योत्तरीयपरः। कर्मव्युत्पत्त्या त्वन्तरीयपरः। उभयथापि बहिर्योगेण गतार्थत्वात् उपसंव्यानग्रहणं न कर्त्तव्यमिति भाष्ये स्थितम्। केचित्तु शाटकानां त्रये शरीरसंयुक्तस्य तृतीयस्य, चतुष्टये तु चतुर्थस्य तत्संयुक्तस्य वा, तृतीयस्य बहिर्योगाभावादुपसंव्यानग्रहणं कर्त्तव्यं शाटकयुगाद्यर्थमिति वदतो वार्त्तिककारस्याप्ययमेवाशय आदिशब्द-

बलादवगम्यते । भाष्यमते तु बहिर्योगग्रहणं स्वर्यते तेन "शीतोष्णाभ्यां कारिणि" (पा०सू०५-२-७२) इत्यादाविव गौणग्रहणात्परम्परया बाह्यसम्बद्धस्यापि भविष्यतीत्याहुः । सत्यपि बहिर्योगे पुरीविषयतायां न सर्वनामता "अपुरीति च वक्तव्यम्" इति वार्त्तिकात् । तद्धि गणसूत्रस्य शेषो न तु जसि विभाषाविधायकस्य, अत इत्यधिकृत्य जसः शीविधानादावन्तात्प्राप्त्यभावात् । अन्तरायां पुरि । प्राकाराद्बाह्यायां तदन्तर्वर्त्तिन्यां वेत्यर्थः । लिङ्गविशिष्टपरिभाषयैकादेशस्य पूर्वान्तग्रहणेन ग्रहणाद्वा प्राप्तिर्बोध्या ।

त्यद् , तद् , एतौ पूर्वोक्तपरामर्शकौ । तत्राद्यश्छान्दसः । 'एष स्य भानु' इति गणरत्नकारस्तन्न, तथा सति "स्यश्छन्दसि बहुलम्" (पा० सू०६-१-१३३) इति सूत्रे छन्दोग्रहणवैयर्थ्यापत्तेः । यद् उद्देश्यसमर्पकः । एतदिदमौ प्रत्यक्षोपस्थित । अदस् व्यवहिते ।

> एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा ।
> साधारणे समाने च संख्यायां च प्रयुज्यते ॥

द्विशब्दो द्वित्वविशिष्टऽलिङ्गः । सम्बोधनैकविषयश्च युष्मदर्थः । अस्मच्छब्दस्तूच्चारयित्रर्थः । सलिङ्गः संबोधनव्यभिचारी च भवत्वर्थः । "भातेर्डवतुः" (उ०सू०१६६) इति व्युत्पादितोऽयम् । यद्यप्यस्मात्स्मायादयो न सम्भवन्ति, "सर्वनाम्नस्तृतीया च" (पा०सू०२-३-२७) इति "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्" (का०वा०) इत्यनेनैव गतार्थे, तथापि

> फिञद्रिमयटः पूर्वनिपातष्ठक्छसौ तथा ।
> आत्वैकशेषष्यञ्विरहा अकच्च भवतः फलम् ॥

फिञ्—भावतायनिः, त्यदादित्वेन वृद्धत्वाद् "उदीचां वृद्धाद्" (पा०सू०४-१-१५७) इति फिञ् । भवन्तमञ्चतीति भवद्र्यङ्, "विष्वग्देवयोश्च" (पा०सू०६-३-९२) इति चकारेण सर्वनाम्नोनुकर्षणादद्र्यादेशः । भवन्मयः, "नित्यं वृद्धशरादिभ्यः" (पा०सू०४-३-१४) इति मयट् । भवन्मित्रः, "सर्वनामसंख्ययोः" (का०वा०) इति प्राङ्निपातः । भावत्कः, भवदीयः, "भवतष्ठक्छसौ" (पा०सू०४-२-११५) इत्यत्र हि शत्रन्तनिवृत्तये वृद्धादित्यनुवर्त्यते । आत्वम्—भवादृक्, "आ सर्वनाम्नः" (पा०सू०६-३-९१) इत्यात्वम् । देवदत्तश्च भवांश्च भवन्तौ "त्यदादीनि सर्वैः" (पा०सू०१-२-७२) इत्येकशेषः । 'भवतो भावो भवत्ता' इत्यत्र सर्वनामसंज्ञया गुणवचनसंज्ञाबाधात् ष्यञ्विरहोऽपि फलम् । अन्यथा हि भावत्यमिति स्यात् । अकच्च-भवकान् , "सर्वनाम्नो वृत्तिमात्रे" (भा०इ०) इति पुंवद्भावोऽपि फलम्—भवत्याः पुत्रो भवत्पुत्रः ।

किंशब्दः प्रश्ने आक्षेपे चेति दिक् ।

वृत् सर्वादिगणो वृत्तः समाप्त इत्यर्थः । "यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुतस्थे" इत्यत्र त्ववममध्यमपरमशब्देषु छन्दसि सकलविधिव्यत्ययात् स्याडागमः। न त्वेतदनुरोधेन सर्वादेराकृतिगणत्वमिति मन्तव्यम् । अत एव छन्दस्यपि सर्वनामकार्यमेषां न नियतम् । "ये मध्यमाः पितरः," "विष्णोः पदे परमे" इत्यादौ तदभावात् । "व्यूहाबुभौ तावितरेतरस्मात्," "अन्योन्येषां पुष्करैरामृशन्त" इत्यादि तु द्विः-प्रयोगो द्विर्वचनमिति पक्षे तदन्तविधिना सिद्धम्। स्थाने द्विर्वचनपक्षे तु स्थानिवद्भावेनेत्यवधेयम् ।

ननु वस्नसादाविव प्रकृतिप्रत्ययविभागस्य संमोहात्स्थानिवद्भावेनापि पदत्वमात्रं स्यात् , नतु सर्वनामता, सुब्विशिष्टे स्थानिनि तद्विरहादिति चेत् ? न, सन्नियोगशिष्टत्वेनान्तरङ्गमपि द्वित्वं बाधित्वा "समासवच्च बहुलम्" ( का० वा० ५० ) इति समासवद्भावप्रयुक्तस्य लुकः प्रथमं प्रवृत्तेः, "अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते" (प०भा०५२) इति वक्ष्यमाणत्वात् , ततः प्रत्ययलक्षणेन पदत्वमाश्रित्य द्वित्वप्रवृत्तेः । एतेन 'तत्तत्तामसभूतमीतय' इत्यादि व्याख्यातम्। नन्वस्तूक्तरीत्या 'इतरेतरस्मात्' इत्यस्य सिद्धिः, 'अन्योन्येषाम्' इति तु कथम् ? न ह्यत्र समासवद्भावोऽस्तीति चेत् ? तत्र प्रथमैकवचनान्तत्वं पूर्वपदस्य द्वितीयादयस्तु परपद इति वचनबलेनैव प्रकृतिप्रत्ययविभागस्य सिद्धेरिति दिक् ।

"वन्येतरा जानपदोपदाभिः" (र०वं०४१) इति तु वन्या इतरे येभ्य इति बहुव्रीहिणा समाधेयम् । "तपरः" (पा०सू०१-१-७०) इति ज्ञापकात्सर्वनाम्नः पूर्वनिपातोऽनित्यः । "पुत्रादेकात्पराजयः" इति तु प्राधान्यादिना आख्यातादित्यर्थे आख्यातणिजन्ताद् घञर्थे कप्रत्यये लाक्षणिकस्य सर्वनामताविरहात्समाधेयम् ।

विभाषा दिक्समासे बहुव्रीहौ (पा०सू०१-१-२८) । अत्र सर्वनामसंज्ञा वा स्यात् । उत्तरपूर्वस्यै । उत्तरपूर्वायै । "दिङ्नामान्यन्तराले" (पा०सू०२-२-२६) इति प्रतिपदोक्तो दिक्समासो गृह्यते । तेनेह न–या पूर्वा सैवोत्तरा यस्य भ्रान्तस्य तस्मै पूर्वोत्तराय । एवं च बहुव्रीहिग्रहणं न कर्तव्यम् , दक्षिणोत्तरपूर्वाणामिति द्वंद्वस्य लक्षणप्रतिपदोक्तपरिभाषयैव वारणात् । ननूत्तरार्थं तत् । तथाहि, "एकं बहुव्रीहिवत्" (पा०सू०८-१-९) "आबाधे च" (पा०सू०८-१-१०) इति द्विर्भावे 'एकैकस्मै देहि' 'दक्षिणदक्षिणस्यै' इत्यादीष्यते । तत्रोत्तरसूत्रेण निषेधो

मा भूत्। बहुव्रीहिरेव यो बहुव्रीहिर्न त्वतिदिष्टबहुव्रीहिस्तत्रैव यथा स्यादिति। मैवम्, समासग्रहणानुवृत्त्याप्युक्तार्थलाभात् उत्तरसूत्रस्य प्रत्याख्यानाच्च।

न बहुव्रीहौ (पा०सू०१-१-२९)। बहुव्रीहौ कर्त्तव्ये सति सर्वनामसंज्ञा न स्यात्। त्वकं पिता यस्य त्वत्कपितृकः। अहकं पिता यस्य मत्कपितृकः। द्वकौ पुत्रौ यस्य द्विकपुत्रः। इह हि समासप्रवृत्तेः प्रागन्तरङ्गतयाऽकच् प्रवर्त्तेत, स च समासे सत्यपि श्रूयेत, 'अतिक्रान्तो भवकन्तमतिभवकान्' इतिवत्। न हि वृत्तेः प्रागप्युपसर्जनताऽस्ति। ननु यदि प्रागेव प्राप्नुवन्नकच् निवर्त्तितस्तर्हि 'त्वकम्पिता' इत्यादि कथं विगृह्यते? त्वत्कः पितेत्यादि कप्रत्ययदर्शनौचित्यादिति चेत्? भ्रान्तोऽसि। न हि यस्मिन्प्रक्रियावाक्ये उत्प्रेक्षामात्रगोचरे बहुव्रीहिसंज्ञा प्रवृत्ता सर्वनामसंज्ञा च निषिद्धा तत्प्रयुज्यते, अपरिनिष्ठितत्वात्; किन्तु तत्सदृशं बहुव्रीहिसंज्ञाशून्यं वाक्यान्तरमेव। यदाह कैयटः। "अप्रयोगसमवायि यत्प्रक्रियावाक्यं तत्रायं निषेधो न तु लौकिके, तस्य पृथगेव प्रयोगात्तादर्थ्याभावात्" इति। अत एव दृष्टाः सर्वे येनेत्येव विग्रहो न तु सर्वा इति। राज्ञः पुरुष इत्यादिविग्रहेपि ह्येषैव गतिः, अलौकिके वाक्ये "अल्लोपोऽनः" (पा०सू ६-४-१३४) इत्यादेरप्रवृत्तेः; "अन्तरङ्गानपि विधीन्" (प०भा०५२) इति सिद्धान्तात्। अत एव 'गोमत्प्रियः' इत्यादौ सोर्लुगेव न तु हल्ङ्यादिलोपः। तेन नुम्दीर्घादयो न प्रवर्त्तन्ते। भाष्ये 'त्वकत्पितृकः' इत्याद्येव रूपं स्वीकृत्येदं सूत्रं प्रत्याख्यातम्। यदाह—

अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयौ इति।

अङ्गम्प्रतीति प्रत्यङ्गम्। अनकारान्तेषु त्वकत्पितृको द्विकपुत्र इत्यादिष्वकच्। विश्वप्रिय इत्यादिष्वदन्तेषु तु "स्वाङ्गशिटामदन्तानाम्" (फि०सू०१-२९) इत्याद्युदात्ततेति विषयविवेको बोध्य इत्यर्थः। यथोत्तरं मुनीनां प्रामाण्यात् भाष्योक्तैव व्यवस्थेत्यवधेयम्।

तृतीयासमासे (पा०सू०१-१-३०)। अत्र सर्वनामता न स्यात्। मासपूर्वाय। लक्षणप्रतिपदोक्तपरिभाषया "पूर्वसदृश" (पा०सू०२-१-३१) इति समासो गृह्यते, न तु "कर्तृकरणे कृता" (पा०सू०२-१-३२) इत्यादिरपि। तेन 'त्वयका कृतं त्वकत्कृतम्' इत्यादौ निषेधो न। समास इत्यनुवर्त्तमाने पुनः समासग्रहणं गौणार्थस्यापि सङ्ग्रहार्थम्। तेन समासार्थवाक्येऽपि निषेधः। मासेन पूर्वाय। अयं च लौकिके वाक्ये निषेधो न तु "न बहुव्रीहौ" (पा०सू०१-१-२९) इतिवदलौकिके, अका-

रान्ते काकचोरविशेषेणानकारान्तानां प्रतिपदोक्ततृतीयासमासविरहेण चालौकिकं निषेधस्य वैयर्थ्यापत्तेः ।

द्वन्द्वे च (पा०सू०१-१-३१) । इहोक्तसंज्ञा न स्यात् । पूर्वापराधराणाम् । समुदायस्यायं निषेधो न त्ववयवानाम् । तथाहि, त्यदादीनां तावद् द्वन्द्व एव नास्ति "त्यदादीनि सर्वैर्नित्यम्" (पा०सू०१-२-७२) इत्येकशेषेण बाधितत्वात् । न च द्वन्द्वे कृते एकशेष इति भ्रमितव्यम्, एकवद्भावस्वरसमासान्तप्रसङ्गेन द्वन्द्वापवादत्वपक्षस्यैव स्थापयिष्यमाणत्वात् । अन्यथा 'तेषाम्' इत्यादावपि "द्वन्द्वे च" (पा०सू०१-१-३१) इति निषेधापत्तेश्च । त्यदादिभ्यः प्राचीनास्त्वदन्ताः । तत्र काकचोरविशेषः । "सर्वनाम्नो वृत्तिमात्रे" (भा०इ०) इति पुंवद्भावस्तित्वष्यते एवदक्षिणोत्तरपूर्वाणामिति । किञ्च सर्वनामसंज्ञानिषेधेनाप्यसौ दुर्वारः । तत्र हि मात्रग्रहणं क्वचित्सर्वनामत्वेन दृष्टानां सम्प्रत्यसर्वनामत्वेऽपि पुंवद्भावार्थम् । अत एव 'दक्षिणपूर्वायै' इत्यत्र संज्ञाभावेऽपि पुंवद्भावः । नन्ववयवे सञ्ज्ञा चेन्न निषिद्धा तर्हि 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' (प०भा०प०२९) इति वचनाद् 'दक्षिणोत्तरपूर्वाणाम्' इत्यादौ सुडागमादिप्रसङ्गः । न च निषेधवैयर्थ्यम् अनाङ्गस्य त्रलादेर्व्यावृत्त्या चरितार्थत्वादिति चेत्? न, अङ्गकार्येषु सर्वनाम्नो विहितस्यामो ङेङसिङ्योरित्यादिक्रमेण व्याख्यानात् । विहितविशेषणत्वस्याश्रयणे प्रमाणं तु 'दक्षिणोत्तरपूर्वाणाम्' इति भाष्यप्रयोग एव । तस्मात्समुदायस्यैवायं प्रतिषेधो नावयवानामिति स्थितम् । अत एव सर्वनामसञ्ज्ञायां तदन्तविधिसद्भावे "द्वन्द्वे च" (पा०सू०१-१-३१) इति ज्ञापकमित्युक्तम् ।

विभाषा जसि (पा०सू०१-१-३२) । जसीति कार्यापेक्षयाऽधिकरणसप्तमी । जसाधारं यत्कार्य्यं शीभावाख्यं तत्र कर्तव्ये द्वन्द्वे उक्ता संज्ञा वा स्यात् । वर्णाश्रमेतरे । वर्णाश्रमेतराः । शीभावं प्रत्येवेयं विभाषेति व्याख्यातम् । तेनाकच् न भवति तस्मिन्कर्त्तव्ये "द्वन्द्वे च" (पा०सू०१-१-३१) इति नित्यं निषेधात् । अतस्तत्र कप्रत्यय एव भवति । वर्णाश्रमेतरकाः । केन व्यवधानान्नेह शीभावः अकचि कृते तु तन्मध्यपतितन्यायेन शीभावः स्यादेव ।

प्रथमचरमतयाल्पार्द्धकतिपयनेमाश्च (पा०सू०१-१-३३) । एते जसः कार्यं प्रति सर्वनामसञ्ज्ञा वा स्युः । प्रथमे, प्रथमाः, इत्यादि । शेषं रामवत् । नेमे, नेमाः शेषं सर्ववत् । इहापि प्राग्वच्छीभावं प्रत्येव सञ्ज्ञाविकल्पः । तेन 'प्रथमकाः' इत्यादावकज् न । अन्यथा 'प्रथमके'

इति स्यात् । उभयशब्दस्य तु नेयं विभाषा किन्तु नित्या संज्ञेति गण-व्याख्याप्रसङ्गेनोपपादितम् ।

पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् (पा० सू०१-१-३४) ।

स्वमज्ञातिधनाख्यायाम् (पा०सू०१-१-३५) ।

अन्तरं बहिर्योगोपसंव्यानयोः (पा०सू०१-१-३६) । एषा त्रिसूत्री गणमध्येऽपि पठ्यते । सा च व्याख्याता । तथा यस्मिन्नेवोपाधौ नित्या संज्ञा प्राप्ता तत्रैव जसि विभाषाऽनया विधीयते । पूर्वे, पूर्वाः, इत्यादि । स्वे, स्वाः, आत्मीया इत्यर्थः, आत्मान इति वा । इह त्रिसूत्र्यां यद्वक्तव्यं तत्सर्वं गणव्याख्यावसर एवोक्तम् । "विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानम्" (का०वा० ) । द्वितीयस्मै, द्वितीयाय, इत्यादि । एकादेशस्य पूर्वान्तग्रहणेन ग्रहणाल्लिङ्गविशिष्टपरिभाषया वा द्वितीयस्यै, द्वितीयायै, इत्याद्यपि सिद्धम् । एवञ्च "विभाषा द्वितीयातृतीयाभ्याम्" (पा०सू०७-३ १०५)इति सूत्रं न कर्त्तव्यं भवति, अर्थवत्वात्, प्रतिपदोक्तत्वाच्च । "द्वेस्तीयः"(पा०सू०५-२-५४) "त्रेः सम्प्रसारणं च"(पा०सू०५-२-५५)इत्ययमेव गृह्यते । तेनेह न-"प्रकारवचने जातीयर्" (पा०सू०५-३-६९) पटुजातीयाय । "जात्यन्ताच्छ बन्धुनि" (पा०सू०५-४-९) ब्राह्मणजातीयाय । मुखपार्श्वशब्दाभ्यां तसन्ताभ्यां "गहादिभ्यश्च" (पा०सू०४-२-१३८) इति छः, मुखतीयाय । पार्श्वतीयाय । तथा 'द्वितीयाय भागाय' इत्यत्रापि न भवति "पूरणाद्भागे तीयादन्" (पा०सू०५-३-४८) इत्यनि कृते "यस्येति च" (पा०सू०६-४-१४८) इत्यकारलोपे च सति तीयस्य लाक्षणिकत्वादिति दिक् ॥ इति सर्वनामसंज्ञाप्रकरणम् ॥

स्वरादिनिपातमव्ययम् (पा०सू०१-१-३७) । स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः । "प्राग्रीश्वरान्निपाताः" (पा०सू०१-४-५६) इत्यारभ्य "अधिरीश्वरे" (पा०सू०१-४-९७) इत्येतत्पर्यन्तं ये वक्ष्यन्ते ते निपाताः । नन्वेवं चादिष्वेव स्वरादयोऽपि पठ्यन्तां, प्रकृतसूत्रं च त्यज्यताम्, अव्ययप्रदेशेषु निपातशब्देनैव व्यवह्रियतामिति चेत् ? न, चादीनां ह्यसत्त्ववाचिनामेव निपातसंज्ञा । यथा "लोधं नयन्ति पशु मन्यमानाः" इत्यत्र सम्यगर्थस्य पशुशब्दस्य, न तु सत्ववाचिनाम् यथा "पशूस्तांश्चक्रे वायव्यान्" ( ऋ०वे० ) इत्यादौ । स्वरादीनां तु सत्त्ववचनानामव्ययसंज्ञेष्यते । "स्वस्ति वाचयति" "स्वः पश्य" इति यथा । अथ "प्राग्रीश्वरान्निपाताः" "स्वरादिनि" "चादयोऽसत्त्वे" इति कुतो न सूत्रितमिति चेत् ? न, एवं हि सति "निपात एकाजनाङ्" (पा०सू०

१-१-१४) इति प्रगृह्यसंज्ञा स्वरादीनामप्येकाचां प्रसज्येत । सन्ति हि स्वरादिषु "किमोऽत्" (पा०सू०५-३-१२) "दक्षिणादाच्" (पा०सू०५-३-३६) इत्येकाचौ तद्धितौ । केन्प्रभृतयस्तु कृत एकाचः । यदि तु "चादिरेकाजनाङ्" इति क्रियते, तदा चादीनामसत्त्ववचनत्वं विशेषणं न लभ्येत । ततश्चास्यापत्यमिमदनस्तस्य सम्बोधनम् "ए अव" इत्यत्र प्रगृह्यत्वं स्यात् । ननु "चादयोऽसत्त्वे" (पा०सू०१-४-५७) इत्यत्रासत्वइति पाठविशेषणम् । तथाहि, चादय इति योगो विभज्यते । चादयो निपातसंज्ञाः स्युः । ततो ऽसत्वे । इह शास्त्रे चादयो ऽसत्त्वे ज्ञेयाः । ततश्च चादीनां सत्त्ववाचिनां पाठात्पर्युदासस्तेन 'ए अव' इत्यादौ न दोषः । एवं चोभे संज्ञे न ? कर्तव्ये अव्ययं, निपाता इति । किन्तु "प्राग्रीश्वरान्निपाताः" इति वा "अव्ययानि" इति वा सूत्र्यताम् । ततः स्वरादीनि । "तद्धितश्चासर्वविभक्तिः"(पा०सू०१-१-३८) इत्यादि "अव्ययीभावश्च" (पा०सू०१-१-४१) इत्यन्तं सूत्र्यताम् । ततः "चादयो ऽसत्त्वे" (पा०सू०१-४-५७) इत्यारभ्य यावद् "अधिरीश्वरे" (पा०सू० १-४-९७) "विभाषा कृञि" (पा०सू०१-४-९८) इति । तत्र यस्मिन्प्रदेशे निपातग्रहणं तत्र चादिग्रहणमस्तु, अव्ययप्रदेशेऽव्ययग्रहणं वेति। उच्यते, अव्ययसंज्ञाविरहेऽन्वर्थसंज्ञाबललभ्यं वक्ष्यमाणप्रयोजनं न सिध्येत् । निपातसंज्ञाविरहे तु शान्तनवाचार्यप्रणीतस्य "निपाता आद्युदात्ताः" (फि०सू०४-८०)इति फिट्सूत्रस्य विषयविभागो न लभ्येत । अथ फिट्शिट्नबादिशब्दानामिव निपातशब्दस्याप्यन्यत एवार्थाध्यवसायः तर्ह्यव्ययसंज्ञामात्रेण निर्वाहः सुकर एवेत्यवधेयम् ।

महासंज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थं न व्येति विविधं विकारं न गच्छति, सत्त्वधर्मान् लिङ्गसंख्याकारकादीन्न गृह्णातीति यावत् । तेनोपसर्जनप्रतिषेधः सिद्धः । अत्युच्चैसौ, अत्युच्चैस इति । अतिक्रान्तप्रधानत्वेन सत्त्वधर्मपरिग्रहान्नेहाव्ययसंज्ञा । ननु स्वरादिषूच्चैःशब्दः पठ्यते, तत्र कथं तदन्तस्य संज्ञेति चेत् ? न, अन्वर्थसंज्ञयैव तदन्तविधेरपि ज्ञापनात् । अन्यथोपसर्जने प्रसङ्गाभावेन तन्निवृत्त्यर्थायास्तस्या वैयर्थ्यापत्तेः । तेन 'परमस्वः, 'परमोच्चैः' इत्यादौ स्वरादिप्राधान्येऽव्ययत्वं सिद्धम् । अव्ययसंज्ञाया अन्वर्थत्वमाथर्वणे प्रणवविद्यायां श्रुतिरपि दर्शयति—

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ इति ॥

एतेषु यन्न व्येति किन्तु सदृशमेकप्रकारं तदव्ययमिति योजना ।

यद्वा,यस्मान्न व्येति तस्मादव्ययमिति । त्रिषु लिङ्गेषु सदृशं लिङ्गविशेषप्रतिपादने सामर्थ्याभावादिति भावः । विभक्तिषु कारकेषु वचनेषु चैकत्वादिसंख्यास्वव्ययीभावस्य यद्यपि लिङ्गकारकसंख्यायोगोऽस्ति तथापि वचनादव्ययत्वम् । १

अथ स्वरादयः—

स्वरिति स्वर्गपरलोकयोः । स्वर्गे–छायैव या स्वर्जलधेर्जलेषु । (मा०तृ०३५) । परलोके–"स्वर्यातस्य ह्यपुत्रस्य" इति ।

अन्तरिति मध्ये । अन्तर्बाष्पश्चिरमनुचरः । (मे०पू०३)

प्रातरिति प्रत्यूषे । प्रातः संध्यामुपासीत ।

एते त्रयोऽन्तोदात्ता इति काशिका । तच्चिन्त्यं, स्वःशब्दस्य स्वरितत्वात् । तथा च फिट्सूत्रम्–"न्यङ्स्वरौ स्वरितौ" (फि०सू०४–७४) इति । प्रयोगश्च–"अन्तरिक्षमथो स्वः" । यत्तु प्रातःशब्द आद्युदात्त इति कश्चित् । तन्न, "प्रातरग्निं प्रातरिन्द्रं हवामहे" इत्यादावन्तोदात्तस्यैव प्रसिद्धतरत्वात् ।

पुनरित्याद्युदात्तोऽप्रथमे विशेषे च । अप्रथमे पुनरुक्तम् । विशेषे–किं पुनर्ब्राह्मणाः पुण्याः ।

सनुतरित्यन्तर्द्धाने । सनुतश्चोरो गच्छति ।

उच्चैरिति महति । नीचैरित्यल्पे । शनैरिति क्रियामान्द्ये ।

ऋधगिति सत्ये । वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये ।

ऋते इति वर्जने । युगपदित्येककाले । आराद् दूरसमीपयोः । पृथगिति भिन्ने ।

एते सनुतर्प्रभृतयो नवान्तोदात्ता इति काशिका । "शनैश्चिद्यन्तो अद्रिवः" "ऋधगित्था समर्त्यः" इत्यत्र तु शनैर्ऋधक्शब्दावाद्युदात्तौ प्रयुज्येते ।

ह्यसिति अतीतेऽह्नि । श्वोऽनागतेऽह्नि । दिवेति दिवसे । रात्राविति निशि । सायमिति निशामुखे । चिरमिति बहुकाले । मनागिति ईषदर्थे । ईषदित्यल्पे । जोषमिति सुखमौनयोः । तूष्णीमिति मौने । बहिस् अवस् इत्येतौ बाह्ये ।

समयेति समीपे । मध्ये च ग्रामं समया ।

निकषेत्यन्तिके । विलङ्घ्य लङ्कां निकषा हनिष्यति ।

स्वयमित्यात्मनेत्यर्थे । स्वयं कृतम् ।

वृथेति व्यर्थे । नक्तमिति रात्रौ । नञिति निषेधे । हेताविति निमित्तार्थे । इद्धेति प्राकाश्ये । अद्धेति स्फुटावधारणयोः । तस्चातिशययोरि-

त्येके। सामीत्यर्द्धजुगुप्सितयोः।

एते ह्यस्प्रभृतयः साम्यन्ता द्वाविंशतिरन्तोदात्ता इति काशिका। "दिवा चित्तमः कृण्वन्ति," "वृथा सृजत्यर्थिभिः"। "नक्तं ददृशे कुह चिद्देवेषु" इत्यादौ तु आद्युदात्ताः प्रयुज्यन्ते।

वत्। वत्प्रत्ययान्तमव्ययसंज्ञं स्यात्। ब्राह्मणवत् "तेन तुल्यम्" (पा०सू०५-१-११५) इत्यादिभिर्विहितो वतिरिह गृह्यते न तु "उपसर्गाच्छन्दसि धात्वर्थे" इति विहितः, सत्त्वार्थकत्वात्। यदुद्वतो निवतो यासि वप्सत्।

सनेति नित्ये। सना तात इन्द्रः, सनातनः।

सनत्। इदमपि नित्ये। सनत्कुमारः।

तिरसित्यन्तर्द्धौ तिर्यगर्थे च। तिरोहितः। तिरःकाष्ठं कुरु। परिभूते तु लक्षणा। तिरस्कृतोऽरिरिति यथा।

सनेत्यादयस्तिरोन्ता आद्युदात्ता इति काशिका। "सनाच्च होता नव्यश्चसत्सि" "तिरः पुरूचिदश्विना" इत्यादौ त्वन्तोदात्तं प्रयुज्यते।

अन्तरेत्यन्तोदात्तो मध्ये विनार्थे च। त्वां मां चान्तरा कमण्डलुः। त्वामन्तरा तामरसायताक्षि।

अन्तरेणेति वर्जने। अन्तरेण हरिं न सुखम्।

ज्योगिति कालभूयस्त्वे प्रश्ने शीघ्रार्थे सम्प्रत्यर्थे च।

कमिति वारिमूर्द्धनिन्दासुखेषु। वारिणि-कञ्जं पद्मम्। मूर्द्धि-कञ्जाः कचाः। निन्दायां-कन्दर्पः। सुखे-कंयुः।

शमिति सुखे। शंकरः।

सहसेत्याकस्मिकाविमर्शयोः। "दिवः प्रसूनं सहसा पपात" "सहसा विदधीत न क्रियाम्" (कि०२-३०)।

स्वधेति पितृदाने। अलमिति भूषणपर्याप्तिशक्तिवारणानिषेधेषु। भूषणे-अलङ्कारः। पर्याप्तौ-अलमस्य धनम्। बह्वित्यर्थः। शक्तौ-अलं मल्लो मल्लाय, शक्त इत्यर्थः। वारणे-अलमतिप्रसङ्गेन। निषेधे—

आलप्यालमिदं बभ्रोर्यत्स दारानपाहरत्। (मा०द्वि०४०)

न वक्तव्यमित्यर्थः। वषडिति हविर्दाने। विनेति वर्जने।

नानेत्यनेकविनार्थयोः। नानाभूतं देहभृतां समाजम्। नाना रीतिर्निष्फला लोकयात्रा।

स्वस्तीति मङ्गले। अन्यदित्यन्यार्थे। देवदत्त आख्यातोऽन्यच्च यज्ञदत्त इति।

अस्तीति सत्तायाम्। अस्तिपरलोक इति मतिरस्यास्तिकः।

उपांश्विति अप्रकाशोच्चारणरहस्ययोः ।

क्षमेति क्षान्तौ । क्षमा करोतु भवान् ।

विहायसेति वियदर्थे । विहायसा रम्यमितो विभाति ।

दोषेति रात्रौ । मृषामिथ्येत्येतौ वितथे । मुधेति व्यर्थे ।

क्त्वातोसुन्कसुनः । कृन्मकारसंध्यक्षरान्ताः । अव्ययीभावश्च । इदं गणसूत्रत्रयम् । अष्टाध्यायीस्थत्रिसूत्र्या समानार्थम् । वैयर्थ्यं तु ध्वनिष्यते ।

पुरेति अविरते चिरातीते भविष्यदासन्ने च । पुराधीते । अविरतमपाठीदित्यर्थः । "पुरि लुङ् च" (पा०सू०३-२-१२२) इति लट् । चिरातीते-पुरापि नवं पुराणम् । पुरेदमूर्ध्वं भवतीति वेधसा । समनन्तरं भविष्यतीत्यर्थः ।

स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा । (अ०को०३-३-२६१)

इत्यमरः ।

मिथो इति रहःसहार्थयोः । मन्त्रयन्ते मिथो ।

मिथसित्यपि पूर्ववत् । प्रायसिति बाहुल्ये । मुहुसिति पुनरर्थे । प्रवाहुकमिति समकाले ऊर्ध्वार्थे च । केचित्तु प्रवाहिकेति पठन्ति ।

आर्यहलमिति बलात्कारे । शाकटायनस्त्वाह-आर्येति प्रतिबन्धे, हलमिति प्रतिषेधविवादयोरिति ।

अभीक्ष्णमिति पौनःपुन्ये । साकं सार्द्धमित्येतौ सहार्थे । नमसिति नतौ । हिरुगिति वर्जने । धिगिति निन्दाभर्त्सनयोः ।

तसिलादिस्तद्धित एधाच्पर्यन्तः । शस्तसी, कृत्वसुच्,सुच्, आस्थालौ, च्व्यर्थाश्चेति । तसिलादिरित्यादेरयमर्थः-"पञ्चम्यास्तसिल्"(पा० सू०५-३-७) इत्यारभ्य "एधाच्च" (पा०सू०५-३-४६) इत्येतदेतैः सूत्रैरुक्तो यस्तद्धितस्तदन्ताः स्वरादिषु बोद्धव्याः । तथाच "बह्वल्पार्थाच्छस्" (पा०सू०५-४-४२) । "प्रतियोगे पञ्चम्यास्तसिः" (पा०सू० ५-४-४४) । "क्रियाभ्यावृत्तिगणने कृत्वसुच्" (पा०सू०५-४-१७) । "द्वित्रिचतुर्भ्यः सुच्" (पा०सू०५-२-१८) । "इण आसिः" (उ०सू०४-६७१ ) इत्युणादिसूत्रेण आसिप्रत्ययो विहितः । 'अयाः' इत्युदाहरणम् । "प्रत्नपूर्वविश्वेमात्थाल् छन्दसि" (पा०सू०५-३-१११). । "सम्पद्यकर्त्तरि च्विः" (पा०सू०५-४-५०) । "विभाषा सातिकार्त्स्न्ये" (पा०सू०५-४-५२) । "देये त्रा च" (पा०सू०५-४-५५) । एतदन्ता अपि ग्राह्याः । अम् इति "अमु च छन्दसि" (पा०सू०५-४-१२) इति विहितः । आमित्यङ्गीकारे । आम् कुर्मः । "किमेत्तिङव्ययघादाम्" (पा०सू०

५-४-११)। "कास्प्रत्ययादाममन्त्रे लिटि" (पा०सू०३-१-३५)। इत्यपीति केचित्।

प्रतामिति ग्लानौ। प्रशानिति समानार्थे। प्रशान् देवदत्तो यज्ञदत्तेन।

प्रतानिति विस्तारे। मा इति निषेधे। मा भवतु मा भविष्यति।

माङिति निषेधाशङ्कयोः। मा कार्षीत्। अस्य पापं मा भूदिति।

आकृतिगणश्चायम्। तेनान्येऽपि ग्राह्याः। तद्यथा—अमिति शैघ्र्ये अल्पे च। काममिति स्वाच्छन्द्ये। प्रकाममित्यतिशये। भूय इति पुनरर्थे। साम्प्रतमिति न्याय्ये। परमिति किन्त्वर्थे। गुणवानसि परमहंकारी।

साक्षादिति प्रत्यक्षे। साचीति तिर्यगर्थे। सत्यमित्यर्द्धाङ्गीकारे। मङ्क्षिवति शैघ्र्ये। आश्विति च। संवदिति वर्षे। अवश्यमिति निश्चये। सपदि शैघ्र्ये।

बलवदित्यतिशये। बलवदपि शिक्षितानाम्।

प्रादुस् आविस् इति प्रकाशे। अनिशं नित्ये। नित्यदा, सदा, अजस्रं, सन्ततम् एते सातत्ये।

उषेति रात्रौ। उषातनो वायुः।

रोदसी द्यावापृथिव्यर्थे। ओमिति ब्रह्मवाची।

भूर्भुवरिति पृथिव्यन्तरिक्षलोकयोः। भूर्लोकः। भुवर्लोकः।

झटिति झगिति तरसा शैघ्र्ये। द्राक् द्रुतं शैघ्र्ये, क्षिप्रमिति च। अतीवेत्यतिशये। सुष्ठु इति प्रशंसायाम्।

कु इति कुत्सितेषदर्थयोः। कापथः, कवोष्णम्। अञ्जसेति तत्त्वशीघ्रार्थयोः। अ इति बहिरर्थे।

मिथु इति द्वावित्यर्थे। मिथु मन्त्रयेते।

विश्वगिति समन्तात् भावे। भाजगिति शैघ्र्ये। भाजक्पचति। अन्वगित्यानुकूल्ये।

चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः। (अ०को०३-४-१)

आद्यशब्दाच्चिरं चिरेण चिरादिति गृह्यन्ते। अस्तमिति विनाशे।

आनुषगित्यानुपूर्व्ये। आनुषक् प्रविशतीह बन्धुता। अनुमानेऽनुषगिति शाकटायनः। आनुषदिति दान्तं केचित्।

अह्नस् इति शीघ्रसाम्प्रतिकयोः। अह्न एव गच्छति। अह्नरेवेति रेफो वा। स्थाने इति युक्तार्थे। वरमिति हि ईषदुत्कर्षे। दुष्टुनिष्कृष्टार्थे। बलादिति हठार्थे।

शु इति पूजायाम् । शुनाशीरः ।

क्षमेति क्षान्तौ । अर्वागिति प्राचीने । शुदि शुक्लपक्षे । वदि कृष्णपक्षे । इति स्वरादिः ।

तद्धितश्चासर्वविभक्तिः" (पा०सू०१-१-३८) । तद्धितान्तः शब्दोऽव्ययं स्यात् । यस्मात्सर्वा वचनत्रयात्मिका विभक्तिर्नोत्पद्यते किन्त्वेकवचनम् । ततः, तत्र । तद्धित इति किम् ? एकः, द्वौ, बहवः । असर्वविभक्तिरिति किम् ? औपगवः । ननु 'गोदौ' 'वरणाः' इत्यादावतिव्याप्तिः । न च "लुब्योगाप्रख्यानात्" (पा०सू०१-२-५४) । "योगप्रमाणे च तदभावे दर्शनं स्यात् (पा०सू०१-२-५५) इति पठतः सूत्रकृतो मते नैते तद्धितान्ता इति वाच्यम्, एवमपि पञ्चैव पञ्चकाः शकुनयः, उभयो मणिः । पचतिकल्पं, पचतिरूपं, इत्यादावतिव्याप्तेर्दुर्वारत्वादिति चेत् ? अत्राह वार्त्तिककारः-"सिद्धन्तु पाठात् । तसिलादयः प्राक्पाशपः । शस्प्रभृतयः प्राक् समासान्तेभ्यः । मान्तः कृत्वोर्थः । तसिवती, नानाञौ" इति । न च "इवे प्रतिकृतौ" (पा०सू०५-३-९६) इत्यधिकारे "प्रत्नपूर्वविश्वेमात्थाल्छन्दसि" (पा०सू०५-३-१११) इति विधानात्तदन्तस्यासङ्ग्रह इति वाच्यम्, "प्रकारवचने थाल्" (पा०सू०५-३-२३) इति प्रकरण एव "प्रत्नादिभ्य इवे थाल् छन्दसि" "प्रकारवचनैरिदमस्थमुः" इति पठितुं शक्यत्वात् स्वरादिगणे आस्थालाविति पाठेन सिद्धत्वाच्च । मान्त इति । आम् अम् चेत्यर्थः । तसि-"प्रतियोगे पञ्चम्यास्तसिः" (पा०सू०५-४-४४) । "तेनैकादिक्" (पा०सू०४-३-११२) "तसिश्च" (पा०सू०४-३-११३) इति द्वावपि गृह्येते ।

स्यादेतत् । सूत्रमते कथमुक्तिसम्भवः यावता "कर्मणि द्वितीया" (पा०सू०२-३-२) । "द्व्येकयोर्द्विवचनैकवचने" (पा०सू०१-४-२२) इत्यादीनां स्वादिवाक्येनैकवाक्यतापक्षेऽव्ययेभ्यः स्वादीनां प्राप्तिरेव नास्ति । "अव्ययादाप्सुपः" (पा०सू०२-४-८२) इति ज्ञापकेन तु सर्वा विभक्तयः । उच्यन्ते, अव्ययेभ्यः सप्तानामपि विभक्तीनां त्रीण्यपि वचनानि, तथा सप्तानामप्येकवचनान्येव, अथवा प्रथमाया एव वचनत्रयम्, यद्वा प्रथमाया एकवचनमेवेति पक्षचतुष्टयं यद्यपि ग्रन्थेषूपलभ्यते; तथापि प्रथमैकवचनमात्रमेवेति चतुर्थपक्षएव क्षोदक्षमः । तमेव गृहीत्वा सूत्रस्याप्युक्तिसम्भवः स्पष्टः । इतरत्तु पक्षत्रिकमभ्युच्चयवादमात्रेणोपन्यस्यते न तु तात्त्विकम् । तथाहि, यदि कर्मणि द्वितीयैव, अभिहिते प्रथमैव, एकत्वे एकवचनमेवेत्यादिरर्थनियमः । यदि वा द्वितीया कर्मण्येवेत्यादिः प्रकृतार्थापेक्षो विभक्तिनियमः । यदि वा एक-

वाक्यत्वे सामान्यापेक्षवचनविभक्तिनियमेऽपि वा "अव्ययादाप्सुपः" (पा०सू०२-४-८२) इति सामान्यापेक्षज्ञापकाद्विभक्तिसिद्धिस्तदा अविशेषात् सप्तानामपि विभक्तीनां त्रीण्यपि वचनानीति पक्षो लभ्यते ।

यदा तु द्वित्वे द्विवचनमिति सूत्रयित्वा एकवचनमित्येव पृथक् सूत्र्यते । तदन्यथानुपपत्त्या च कर्मण्येव द्वितीया न करणादौ द्वित्वबहुत्वयोरेव द्विवचनबहुवचने न त्वेकत्वे इत्यादिक्रमेण सजातीयापेक्षो नियमः । ततश्चाव्ययेभ्यः सकलविभक्तिप्राप्तावेकवचनमित्यनेन नियमः क्रियते । यत्रैकवचनं चान्यच्च प्राप्नोति तत्रैकवचनमेवेति । यदि वा सामान्यापेक्षनियमाश्रयणादव्ययादप्राप्तावेकवचनमिति सूत्रं क्रियते तस्य च "ङ्याप्प्रातिपदिकात्" (पा०सू०४-१-१) इत्यनेनैकवाक्यता । तथा च ङ्याबादिभ्यः कर्मादिष्वेकवचनं सिद्धमेवेति । एतत्सूत्रबलादव्ययेभ्य एव भवति तिङन्तात्तु न भवति । एकवचनमित्यस्याप्राप्तप्रापणार्थत्वेऽपि ङ्याप्सूत्रेणैकवाक्यत्वात् प्रदेशान्तरे पाठसामर्थ्याच्च । स्वातन्त्र्येणापि ङ्याप्सूत्रं विधायकमिति द्वित्वे द्विवचनमित्यादेर्नियामकत्वं सङ्गच्छते । तदाव्ययेभ्यः सर्वाण्येकवचनानीति द्वितीयः पक्षो लभ्यते ।

यदा तु द्वितीया कर्मण्येवेत्यादिः सामान्यापेक्षः प्रत्ययनियमोऽव्ययेभ्यस्तु प्रथमैव । प्रथमा प्रातिपदिकार्थे एवेति नियमेन हि कर्माद्याधिक्यस्थले एव सा निवार्य्यते । "द्व्येकयोः" (पा०सू०१-४-२२) इति तु यथान्यासमेव तत्र चैकत्वे एवैकवचनं न संख्यान्तरे इति सजातीयापेक्षप्रत्ययनियमपक्षस्तदा निःसंख्येभ्योऽव्ययेभ्यः प्रथमाया वचनत्रयमपि भवतीति तृतीयः पक्षो लभ्यते ।

त्रिष्वप्यमीषु पक्षेषु 'पचतिकल्पं' 'पचतिरूपम्' इत्यादौ दोषः । तत्र हि प्रथमैकवचनमात्रमिष्यते । उक्तपक्षत्रयेऽप्यधिकं प्राप्नोति । तस्माद् द्वितीयपक्षरीत्या सकलैकवचनानि प्राप्यैकवचनमित्येकत्वस्य विवक्षितत्वात् प्रथमातिक्रमे कारणाभावात्प्रथमैकवचनमेव कर्त्तव्यमिति सिद्धान्तः । एवञ्च सत्यपि सूत्रस्योक्तिसम्भवे 'पचतिरूपम्' इत्यादावतिव्याप्तिभयात्परिगणनमेव कर्त्तव्यं सूत्रं तु न कर्त्तव्यमिति स्थितम् ।

कृन्मेजन्तः (पा०सू०१-१-३९ । कृद्यो मान्त एजन्तश्च तदन्तमव्ययसंज्ञं स्यात् । स्वादुङ्कारं भुङ्क्ते । वक्षेरायः । "तुमर्थे से" (पा०सू०३-४-९) इति वचेः सेप्रत्यये रूपम् । नन्वेवं 'कारयांचकार' इत्यामन्तस्य न प्राप्नोति, अत्रातिङ्भावितया लिटः कृत्वेपि मान्तत्वाभावात् । सत्यम्, स्वरादिष्वामिति पाठात्सिद्धम् । यदि तु तत्र तद्धितस्यैव ग्रहणं तर्हीह

कृदन्तत्वादुत्पन्नानामपि सुपाम् "आमः" (पा०सू०२-४-८१) इति लुग् भविष्यति । तत्र हि लेरिति नानुवर्त्तते । न चैवं तरबादेरपि लुगापत्तिः, अपरिसमाप्तार्थतया तरबाद्युत्पत्तेरेवाभावात् । अपरिसमाप्तार्थत्वं च संख्याकर्त्रादिविषयकोत्थिताकाङ्क्षत्वम् । अत एवानुप्रयोगः प्रार्थ्यते । आमन्तार्थगतप्रकर्षादिप्रतीतिस्तु अनुप्रयोगादुत्पन्नेन तरबादिना भविष्यति । अत एव सूत्रितं "कृञ्चानुप्रयुज्यते" (पा०सू०३-१-४०) इति । अनुशब्दो हि व्यवहितस्य विपरीतस्य च प्रयोगनिवृत्तये इति वक्ष्यते । यद्वा, पूर्वसूत्रोक्तनिष्कर्षरीत्या आमन्तात् सोरेवोत्पत्तौ हल्ङ्याब्दिलोपो भविष्यति । अस्तु वा कृदन्तं यन्मेजन्तमिति वाक्यार्थः । आमन्तं हि प्रत्ययलक्षणेन कृदन्तं, श्रूयते च मान्तम् । न चैवं 'प्रतामौ' 'प्रतामः' 'लवमाचक्षाणो लौः' इत्यादावतिप्रसङ्ग इति वाच्यम्, स्वरादिषु प्रशान्-शब्दस्य पाठेन धातोः प्रत्ययलक्षणेन कृदन्तत्वमुपजीव्याव्ययसंज्ञा न भवतीति ज्ञापितत्वात् । न च "मोनोधातोः (पा०सू०८-२-६४) इति नत्वे कृते नैतन्मान्तमिति कथं ज्ञापकतेति वाच्यम् । नत्वस्यासिद्धत्वात् । न च "शान तेजने" (भ्वा०उ०९९५) इत्यस्यार्थान्तरवृत्तित्वे शानयतीत्यादिप्रयोगसिद्ध्यर्थं चुरादित्वस्वीकारेण नित्यसन्नन्तत्वाभावात्तस्यैवायं स्वरादिषु पाठ इति वाच्यम्, अनभिधानात्, तस्मात्क्विपोनुत्पत्तेः । अत्र च ज्ञापकत्ववर्णनपरं भाष्यमेव प्रमाणम् । अव्ययमित्यन्वर्थसंज्ञाबलाद-सत्त्वार्थस्य साम्यवाचिन एव प्रशान्शब्दस्य तत्र ग्रहणं न तु शान्तिमद्वाचकस्य । तेन 'प्रशामौ' 'प्रशामः, इत्युदाहरणं न विरुध्यते । स्वस्त्यादीनां तु सत्त्ववाचिनामपि पाठसामर्थ्यादव्ययत्वमिति विशेषः । अन्तग्रहणसामर्थ्यान्नित्ययोगे बहुव्रीहिराश्रीयते । तेनौपदेशिक एज् गृह्यते । नेह-'आधये' 'चिकीर्षवे' 'कुम्भकारेभ्यः' । वस्तुतस्त्वन्तग्रहणं व्यर्थम्, लक्षणप्रतिपदोक्तपरिभाषयैवातिप्रसङ्गभङ्गात् । ननु वर्णग्रहणे इयं परिभाषा न प्रवर्त्तते । अन्यथा "एचोऽयवायावः" (पा०सू०६-१-७८) इत्यादावतिप्रसङ्गादिति चेत् ? न, एवमपि बहिरङ्गपरिभाषया "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" (प०भा०८६) इति परिभाषया वेष्टसिद्धेः । अयमत्रार्थः-सन्निपातः संश्लेषः, तन्निमित्तो यो विधिः स तद्विघातस्यानिमित्तम् । तं सन्निपातं यो विहन्ति स तद्विघातस्तस्येत्यर्थः । एवञ्च सुप्सन्निपातलक्षणस्य "घेर्ङिति" (पा०सू०७-३-१११) इति गुणस्य "बहुवचने झल्येत्" (पा०सू०७-३-१०३) इत्येत्वस्य चाव्ययसंज्ञां प्रति निमित्तत्वं नेत्यवधेयम् । तथा परिभाषायाः प्रयोजनान्तराण्यपि सन्ति दिङ्मात्रं तूच्यते, श्रीपं कुलं तस्मै श्रीपायेत्यत्रातो

लोपो न भवति। तथा अगव्यीत्, अनाव्यीत्, "यस्य हलः" (पा०सू० ६-४-४९) इति लोपो न। तथा अतिजरं कुलम्, अतिजरेण, अतिजरैः, अतिजराद् इत्यत्र अम् इन ऐस् आत् इत्येतेषु अकारमुपजीव्य कृतेषु सत्सु जरसादेशो न भवतीत्यादि। अनित्या चेयं परिभाषा "कष्टाय क्रमणे" (पा०सू०३-१-१४) "न यासयोः" (पा०सू०७-३-४५) इत्यादिज्ञापकात्। तेन 'अग्निमान्' इत्यत्र "ह्रस्वनुड्भ्यां मतुप्" (पा०सू०६-१-१७६) इत्यन्तोदात्ताद्ध्रस्वान्तात् परस्य मतुप उदात्तत्वे कृते शेषनिघातेन प्रकृतेरनुदात्तत्वं भवत्येवेति दिक्। 'गौः' 'ग्लौः' 'नौः' इत्यत्र नेदं सूत्रं प्रवर्त्तते उणादीनामव्युत्पन्नत्वात्। व्युत्पत्तिपक्षेऽपि "ञिचरव्ययम्" (उ०सू०२-२३२) इत्युणादिसूत्रेण डौडोप्रत्ययान्ताश्चव्यन्ता एवाव्ययमिति नियमस्य कृतत्वात्।

क्त्वातोसुन्कसुनः (पा०सू०१-१-४०)। एतदन्तमव्ययं स्यात्। कृत्वा। पुरासूर्य्यस्योदेतोः। पुरावत्सानामपाकर्त्तोः। "भावलक्षणेस्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्" (पा०सू०३-४-१६)। पुरा क्रूरस्य विसृपो विरप्शिन्। पुरा जत्रुभ्य आतृदः। "सृपितृदोः कसुन्" इति कसुन्।

अव्ययीभावश्च (पा०सू०१-१-४१)। अयमव्ययसंज्ञः स्यात्। त्रिषयपरिगणनं कर्त्तव्यम्–लुकि मुखस्वरोपचारयोर्निवृत्तौ चेति। उपाग्नि, प्रत्यग्नि, "अव्ययादाप्सुपः"(पा०सू०२-४-८२) इति सुपो लुक् उपाग्नि मुखः, प्रत्यग्नि मुखः। "मुखं स्वाङ्गम्" (पा०सू०६-२-१६७) इत्युत्तरपदान्तोदात्तत्वे प्राप्ते "नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः" (पा०सू० ६-२-१६८) इति प्रतिषेधः। तथाच "बहुव्रीहौ प्रकृत्या" (पा०सू०६-२-१) इति पूर्वपदप्रकृतिस्वर एव भवति। पूर्वपदं च समासस्वरेणान्तोदात्तम्। विसर्गस्थानिकस्य सकारस्योपचार इति प्राचां संज्ञा। तन्निवृत्तौ यथा–उपपयः कारः, उपपयः कामः। इह "अतः कृकमि" (पा०सू०८-३-४६) इति प्राप्तं सत्वम् "अनव्ययस्य" (का०आ०) इति पर्युदस्यते। इह मुखस्वरनिवृत्तिरेव मुख्यं प्रयोजनम्। लुक् तु "नाव्ययीभावादतः" (पा० सू०२-४-८३) इति विशेषप्रतिषेधात् सिद्धः। उपचारनिवृत्तिरपि न प्रयोजनम्। "अतः कृकमि" (पा०सू०८-३-४६) इत्यत्रानुत्तरपदस्थस्येत्यनुवृत्त्यैव तत्सिद्धेः। परिगणनं किम्? उपाग्न्यधीयान। पराङ्गवद्भावेन षाष्ठम् "आमन्त्रितस्य च" (पा०सू०६-१-१९८) इत्याद्युदात्तत्वं यथा स्यात्। तत्र ह्यव्ययानां प्रतिषेध उपसंख्यात उच्चैरधीयानेत्यादौ मा भूदिति। तथा "उपाग्निकम्" इत्यादौ "अव्ययसर्वनाम्नाम्" (पा०

सू०५-३-७१) इत्यकज् न। उपकुम्भम्मन्यः, "खित्यनव्ययस्य" (पा०सू० ६-३-६६) इत्यनुवर्तमाने "अरुर्द्विष" (पा०सू०६-३-६७) इति मुम्प्रतिषेधो न। उपकुम्भीभूतः "अस्य च्वौ" (पा०सू०७-४-३२) इत्यस्यौपसंख्यानिकः प्रतिषेधो न भवति।

वस्तुतस्त्विदं सूत्रं न कर्त्तव्यम्, लुक उपचारनिवृत्तेश्चान्यथोपपत्तेरुक्तत्वात्। मुखस्वरनिवृत्तिः परमवशिष्यते। तत्र केचिदाहुः-मुखस्वरोऽत्रेष्यते एव। यद्येतावत् प्रयोजनं स्यात् तत्रैवायं ब्रूयान्नाव्ययीभावाच्चेतीति भाष्यस्वरसादिति। अन्ये तु अनव्ययमव्ययं भवतीत्यन्वर्थसंज्ञाविज्ञानादेव मुखस्वरानिवृत्तिर्भविष्यतीति।

स्यादेतत्। स्वरादित्वेनैव सिद्धत्वात "तद्धितश्च" (पा०सू०१-१-३८) इत्यादिचतुःसूत्री व्यर्था। तत्र हि "तसिलादिस्तद्धित एधाच्पर्यन्तः" इत्यादिना "व्ययर्थाश्च" इत्यन्तेन आसिमौणादिकं वर्जयित्वा "तद्धितश्चासर्वविभक्तिः" (पा०सू०१-१-३८) इत्यस्यार्थः सङ्गृह्यते। "कृन्मकारसन्ध्यक्षरान्तः" इत्यनेन "कृन्मेजन्तः" (पा०सू०१-१-३९) इत्यस्यार्थः सङ्गृह्यते। क्त्वातोसुन्कसुनः" (पा०सू०१-१-४०) "अव्ययीभावश्च" (पा०सू०१-१-४१) इति सूत्रद्वयं तु स्वरूपेणैव पठ्यते इति। अत्राहुः, पुनर्वचनमनित्यत्वज्ञापनार्थम्। तेन प्रागुक्तं "लुङ्मुखस्वरोपचाराः" इति परिगणनं लभ्यते। "न लोकाव्यय" (पा०सू०२-३-६९) इत्यत्राव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेध इति वक्ष्यमाणं च लभ्यते इति। वस्तुतस्तु मास्तु चतुःसूत्री, "अव्ययीभावश्च" (पा०सू०१-१-४१) इति तु गणेऽपि मास्तु, उक्तरीत्याऽन्वर्थसंज्ञैव सिद्धेः। "तोसुन्कसुनोरप्रतिषेधः" इत्येव लाघवात् पठ्यतामिति युक्तः पन्थाः।

शि सर्वनामस्थानम् (पा०सू०१-१-४२)। शि इत्येतत्सर्वनामस्थानसंज्ञं स्यात्। वारीणि; "सर्वनामस्थाने चासम्बुद्धौ" (पा०सू०६-४-८) इति दीर्घः। यदि तु प्रदेशेष्वेव "शौ च" इत्याद्युच्येत तर्हि सुटि न स्यात्। अथ "शिसुटोः" इत्युच्येत तर्हि नपुंसकसुटोऽपि ग्रहणं स्यात्। शिग्रहणं तु शसर्थं स्यात्। तस्मात्संज्ञा तावत्प्रणेया। महासंज्ञाकरणं तु पूर्वाचार्यानुरोधात्।

सुडनपुंसकस्य (पा०सू०१-१-४३)। सुडिति प्रत्याहारः। नपुंसकभिन्नस्य स्वादिपञ्चवचनानि उक्तसंज्ञानि स्युः। राजा, राजानौ, राजानः, इत्यादि। प्राग्वद्दीर्घः। अनपुंसकस्येति किम्? सामनी "विभाषा ङिश्योः" (पा०सू०६-४-१३६) इत्यल्लोपाभावे दीर्घो न भवति। अनपुंसकस्येति पर्युदासस्तेनास्य सूत्रस्य स्त्रीपुंसयोरेव प्रवृत्तिरिति नपुंसके न

विधिर्नापि प्रतिषेधः। तेन 'वनानि सन्ति' इत्यत्र पूर्वसूत्रेण प्राप्ता संज्ञा-भवत्येव। प्रसज्यप्रतिषेधे तु सोऽपि निषिध्येत। यद्यपि "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति समाधातुं शक्यते तथापि असमर्थ-समासो वाक्यभेदश्चेति गौरवं स्यादेव। यद्वा सुट्स्त्रीपुंसयोरिति वक्तव्येऽनपुंसकस्येति सूत्रयतः प्रसज्यप्रतिषेध एव सम्मतः। गौरवं च प्रामाणिकम्। एतेन हि केचिन्नञ्समासा असामर्थ्येऽपि साधव इति ज्ञाप्यते। तेन 'अश्राद्धभोजी ब्राह्मणः' इत्यादि सिद्धं भवति।

नवेति विभाषा (पा०सू०१-१-४४)। इतिशब्दः काकाक्षिन्यायेनो भाभ्यां सम्बध्यते। स च पदार्थविपर्यासकृत्। तेनार्थ एवेह संज्ञी संज्ञा च। निषेधविकल्पयोर्विकल्पसंज्ञा स्यात्। न च तयोरपदार्थतयाऽन-न्वयप्रसङ्गः। एतत्सूत्रारम्भसामर्थ्यादेव विधिवाक्येषु विकल्पवाचिप-दस्य लाक्षणिकत्वात्। उभयत्रविभाषार्थं चेदं सूत्रम्। प्राप्तविभाषाया-मप्राप्तविभाषायां च नास्योपयोगः। तथाहि, "विभाषोपपदेन प्रतीयमा-ने" (पा०सू०१-३-७७)। इति प्राप्तविभाषा। तत्र "स्वरितञितः" (पा० सू०१-३-७२)। इत्यादिना नित्यमात्मनेपदे प्राप्ते विभाषाश्रुत्या पक्षे तन्निवृत्तिमात्रं क्रियते, पक्षे भवतीति त्वनुवादः। तथा "विभाषोर्णोः" (पा०सू०१-२-३) इत्यप्राप्तविभाषा। 'और्णुवीत्' इत्यत्र परत्वात् "सार्व-धातुकमपित्" (पा०सू०१-२-४) इति नित्यङित्त्वाभ्युपगमात्। तत्र 'ऊर्णविता' इत्यादावभावांशस्य स्थितत्वाद्भावांशमात्रपरता "विभा-षा श्वेः" (पा०सू०६-१-३०) इत्युभयत्रविभाषायां तु यदि विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव विकल्पः स्यात्, कित्सु तु यजादित्वान्नित्यमेव स्यात्। अथ प्रतिषेधमुखेन प्रवृत्तिस्तर्हि कित्स्वेव विकल्पः स्यान्न तु पित्सु। न च पित्सु विधिमुखेन, कित्सु निषेधमुखेनेत्युभयथापि प्रवृत्ति रस्त्विति वाच्यम्, वैरूप्यलक्षणवाक्यभेदापत्तेः। सञ्ज्ञाकरणे तु सति-श्रुतक्रमानुरोधेन नेति निषेधः प्रथमं कित्सु प्रवर्त्तते ततः किदकिद्रूपे सर्वस्मिन् लिटि ऐकरूप्यं प्रापिते सति पक्षे भवतीत्यैकरूप्येण विधि-मुखेनैव विकल्पः प्रवर्तते। आकृतौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्त्तते इति दर्शने इदं सूत्रमारभ्यते।

यदा तु प्रतिलक्ष्यं "विभाषा श्वेः" (पा०सू०६-१-३०) इत्येतद्भिद्यते, तदा क्वचिद्विधिमुखेन क्वचिन्निषेधमुखेन प्रवृत्तेः सम्भवान्नेदं सूत्रमार-म्भणीयम्। तथाच वार्तिकम्—अशिष्यो वा विदितत्वादिति। वस्तुतस्त्वा-कृतिपक्षेऽपि प्रदेशेष्वेव, नवा श्वेरित्यादि पठित्वेदं सूत्रं प्रत्याख्यातुं शक्यम्। युक्तं चैतत्। अन्यथाऽन्यार्थमप्यारब्धा सञ्ज्ञा "विभाषोर्णोः"

(पा०सू०१-२-३) इत्यत्र प्रवर्त्तेत । "प्रतिषेधाश्च बलीयांसो भवन्ति" इति 'और्णुवीत्' इत्यत्रापि "सार्वधातुकमपित्" (पा०सू०१-२-४)। इत्यस्य निषेधस्ततो विकल्पश्च स्यात् । नन्वारभ्यमाणे सूत्रे नवेत्यखण्डनिपातस्यार्थो निषेध एव सञ्ज्ञीति किं न स्यादिति चेत्? न, तथा सति "न बहुव्रीहौ" (पा०सू०१-१-२९) इत्यनेनैव सिद्धौ "विभाषा दिक्समासे" (पा०सू०१-१-२८) इत्यस्य वैयर्थ्यापत्तेः। इतीति किम्? घुसंज्ञावत् "स्वंरूपम्" (पा०सू०१-१-६८) इति वचनाच्छब्दस्य सञ्ज्ञा मा भूत्। तथाहि सति "विभाषा श्वेः" (पा०सू० ६-१-३०) इत्यस्य नवाशब्दः श्वयतेरादेश इत्यर्थः स्यात्। इतिशब्दे तु सत्यर्थः सञ्ज्ञीति लभ्यते। तथाहि, लोके ह्यर्थप्रधानः शब्दः 'गौरित्ययमाह' इत्यादौ तु शब्दस्वरूपपरः सम्पद्यते । व्याकरणे तु "स्वंरूपम्" (पा०सू०१-१-६८) इति परिभाषणात् स्वरूपपरत्वमौत्सर्गिकम् । इतिशब्दसमभिव्याहारे त्वर्थपरतेति विशेषः । अर्थस्यैव सञ्ज्ञात्वमपि, न तु विभाषाशब्दस्येत्युक्तम्। तेन "हृक्रोरन्यतरस्याम्" (पा०सू०१-४-५३) इत्यादावपि वैरूप्योद्धारो बोध्यः।

एतत्प्रसङ्गेन त्रिविधा अपि विभाषाः प्रायेण भाष्ये विवेचिताः। तत्राप्राप्तविभाषामध्ये "ओयङि" (पा०सू०८-२-२०) "अचिविभाषा" (पा०सू०८-१-२१) इति पठितम्। अत्र वदन्ति—अप्राप्तविभाषेयमिति सत्यं, किन्तु त्रिसंशया इत्युपक्रम्य प्राप्तेऽप्राप्ते उभयत्र वेत्येवंरूपकोटित्रयप्रकारकसंशयविषयीभूतानामेव व्युत्पाद्यमानत्वादत्रापि कोटित्रयस्योक्तिसम्भवो वक्तव्यः । स च दुर्वचः । तथाहि, 'निजेगिल्यते' इत्यत्र "ग्रो यङि" (पा०सू०८-२-२०) इति नित्यं लत्वं विभाषायास्तु तत्र प्राप्तिरेव नास्ति। 'गिलति' 'गिरति' इत्यादौ तु विभाषा, "ग्रो यङि" (पा०सू०८-२-२०) इत्यस्य तु प्राप्तिरेव नास्ति। तत् कुतः प्राप्तविभाषापक्षः? अथोच्येत-"अचि विभाषा" (पा०सू०८-२-२१) इत्यत्र यङीत्यनुवर्त्य यङ्निमित्तस्य रेफस्याचि अनन्तरे वा लत्वमिति व्याख्यानादस्त्येवोक्तिसम्भव इति । तन्न, निजेगिर् य अच् इति स्थिते हि "ग्रो यङि" (पा०सू०८-२-२०) इति प्राप्नोति। न चास्यामवस्थायां विभाषायाः प्राप्तिः, अच्परत्वाभावात् अथ ब्रूयाः विभाषारम्भसामर्थ्याद्यङ्लुकः पूर्वं "ग्रो यङि" (पा०सू०८-२-२०) इति न भवतीति, एवमप्युभयत्रविभाषात्वं दुर्लभमेव। 'गिलति' 'गिरति' इत्यादौ विभाषायाश्चरितार्थत्वेन यङ्लुकः प्रागेव "ग्रो यङि" (पा०सू०८-२-२०) इत्यस्य प्रवृत्तेरुभयोरसमानकालिकत्वात् । न च लत्वस्यासिद्धतया

ततः प्रागेव लुगिति वाच्यम्, अन्तर्भूतयङपेक्षत्वेनान्तरङ्गं लत्वम् प्रति बहिर्भूताच्प्रत्ययापेक्षत्वेन बहिरङ्गस्य लुकोऽसिद्धत्वात् पूर्वाभावेन "पूर्वत्रासिद्धम्" (पा०सू०८-२-१) इत्यस्याप्रवृत्तेरिति।

अत्रोच्यते—प्राप्तविभाषात्वे तावत् समनन्तरोक्तरीत्यैवोक्तिसम्भवः। उभयत्रविभाषात्वे त्वित्थम्—"अन्तरङ्गानपि" (प०भा०५२) इति न्यायेन लत्वात् पूर्वं लुक्। न च लुङ्निमित्तमजेव दुर्लभः, तस्यार्थापेक्षत्वेन बाहिरङ्गतयाऽसिद्धत्वात् पूर्वाभावेन "पूर्वत्रासिद्धम्" (पा०सू०८-२-१) इत्यस्याप्रवृत्तेः। तथाचाचः पूर्वमेव लत्वं स्यादिति वाच्यम्, कृतितुग्विधिग्रहणेन हि बाहिरङ्गपरिभाषाया अनित्यत्वज्ञापनात् धर्मिग्राहकप्रमाणेन लुक इव तदुपजीव्यानां समासादीनामपि प्राबल्यसिद्धेश्च। ननु कृतेऽचि तन्निमित्ते लुकि च सति निजेगिर् अच् इति स्थिते "ग्रो यङि" (पा०सू०८-२-२०) इति न प्राप्नोति, यङ्परत्वाभावात्। प्रत्ययलक्षणं तु "न लुमता" (पा०सू०२-३-६९) इति निषिद्धम्। तत्र ह्यङ्गस्येत्यनेनाङ्गाधिकारो न निर्दिश्यते इति वक्ष्यते। न च स्थानिवद्भावः लुका लुप्तं न स्थानिवदिति निषेधात् अज्झलादेशत्वाच्च। तथा च कथमुभयत्र विभाषेति चेत्? न, नधातुलोपसूत्रप्रत्याख्यानपक्षे पृथगल्लोपाश्रयणेन स्थानिवद्भावसम्भवात्। न च "पूर्वत्रासिद्धे न स्थानिवत्" (भा०इ०) इति निषेधः "तस्य दोषः संयोगादिलोपलत्वणत्वेषु" (भा०इ०) इति सापवादत्वात्। यद्यपि "अचि विभाषा" (पा०सू०८-२-२१) इत्यस्य "पूर्वत्रासिद्धम्" (पा०सू०८-२-१) इति "ग्रो यङि" (पा०सू०८-२-२०) इति प्रत्यसिद्धत्वाद्विप्रतिषेधासम्भवः। ततश्च सत्यामपि यङीत्यस्य निवृत्तावुभयत्रविभाषात्वं न सम्भवति। तथापि 'अधुना' इत्यादिवल्लाघवार्थं 'अमुना' इत्येव वक्तव्ये "न मुने" (पा०सू०८-२-३) इत्युक्तेर्योगविभागार्थतया न योगे योगोऽसिद्धः किन्तु प्रकरणे प्रकरणमिति चासिद्धत्वं न भवतीत्याशयेनोभयत्रविभाषात्वे उक्तिसम्भवो बोद्धव्यः। सिद्धान्ते तु विभाषाया असिद्धत्वादेव नित्यं लत्वं समुदायलोपवादिनां तु मते अजपेक्षयान्तरङ्गत्वान्नित्यं लत्वामिति व्यवस्थितविभाषेति वा समर्थयितव्यम्।

इति श्रीशब्दकौस्तुभे प्रथमस्याध्यायस्य प्रथमे पादे षष्ठमाह्निकम्॥

---

इग्यणः सम्प्रसारणम् (पा०सू०१-१-४५)। यणः स्थाने इक् भवतीत्येवंरूपो वाक्यार्थः, यण्स्थानिक इग्रूपो वर्णश्चेत्युभयमपि सम्प्रसारणसञ्ज्ञं स्यात्। तत्र "ष्यङः सम्प्रसारणम्" (पा०सू०६-१-१३)

इत्यादिषु विधिप्रदेशेषु वाक्यार्थस्य ग्रहणं "सम्प्रसारणाच्च" (पा०सू० ६-१-१०८) इत्याद्यनुवादप्रदेशेषु वर्णस्येति विवेकः । पूर्वसूत्रादिति-शब्दानुवृत्तेर्वाक्यार्थस्य संज्ञित्वमिति लभ्यते । तत्प्रत्याख्यानपक्षे तु वाक्यमेव संज्ञि । न चैवं तदेव विधेयं स्यादिति वाच्यम्, "वाह ऊठ्" सम्प्रसारणमितिसामानाधिकरण्यबलेन तदुपस्थापितार्थस्यैव विधेयत्वनिर्णयात् । न चैवमपि "ष्यङः सम्प्रसारणम्" (पा०सू०६-१-१३) इत्यादौ दोषतादवस्थ्यम्, सामान्यापेक्षज्ञापकाश्रयणात् । ननु तथापि वाक्यतदर्थयोरन्यतरस्य संज्ञित्वमस्तु वर्णस्य तु कथमिति चेत् ? तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणेनार्थद्वयाभ्युपगमादित्यवेहि । अत्र च विधेयानुवाद्यसमर्पकविभक्त्या सूत्रे निर्देश एव लिङ्गम् । आह च-विभक्तिविशेषनिर्देशस्तु ज्ञापक उभयसंज्ञात्वस्येति । उभयोः संज्ञेति षष्ठीतत्पुरुषः । भर्तृहरिश्चाह—

सम्प्रसारणसंज्ञायां लिङ्गाभ्यां वर्णवाक्ययोः ।
प्रविभागस्तथा सूत्र एकस्मिन्नेव जायते ॥
तथा द्विर्वचनेचीति तन्त्रोपायादिलक्षणः ।
एकशेषेण निर्देशो भाष्य एव समर्थितः ॥ इति ॥

तन्त्रं च शब्दतन्त्रमर्थतन्त्रं वेति मतभेदेन व्यवस्था बोद्धव्या । अर्थभेदाच्छब्दभेदे आद्यः पक्षः । शब्दैक्ये द्वितीयः । आद्येऽपि व्यञ्जकध्वनिमात्रभेदे व्यङ्ग्यैक्ये आवृत्तिरेवेत्यादि बोध्यम् । एवञ्च--

तन्त्रत्वमैकरूप्येण भवेत्तुल्योपकारतः ।
उपकारान्यथात्वे तु भवेदावृत्तिलक्षणम् ॥

इति मीमांसकमर्यादानुरोधो वैयाकरणैर्न कर्त्तव्यः, तस्य भाष्यादिसकलवैयाकरणग्रन्थविरुद्धत्वात्, मूलयुक्तिशून्यतया दुरुपपादत्वाच्चेति दिक् । यद्वा, वाक्यार्थ एव संज्ञी अनुवादे तु तन्निर्वृत्तो वर्णो लक्ष्यते । सम्प्रसारणाज्जातं सम्प्रसारणमिति । अथ वा वर्ण एव संज्ञी । विधिप्रदेशेषु तु सूत्रशाटकवद्भाविसंज्ञाश्रयणीयेति । सर्वेऽप्येते पक्षा भाष्ये स्थिताः ।

स्यादेतत्, 'अदुहितराम्' इत्यत्र लकारस्य यणः स्थाने उत्तमपुरुषैकवचनमिट् । तस्य च सम्प्रसारणसंज्ञायां सत्यां "हलः" (पा०सू० ६-४-२) इति दीर्घः स्यात् तरपं प्रति लङन्तस्याङ्गत्वादिति । अत्राहुः-संख्यातानुदेशाद्यकारस्थानिकस्यैव इकारस्य संज्ञा न तु लकारस्थानिकस्येति ।

अत्रेदमवधेयम्-वाक्यार्थः संज्ञीति पक्षे तस्योद्देश्यविधेयसंसर्ग-

रूपतया तत्र यथासंख्यपरिभाषोपस्थितौ यणः स्थाने इक्स्याद्यथासंख्य-मित्यवान्तरवाक्यार्थः। सोऽयं सम्प्रसारणसंज्ञः स्यादिति महावाक्यार्थः। नचावान्तरवाक्यार्थं गृहीत्वा "वातिवातिद्राति" (पा०सू०५०८-४-१७) इत्यादावतिप्रसङ्गः, तस्य संज्ञासम्बन्धमात्रफलकत्वात्। अन्यथा "ष्य-ङः सम्प्रसारणम्" (पा०सू०६-१-१३) इत्यादेर्वैयर्थ्यापत्तेरतो नोक्तदो-षः, अदुहीत्यादेस्तज्जत्वाभावाच्च। उभयसंज्ञात्वपक्षेऽपि उपस्थितत्वा-द्यथासंख्यप्रवृत्त एव वर्णः संज्ञीति। अतः 'अदुहितराम्' इत्यत्र नाति-प्रसङ्गः। इदं च कर्मकर्त्तरि रूपमिति हरदत्तः। उपलक्षणं चैतत्, केव-ले कर्तर्यपि सम्भवात्। वर्ण एव संज्ञीति पक्षे तु यथासंख्यं दुर्लभम्, अनुवादे परिभाषाणामनुपस्थानस्योपपादितत्वात्। न चैवं स्थानेयोगो-ऽप्यस्मिन्पक्षे न लभ्येतेति वाच्यम् "षष्ठी स्थाने योगा"(पा०सू०१-१-४९) इत्यत्रानुवर्त्य एतत्सूत्रस्य व्याख्येयत्वात्। उक्तं हि "इको गुणवृद्धी" (पा०सू०१-१-३) इति सूत्रे-"सिद्धं तु षष्ठ्यधिकारे वचनाद्" इति। इहैव वा सिंहावलोकनन्यायेन स्थानग्रहणापकर्षोऽस्तु, यथासंख्यं तु दुर्लभमित्युक्तम्। कथं तर्हि 'अदुहितराम्' इत्यत्र नातिप्रसङ्ग इति चेत्? तन्त्रावृत्त्याद्याश्रयणेन संप्रसारणस्येत्यत्र तद्भावि-तग्रहणात्। यद्वा, कार्यकालपक्षे यणः स्थाने संप्रसारणमिग्भव-तीति वाक्यार्थादनुवादतैव नास्ति तत्र परिभाषोपस्थितौ सत्यां यथासंख्यप्रवृत्त एव संज्ञी। स एव सम्प्रसारणस्येत्यादौ उप-तिष्ठते। अथवा स्थानक्रमेण सम्बन्धो लौकिकन्यायसिद्धत्वादनु-वादेऽपि सुलभः। यथासंख्यसूत्रं परं न प्रवर्त्ततामिति दिक्।

'द्युभ्याम्' इत्यत्र "हलः" (पा०सू०६-४-२) इति दीर्घो न "दिव उत्" (पा०सू०६-१-१३१) इति तपरकरणात्। अत एव 'द्युलोकः' इ-त्यत्र "संप्रसारणस्य" (पा०सू०६-३-१३९) इति दीर्घो न। नन्वेवं "भाव्यमानोऽप्युकारः सवर्णान्गृह्णाति" (प०भा०२०) इत्यर्थे ज्ञापकतया कथमस्योपन्यास इति चेत्? न, तस्य वाक्यार्थः संज्ञीति पक्षेणोक्तत्वात् "संप्रसारणस्य" (पा० सू०६-३-१३९) इत्यत्र तद्भावितग्रहणाद्वा। प-क्षान्तरे तु "ऋत उत्" (पा०सू०६-१-१११) इति ज्ञापकं बोद्धव्यम्। नन्वेवम् 'अक्षद्युवौ' 'अक्षद्युवः' इत्यादौ ऊठः सम्प्रसारणसंज्ञायां "सं-प्रसारणाच्च" (पा०सू०६-१-१०८) इति पूर्वरूपं स्यादिति चेत्? न, संप्र-सारणपूर्वत्वे समानाङ्गग्रहणस्य वार्तिककृता कृतत्वात्। तत्प्रत्याख्यान-पक्षे तु "वार्णादाङ्गं बलीयः" (प०भा० ५५) इत्युवङ् भविष्यति। वा-क्यार्थः संज्ञीत्यादिपक्षान्तरे तु पूर्वरूपप्राप्तिरेव नास्ति। 'द्यूतः' 'जीनः'

इत्यादौ तु "हलः" (पा०सू०६-४-२) इति सूत्रसामर्थ्यात्सम्प्रसारणनिर्वृत्तस्यादेशेऽपि दीर्घप्रवृत्तिः। वर्णसंज्ञापक्षेपि अल्विधौ स्थानिवद्भावासम्भवेन "हलः" (पा०सू०६-४-२) इतिसूत्रारम्भसामर्थ्यात्सम्प्रसारणस्यादेशे कार्यप्रवृत्तेर्वाच्यत्वादिति दिक्॥

आद्यन्तौ टकितौ (पा०सू०१-१-४६)। टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः। भविता। यापयति। "पुरस्तादपवादाः" (प०भा० ६०) इति न्यायेन स्थानेयोगत्वस्यायमपवादः। "प्रत्ययः" (पा०सू०३-१-१) "परश्च" (पा०सू०३-१-२) इत्यनेन तु परत्वाद्बाध्यते। तेन "चरेष्टः" (पा०सू०३-२-८) "गापोष्टक्" (पा०सू०३-२-१६) "व्रीहिशाल्योर्ढक्" (पा०सू०५-२-२) इत्यादयः परा एव भवन्ति। परेण परिभाषाप्रकरणेन साहचर्यात्परिभाषेयम्। भाष्ये तु संज्ञापक्षोऽपि स्थापितः। तथाहि, टकिताविति कर्मधारयः। इत्संज्ञकौ टकारककारौ आद्यन्तयोः संज्ञे स्तः। तथा च इट् इति बहुव्रीहिः इः ट् आदिर्यस्येति विग्रहः। तथा च स्थानेन्तरतमपरिभाषया तव्यस्य इतव्यादेशो सिद्धमिष्टम्। एवं 'यापयति' इत्यत्र यातेर्याप् आदेशः, पुः क् यस्येति व्याख्यानात्। न चैवमाद्यन्तौ टकौ इत्येवास्त्विति वाच्यम् "आलजाटचौ" (पा०सू०-५-२-१२५) "ठस्येकः" (पा०सू०७-३-५०) इत्यादावपि टकयोराद्यन्तसंज्ञात्वप्रसङ्गात्। इत्संज्ञकत्वेन तु देशविशेषो लक्ष्यते। तेन इत्संज्ञकस्य यो देशस्तत्रावस्थितौ टकौ संज्ञे। न चाटचष्टकार इकादेशस्य ककारश्च तथेति नोक्तदोषः। नन्वस्मिन्पक्षे "लुङ्लङ्लृङ्क्षु" (पा०सू०६-४-७१) इत्यादिना भू इत्यस्याभू इत्यादेशः स्यात्स चोदात्त इत्यन्तोदात्तः प्रसज्येत। नैष दोषः। अः ट् उदात्तश्च यस्येति त्रिपदबहुव्रीह्याश्रयणात्। विशेषणस्यापि उदात्तस्य सौत्रः परनिपातः। तेनोदात्ताकारादिरादेश इति सिद्धम्। न चैवमपि "आडजादीनाम्" (पा०सू०६-४-७२) इत्यत्र दोषतादवस्थ्यम्। अनुवृत्तेनोदात्तशब्देन सह श्रूयमाणस्य बहुव्रीह्यसम्भवादिति वाच्यम्, "आडजादीनाम्" (पा० सू०६-४-७२) इति सूत्रस्य प्रत्याख्यास्यमानत्वात्। वक्ष्यति हि-"अजादीनामटा सिद्धम्" इत्यादि।

मिदचोऽन्त्यात्परः (पा०सू०१-१-४७)। सन्निविष्टानामचां मध्ये अन्त्यो योऽच् तस्मात्परो मित्स्यात् स च पूर्वान्तः। स्थानेयोगस्य परश्चेति परत्वस्य चापवादः। वनानि। यशांसि। रुणद्धि। ननु पूर्वयोगवदयमपि पुरस्तादपवादन्यायेन स्थानेयोगमात्रस्यापवादोऽस्तु, न तु "प्रत्ययः" (पा०सू०३-१-१) "परश्च" (पा०सू०३-१-२) इत्य-

स्यापीति चेत् ? न, बाध्यसामान्यचिन्तामाश्रित्य स्वविषये प्राप्तं सर्वं बाध्यते इतीहाभ्युपगमात् । अन्यथा श्नमो मित्करणं व्यर्थं स्यात् । न च श्रवणार्थ एव श्नमो मकार इति वाच्यम्, "तृणह" (पा०सू०७-३-९२) इति निर्देशात् । अच इति जात्यभिप्रायेणैकवचनम् । निर्द्धारणे षष्ठी । न चान्त्यादित्यनेन सामानाधिकरण्यादच इति पञ्चम्येवास्तामिति वाच्यम् "शे मुचादीनाम्" (पा०सू०७-१-५९) इत्यादावन्त्यस्याचोऽसम्भवेनैतत्परिभाषाया अप्रवृत्तावलोन्त्यपरिभाषाप्रसङ्गात् । तथाच तत्र मित्करणवैयर्थ्यापत्तेः । पूर्वसूत्रे आद्यन्ताविति समासनिर्देशेऽपीहान्तग्रहणमात्रमनुवर्त्तते एकदेश एव स्वरितत्वप्रतिज्ञानात् । तेन मित्पूर्वान्तः । यदि त्वभक्तः स्यात्तदा 'ताता पिण्डानाम्' इत्यादौ "शेश्छन्दसि बहुलम्" (पा०सू०६-१-७०) इति शेर्लोपे कृते नलोपो न स्यात्, प्रातिपदिकान्तत्वाभावात् । तथा 'वहंलिहः' इत्यत्र "वहाभ्रे लिहः" (पा०सू०३-२-३२) इति खशि "अरुर्द्विषदजन्तस्य" (पा०सू०६-३-६७) इति मुमि "मोऽनुस्वारः" (पा०सू०८-३-२३) इत्यनुस्वारो न स्यात्, अपदान्तत्वात् । यदि त्वादिग्रहणमनुवर्त्य परादिः क्रियेत, तदा 'वारिणे' इत्यादौ 'घेर्ङिति" (पा०सू०७-३-१११) इति गुणः स्यात्, 'वहंलिहः' इत्यत्रानुस्वारो न स्यात्, 'अतिशयितः सखा येषां तान्यतिसखीनि ब्राह्मणकुलानि' इत्यत्र "सख्युरसम्बुद्धौ" (पा०सू०७-१-९२) इति णित्त्वप्रयुक्ता वृद्धिः प्राप्नोति । सा हि गौणत्वेऽपीष्यते अस्थ्याद्यनङ्वत् । एतच्चेह सूत्रे भाष्यकैयटयोः स्फुटम् । तस्मात्पूर्वान्तपक्ष एवात्र स्थितः ।

अत्र वार्त्तिकम्-अन्त्यात्पूर्वो मस्जेरनुषङ्गसंयोगादिलोपार्थम् । मग्नः । मग्नवान् । "ओदितश्च" (पा०सू०८-२-४५) इति निष्ठानत्वम् । तस्यासिद्धत्वात्कुत्वम् । "मस्जिनशोर्झलि" (पा०सू०७-१-६०) इति नुम् । स च यद्यन्तादचः परः स्यात्तदा "अनिदिताम्" (पा०सू०६-४-२४) इत्यनुषङ्गलोपो न स्यात् । उपधाभूतस्य नकारस्यानुषङ्ग इति प्राचां संज्ञा । अथ "स्कोः" (पा०सू०८-२-२९) इति सलोपे कृते नकार उपधात्वाल्लुप्यतामिति चेत् ? न, नलोपं प्रति "स्कोः" (पा०सू०८-२-२९) इतिलोपस्यासिद्धत्वात्, बहूनां समवाये समुदायस्यैव संयोगसंज्ञेति पक्षे सलोपस्याप्राप्तेश्च । तथाच 'मङ्क्ता' 'मङ्क्तव्यम्' इत्याद्यपि प्रयोजनं बोध्यम् ।

भर्जिमर्च्योश्च । अन्त्यात्पूर्वो मित् इत्यनुवर्त्तते । "भ्रस्जी भर्जने" (भ्वा०आ०१७८) अस्मादौणादिके अचि कृते ऊमागमः भरूजा । "मर्च शब्दार्थे" (चु०प०१६५०) चुरादिकः, अस्माद्, "अच इः" (उ०सू०४-५८८) इ-

त्यौणादिक इप्रत्यय ईमागमः। निपातनात्सिद्धम्। भरूजाशब्दो ह्यङ्गुल्यादिषु पठ्यते मरीचिशब्दो बाह्वादिषु। उणादिषु तु "मृकणिभ्यामीचिः" (उ०सू०४-५१९) इति ईचिप्रत्ययं कृत्वा मरीचिशब्दो व्युत्पादितः। तदुपायान्तरं बोध्यम्।

एच इग्घ्रस्वादेशे (पा०सू०१-१-४८)। आदिश्यमानेषु ह्रस्वेषु मध्ये एच इगेव स्यात्। हेशब्दमतिक्रान्तं कुलमतिहि कुलम्। चित्रगुः। अतिरिः। अतिनु। यदत्र वक्तव्यं तदेओङ्सूत्रे एवोक्तम्।

षष्ठी स्थाने योगा (पा०सू०१-१-४९)। अनेकसम्बन्धपरतया सम्भाव्यमाना षष्ठी स्थानप्रयुक्तसम्बन्धपरेति बोध्यम्। "अस्तेर्भूः" (पा०सू०२-४-५२) अस्तेः समीपोऽनन्तरो वेति संशये तत्स्थाने उच्चारणीय इत्यर्थः। स्थानं च प्रसङ्गः। दर्भाणां स्थाने शरैः प्रस्तरितव्यमितिवत्। तथा च इगुच्चारणे प्रसक्ते यणुच्चारणीय इत्याद्यर्थपर्यवसाने सामीप्यादयः सम्बन्धा अर्थाद्व्यावृत्ताः। योगः सम्बन्धः, स बहुविधोऽस्त्यस्या इति योगा। अर्शआदित्वान्मत्वर्थीयोऽच्। स च भूम्नि, अन्यथा विशेषणवैयर्थ्यापत्तेः। तेनानेकसम्बन्धपरतया सम्भाव्यमानेत्यर्थो लभ्यते। अयोगेऽति वा छेदः। अनिश्चितयोगविशेषेत्यर्थः। योगेत्ययोगेति वा किम्? "ऊदुपधाया गोहः" (पा०सू०६-४-८९) "शास इदङ्हलोः" (पा०सू०६-४-३४) इत्यादौ शास इत्यत्र मा भूत्। सति हि तत्रापि स्थानेयोगत्वे गोहिशासोः स्थाने धातुमात्रस्योपधायाश्च ऊदितौ स्यातामिति दिक्।

यद्वा, स्थाने योगो यस्या इति बहुव्रीहिः। अत एव निपातनात्सप्तम्या अलुक्। यद्वा, स्थानेन योगोऽस्या इति विग्रहः। निपातनादेत्वम्। न चानयोः पक्षयोर्गोहः शास इत्यादावतिप्रसङ्गः, परिभाषाणामनियमे नियन्तुं प्रवृत्तेः। युक्तं चैतत्। आकाङ्क्षापूर्वकत्वात्सम्बन्धस्य, इह चोपधासन्निधानेनावयवषष्ठीत्वे निर्णीते आकाङ्क्षाविच्छेदात्। लोकेऽपि हि पन्थानं पृच्छन्तं प्रत्यमुष्मिन्नवकाशे दक्षिणो ग्रहीतव्योऽमुष्मिन्नुत्तर इत्यादावुपदिष्टे सति यत्र मार्गद्वैधात्संशयस्तत्रैव तदुपतिष्ठते न त्वसंदिग्धे तिर्यक्पथेऽपीति दिक्।

भाष्यकारास्त्वाहुः—"अस्तेर्भूः" (पा०सू०२-४-५२) इत्यादावनेकसम्बन्धप्रसङ्गेऽपि लक्ष्यानुरोधादन्तरङ्गत्वात् "स्थानिवदादेशः" (पा० सू०१-१-५६) इति ज्ञापकाच्च स्थानेयोगत्वैव व्याख्यास्यते। तस्मान्नायमेतस्य सूत्रस्य सूत्रार्थः, किन्तु षष्ठ्यन्तमुच्चार्यमाणमेव स्थानेन युज्यते न तु प्रतीयमानमिति सूत्रार्थः। तदेतदुच्यते "निर्दिश्यमानस्या-

देशा भवन्ति" (प०भा०१२) इति। तेन "पादः पत्"(पा०सू०६-४-१३०) इत्यस्यायमर्थः—पाच्छब्दान्तं यदङ्गं तदवयवस्य पाच्छब्दस्य सर्वस्य पदादेश इति। "अलोऽन्त्यस्य"(पा०सू०१-१-५२) "आदेः परस्य" (पा० सू०१-१-५४) इति तु योगौ आरम्भसामर्थ्यादस्य बाधकौ। "अनेकाल्शित्सर्वस्य" (पा०सू०१-१-५५) इत्यनेन तु सहाविरोधादस्य समुच्चयेन प्रवृत्तिरिति। एवं स्थिते तन्त्राद्याश्रयणेन प्रागुक्तोऽपि सूत्रार्थः सुवचः। फलं तु स्फुटप्रतिपत्तिरिति दिक्।

स्थानेऽन्तरतमः (पा०सू०१-१-५०)। प्राप्यमाणानां मध्ये सदृशतम आदेशः स्यात्। सादृश्यं च चतुर्धा। स्थानतोऽर्थतो गुणतः प्रमाणतश्चेति। स्थानतो यथा—सुध्युपास्यः। मध्वरिः। धात्रंशः। लाकृतिः। यत्तु यथासंख्यसूत्रेणैवेहान्यथासिद्धिरित्युक्तं भाष्यादौ, तदभ्युच्चयमात्रम्, अर्थतः साम्यविवक्षायां यथासंख्यालाभात्। इको हि षट्षष्टिः यणस्तु सप्तेति वैषम्यात्। अथेक्शब्दाद्यण्शब्दाच्च प्रथमं चतुर्णां चतुर्णामुपस्थितेरस्त्येव साम्यमिति चेत्तर्हि सुध्युपास्येति दीर्घस्य कथं यणादेशः। इकारेण ग्रहणादिति चेत्तर्हि तृतीयेन ऋकारेण चतुर्थेन ऌकारेण च परस्परस्य ग्रहणाल्लाकृतौ रेफप्रसङ्गः धात्रंशे च लकारप्रसङ्गः, यवौ च सानुनासिकनिरनुनासिकौ न व्यवतिष्ठेयातामिति दिक्।

दैत्यारिः, श्रीशः, इत्याद्यपीहोदाहरणम्।

अर्थतो यथा। वातण्ड्ययुवतिः। वतण्डशब्दाद् "वतण्डाच्च" (पा०सू०४-१-१०८) इत्यपत्ये यञ्। तस्य "लुक्स्त्रियाम्" (पा०सू० ४-१-१०९) इति लुक्। शार्ङ्गरवादित्वान् ङीन्। वतण्डी चासौ युवतिश्चेति विग्रहे "पोटायुवति" (पा०सू०२-१-६५) इत्यादिना समासः। "पुंवत्कर्मधारय" (पा०सू०६-३-४२) इत्यतिदिश्यमानः पुंशब्दो वतण्डापत्यवाचिनो वतण्डीशब्दस्य तदपत्यवाची वातण्ड्यशब्दो भवति।

गुणतो यथा—पाकः। त्यागः। "चजोः कुघिण्ण्यतोः" (पा०सू० ७-३-५२) इति चकारस्याल्पप्राणस्याघोषस्य तादृश एव ककारः। जकारस्य तु घोषस्याल्पप्राणस्य नादवतः स्थाने तादृगेव गकारः।

प्रमाणतो यथा—अमुम्। अमू। अमून्। "अदसोऽसेः" (पा०सू० ८-२-८०) इत्यनेन ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ उकारः।

इह स्थाने इत्यनुवर्तमाने पुनः स्थानेग्रहणादन्योऽपि वाक्यार्थः सम्मतः। तात्वादिरूपे स्थाने योऽन्तरतमस्तत्प्रयुक्तान्तर्यवानिति या

वत्। स प्राप्यमाणानां मध्ये स्यादिति। तदुक्तम्—"यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः" इति। तेन 'चेता' 'स्तोता' इत्यादौ प्रमाणत आन्तर्यवानप्यकारो न भवति। वाक्यभेदे च तमब्ग्रहणमेव लिङ्गम्। एकस्मिन्नेव वाक्यार्थे संमते हि "स्थानेऽन्तर" इत्येव ब्रूयात्। सिद्धान्ते तु 'वाग्घरिः' इत्यादौ "सोष्मणः सोष्माणः" इति द्वितीयाः प्रसक्ताः "नादवतो नादवन्त" इति तृतीयाः प्रसक्ताः, तमब्ग्रहणात्तु चतुर्था भवन्ति। ते हि सोष्माणो नादवन्तश्च। ऊष्मा ऊष्मत्वं वर्णधर्मस्तत्सहिताः सोष्माणः। तथा च बह्वृचानां प्रातिशाख्यम्—"वर्गे वर्गे च प्रथमावघोषौ युग्मौ सोष्माणावनुनासिकोऽन्त्यः" (ऋ०प्रा०१-३ ) इति। "शादय ऊष्माणः सस्थानेन द्वितीया हकारेण चतुर्थाः" इति शिक्षा। इह त्रीणि वाक्यानि। उष्मशब्दश्च धर्मिवचनः। शषसहा उष्माण इति प्रथमवाक्यार्थः। सस्थानेनेति "इत्थंभूतलक्षणे तृतीया" (पा०सू०२-३-२१)। हशषसाः क्रमेण ख-छ-ठ-थानां द्वितीयानां सस्थानाः। यथा शादय उष्माणस्तथैव खादयोऽपीत्यर्थः। फकारस्य तु यद्यपि सस्थान ऊष्मा नास्ति तथापि तस्य विशिष्यैव ऊष्मत्वं बोध्यम्। हकारेण चतुर्था इति। यथा हकार ऊष्मा एवं तेऽपीत्यर्थः। नन्वेवम् 'इष्टः' 'उप्तः' इत्यादावान्तर्यादर्धमात्रस्य यणः स्थाने अर्द्धमात्र इक् स्यात्। 'दध्यत्र' 'सुध्युपास्यः' इत्यादौ तु मात्रिकद्विमात्रिकयोरिकोस्तथाविध एव यण् स्यादिति चेत्? न, अर्द्धमात्रस्येको मात्रिकद्विमात्रिकव्यञ्जनस्य च लोकवेदयोरप्रसिद्धत्वात्। योऽस्ति स एव भविष्यति।

इह भाष्ये अन्तरतम इति सप्तम्यन्तपाठोऽप्युपन्यस्य दूषितः। तथाहि, "अन्तरतमउरण् रपरः" इति संहितया तावत्सूत्रकृदपाठीत्। पदकारास्तु व्याख्यातारः। तत्र सप्तम्यन्तमपि शक्यं छेत्तुम्। षष्ठीति चानुवर्त्तते। अन्तरतमे स्थानिनि षष्ठी उपसंहर्त्तव्येति सूत्रार्थः। एवं च "अक सवर्णे दीर्घः" (पा०सू०६-१-१०१) इत्यत्र विधेयस्य दीर्घस्यान्तरतमे स्थानिन्यक इति षष्ठ्या उपसंहारात्सिद्धमिष्टम्। तथा "वान्तो यि प्रत्यये" (पा०सू०६-१-७९) इत्यत्र एच इत्यनुवृत्तायाः षष्ठ्या वान्तादेशस्यान्तरतमयोरोदौतोरुपसंहारात्सिद्धम्। अन्यथा एज्मात्रस्य वान्तादेशः स्यात्।

अत्रेदं दूषणम्—"इको यणचि" (पा०सू०६-१-७७) इति यण् ह्रस्वानामेव स्यान्न तु दीर्घाणाम्। अर्द्धमात्रस्य हि मात्रिकः सन्निकृष्ट इति तत्रैवेक इति षष्ठ्या उपसंहारात्। तथा "इको गुणवृद्धी" (पा०सू०१-१-३)

"अचोञ्णिति" (पा०सू०७-२-११५) इति षष्ठ्योर्गुणवृद्ध्योरन्तरतमेष्वेव इक्ष्वक्षु चोपसंहारात् 'नेता' 'लविता' 'नायकः' 'लावकः' इत्यादावेवस्यात्। 'चेता' 'स्तोता' 'चायकः' 'स्तावकः' इत्यादौ तु न स्यादितिदिक्। तदेवं सप्तम्यन्तपक्षस्य दुष्टत्वात्प्रथमान्तपक्ष एव युक्त इति स्थितम्।

स्यादेतत्, एवं सति एज्मात्रस्य वान्तादेशः स्यादिति चेत्? अत्राहुः—पूर्वसूत्रे तावद्यथासंख्यं प्रवृत्तम्। अन्तरतमपरिभाषा वा। अर्थाधिकारश्चेहाश्रीयते। यादृशो वान्तादेशः पूर्वं दृष्ट ओकारस्थानिकोऽव् औकारस्थानिकश्चाव् तादृशो यि प्रत्यये भवतीति सूत्रार्थः। यद्वा, वान्त इति न करिष्यते। न चैवं 'चेयं' 'नेयम्' इत्यादावतिप्रसङ्गः "क्षय्यजय्यौ" (पा०सू०६-१-८१ इति योगो विभज्यते कण्ठतालव्यस्य चेद्भवति क्षिज्योरेवेति नियमपरतया व्याख्यानात्। क्षिज्योः शक्यार्थ एवेति द्वितीयसूत्रार्थः। तेनार्हाद्यर्थे तयोरपि नेति बोध्यम्।

नन्वेवमपि शार्ङ्गरवादिगणपठितेन "नृनरयोर्वृद्धिश्च" (ग०सू०१२५) इति सूत्रेण नरशब्दस्य 'नारी' इति रूपं न सिद्ध्येत्। तथा हि, नरशब्दस्य ङीन्संनियोगेन विधीयमाना वृद्धिः "अलोऽन्त्यस्य" (पा०सू०१-१-५२) इत्यन्त्यस्य स्यात्। तथाच "यस्येति च" (पा०सू०६-४-१४८) इति लोपेन तस्यानिवृत्तौ वृद्धिवचनं व्यर्थं स्यात्। न च नृशब्दार्थं तदिति वाच्यम्, एवं हि सति 'नुर्वृद्धिश्च' इत्येव ब्रूयात्। न च नरशब्देऽपि परत्वाद् "यस्य" (पा०सू०६-४-१४८) इति लोपे कृते वृद्धिर्भवन्ती नानर्थिकेति वाच्यम्, प्रत्ययसन्नियोगशिष्टत्वेन वृद्धेरन्तरङ्गत्वात्। ननु वचनसामर्थ्याद् वृद्ध्या लोपो बाध्यताम्, आहो स्विदन्तरङ्गपरिभाषां बाधित्वा परत्वाद्यस्येति लोपे कृते वृद्धिर्भवत्विति संशये परिभाषा बाध एव न्याय्यः। तदुक्तम् "अङ्गगुणविरोधे च तादर्थ्यात्" (जै०सू० १२-२-९-२५) इति। किञ्च "वाह ऊठ्" (पा०सू०६-४-१३२)इत्यत्र ज्ञापितत्वेनानुमेयायाः परिभाषाया एव बाधेनोपपत्तौ साक्षाच्छ्रुतस्य "यस्य" (पा०सू०६-४-१४८) इतिलोपस्य बाधोऽनुचितः। तथाच लोपे कृते वृद्धिरिति सिद्धं 'नारी' इति रूपमिति चेत? सत्यं सिद्धं, किन्तु सप्तम्यन्तच्छेदपक्ष एव। तत्र हि प्रकृतितोऽन्तरतमानिर्वृत्तिरिति वृद्ध्यन्तरतमे स्थानिनि षष्ठ्या उपसंहारात् अकारस्य वृद्धिर्भवति। प्रथमान्तच्छेदपक्षे त्वादेशतोऽन्तरतमनिर्वृत्तिरिति "अलोऽन्त्यस्य" (पा०सू०१-१-५२) इति वचनाद्रेफस्य स्यात्। तस्मात्सिद्धान्ते 'नारी' इति रूपं नरशब्दस्य दुःसाधमिति पूर्वः पक्षः।

अत्राहुः—नरशब्दपाठस्य प्रत्याख्यानमेव भाष्यकृतोऽभिप्रेतं स-

प्रस्यन्तपक्षनिराकरणभाष्येण तथैवानुमानात् । न चैवं नरशब्दाज्जाति-लक्षणङीषि सति 'नरी' इति रूपं स्यादिति वाच्यम्, इष्टापत्तेः । तथाच प्रयुज्यते "किन्नरीणां नारीणाम्" इति । यद्वा, नरशब्दस्य नियतपुंलिङ्गत्वमेवास्तु । तथाच क्वातिप्रसङ्गः ? उक्तप्रयोगस्तु पुंयोगलक्षणे ङीषि भविष्यति, यथान्यासेऽपि तस्य दुर्वारत्वात् । अथवा "नृनरयोः" (ग०सू०१२५) इत्यत्रात इति वर्तते "अजाद्यतष्टाप्" (पा०सू०४-१-४) इति सूत्रात् । तच्चानुवृत्तिसामर्थ्यात्षष्ठ्या विपरिणतं नरशब्देन सह वैयधिकरण्येन सम्बध्यते, न तु नृशब्देन, असम्भवात् । तस्मात्सिद्धं 'नारी' इति ।

अत्रेदं वक्तव्यम् । प्रत्याख्यायतां नाम नरशब्दः "नृनरयोः" (ग० सू०१२५) इति पठतः सूत्रकृतो मते तु कथमुक्तिसम्भवः ? न च 'नरी' इत्येवेष्टामिति वाच्यम्, वृद्धिविधायकसूत्रमध्ये नरशब्दपाठस्य वैफल्यापत्तेः । अत इत्यनुवृत्त्या समर्थनमपि क्लिष्टम्, एकदेशानुवृत्तिविभक्तिविपरिणामाद्याश्रयणात् । किञ्च 'नृनरयोः" (ग०सू०१२५)इति गणपाठे पठ्यते, न त्वष्टाध्याय्याम् । गणे चात इति न प्रकृतम् । तथा "शार्ङ्गरवाद्यञः" (पा०सू०४-१-७३) इत्यादिशब्देन गणसूत्रमपि हृदयमागमय्य तत्रात इत्यस्यान्वयो वाच्यः, स च क्लिष्टतर इति स्पष्टमेव । तस्मादित्थं समाधेयम्—नर इति रान्तं लुप्ताकारानुकरणं तस्य अः नरः । नुश्च नरस्येवेति द्वन्द्वः । चाद्गणे पाठाच्च ङीन् । यद्वा, "स्थानेऽन्तरतमः" (पा०सू०१-१-५०) इत्यत्र तन्त्रेण द्वेधा छेदः सूत्रकृतः सम्मतः, भाष्योक्तरीत्या लौकिकन्यायाश्रयणेन सूत्रप्रत्याख्यानपक्षेऽपि हि प्रकृतित आदेशतश्चेत्युभयथाप्यन्तरतमनिवृत्तिरस्त्येव । सूत्रकृतो मते वाचनिकी सा । भाष्यकृतस्तु न्यायसिद्धेत्यन्यदेतत् । तथा च "वान्तो यि" (पा०सू०६-१-७९) "नृनरयोः" (ग०सू०१२५) इत्यादि सर्वं सुस्थमेव । अत एव चतुर्थे स्थानितोऽन्तरतमनिवृत्तिमाश्रित्य 'नारी' इति रूपं साधयन्हरदत्तोपि न विरुध्यते । "इको यणचि" (पा०सू०६-१-७७) इत्यादावतिप्रसङ्गः परमवशिष्यते । स च "ष्वादिभ्यः" (पा०सू० ८-२-४४) "ष्वादीनां ह्रस्वः" (पा०सू०७-३-८०) इत्यादिज्ञापकेन वाचनिक्या न्यायमूलिकाया वा स्थानितोन्तरतमनिवृत्तेरनित्यतामाश्रित्य परिहर्त्तव्य इति दिक् ।

सूत्रप्रत्याख्यानप्रकारस्तूच्यते । सभायामास्यतामित्युक्ते हि पण्डिताः पण्डितैः सह समासते, शूराः शूरैः, कवयः कविभिः, न तु सङ्करेण । किं बहुना गवां सङ्घं प्रति गौर्धावति, अश्वोऽश्वानामित्यादिव्य-

वस्था तिर्यक्ष्वपि दृश्यते। तस्मात्प्रथमवाक्यार्थस्य लोकत एव लाभान्न तदर्थं सूत्रमारम्भणीयम्। एवं "स्थानत आन्तर्यं बलीयः" (प०भा० ५१३) इत्यपि लोकत एव सिद्धम्। तथाहि, भूयः सहचरितयोरश्वयोर्गवोर्वा सजातीयान्तरसम्वलने सत्यपि कृशत्वपाण्डुत्वादिगुणसदृशानपि हित्वा स्थानसाम्यपुरस्कारेणैव परस्परापेक्षा दृश्यते। तदेवं लोकतः सिद्धे किं वचनेनेति॥

उरण् रपरः (पा०सू०१-१-५१)। ऋवर्णस्य स्थाने यो ऽण् स प्रसङ्गावस्थायामेव रप्रत्याहारपरस्स्यात्। ऋकारेण सावर्ण्यान्त्रिंशत उपस्थाने सति स्थानेऽन्तरतमपरिभाषया रश्रुतिमतः स्थाने रपरो लश्रुतेस्तु लपर इति विवेक्तव्यम्। 'कृष्णर्द्धिः' 'तवल्कारः'। ऋलृस्थाने योऽण् इति ग्रन्थस्तु यथासंख्यभ्रमापादकोऽसङ्गतश्च, शब्दतः साम्येनाभिमतानिर्वाहात्। न हि सूत्रे शब्दद्वयमस्ति। अर्थतस्तु नतरां साम्यम्। अथात्र न यथासंख्यमभिमतं तर्हि किं वृत्तिमध्ये द्वयोरेव विशिष्योल्लेखनेन? आ च आ च रलौ ऋलोः स्थानमिति विग्रहे उश्च उल् च ऋलोरिति विग्रहे वा द्वन्द्वस्य दुर्लभत्वाच्च। स हि "विरूपाणामपि समानार्थानाम्" (का०वा०) इत्येकशेषेण बाध्यते। चित्रगुशब्दस्य चित्रगवीपरतायामिव साधुत्वनिर्वाहार्थं लक्षणमाश्रित्य लक्षितलक्षणया शक्यार्थे पर्यवसानमिति कथञ्चिन्निर्वाहस्तु ग्रन्थे श्रद्धालुभिरास्थेय इति दिक्।

अत्र पक्षचतुष्टयं सम्भाव्यते—उः— स्थाने रपरो ऽण् स्यादिति रपरत्वविशिष्टो ऽण् विधीयत इति प्रथमः पक्षः। उः स्थाने अणामनणां च प्रसङ्गे अणेवेति नियमः। स च रपर इति वाक्यभेदेन रपरत्वं विधीयत इति द्वितीयः पक्षः। उः स्थाने योऽणित्यनूद्य तस्य रपरत्वं विधीयत इति तृतीयः पक्षः। प्रसङ्गावस्थायामेव रपरत्वं विधीयत इति चतुर्थः। तत्राद्ये पक्षे नाप्राप्तेषूदात्तादिषु विधीयमानोऽण् तेषां बाधकः स्यात्, तैरनवरुद्धस्य विषयस्यालाभात्। एवं तदा वचनव्यक्तिः— षष्ठीनिर्दिष्टमात्रस्य भवन्नादेशोऽन्तरतमः स्यात्, ऋवर्णस्य त्वण् रपर इति। ततश्चोदात्तानुदात्तस्वरितानुनासिकेषु दोषः। तथाहि, 'कृतिः' इत्यत्र "ञ्नित्यादिर्नित्यम्" (पा०सू०६-१-१९७) इति प्राप्तम् ऋकारं बाधित्वाऽण् रपरः स्यात्। तथा 'प्रकृतं' 'प्रहृतम्' इत्यत्र "गतिरनन्तरः" (पा०सू०६-२-४९) इति पूर्वपदप्रकृतिस्वरे कृते शेषनिघातम् "उदात्तादनुदात्तस्य" (पा०सू०८-४-६६) इति स्वरितं च बाधेत। तथा 'नॄःपाहि' इत्यत्र "नॄन्पे" (पा०सू०८-३-१०) इति ज्ञापकात्पूर्वसवर्णदीर्घसम्भवे-

ऽप्यनुनासिकं बाधित्वाऽण् रपरः स्यात् । किञ्च 'कर्त्ता' 'कारकः' इत्यत्र गुणवृद्धी बाधित्वाऽण् भवन्नकार एवेति नियमाभावात् कदाचिदिकार उकारश्च स्यात् । अपिच येऽमी प्रतिपदोक्ता इत्वोत्वादय "ऋत इद्धातोः" (पा०सू०७-१-१०१) "उदोष्ठ्यपूर्वस्य" (पा०सू०७-१-१०२) इति तेषु रपरत्वं न स्यात् । द्वितीये तु गुणवृद्ध्योर्न दोषः, अणनणोः प्रसक्तावणेवेति नियमेन 'कर्त्ता' 'कारकः' इत्यादिसिद्धेः । ननु ह्रस्वे स्थानिनि सर्वा वृद्धिरनन्तरतमा 'तारकः' इत्यादौ दीर्घे तु सर्वाऽपि प्रमाणतोऽन्तरतमेत्यविशेषादुभयत्रापि सकलवृद्धिप्रसङ्गे नियमोऽस्तु, गुणस्तु 'कर्त्ता' इत्यादौ मात्रिक एव प्राप्तः । 'तरिता' इत्यादौ द्विमात्रस्य तु द्विमात्र एङेव प्राप्तः । तथाच अणनणोः प्रसङ्गाभावेन नियमाप्रवृत्तौ दीर्घेष्वेङेव स्यात् । ह्रस्वेषु त्वकारो भवन्नपि रपरो न स्यात् । यो हि प्रथमवाक्येनाणेवेति नियम्यते, तस्येदं द्वितीयेन रपरत्वं विधीयते । तथाच गुणे दोषोऽस्त्येवेति चेत् ? "चजोः कुघिण्ण्यतोः" (पा०सू० ७-३-५२) इत्यादौ सावकाशाया: स्थानेन्तरतमपरिभाषाया वृद्धिविधौ चरितार्थयापि "उरण्रपरः" (पा०सू०१-१-५१) इत्यनया गुणप्रसङ्गे रपरत्वेन बाध्यत्वात् । तस्माद् द्वितीयपक्षे गुणवृद्ध्योर्न कश्चिद्दोष इति स्थितम् । उदात्तादिषु दोषस्तु स्यादेव । तथा प्रतिपदोक्तेष्वित्वादिष्वपि । तृतीये तूदात्तादिषु न दोषः, तत्तद्विधिभिरन्तरतमपरिभाषासंस्कृतैर्ऋवर्णस्यैव विधानात् । 'किरति' इत्यादावपि न दोषः । गुणवृद्ध्योस्तु दोष एव । तथाहि, आन्तर्यतो मात्रिकस्य मात्रिके गुणे रपरत्वे च 'कर्त्ता' इत्यादि यद्यपि सिद्ध्यति, तथापि 'तरिता' इत्यादावेङेव स्यात्तथा अविशेषाद् वृद्धित्रयेऽपि प्रवृत्ते अकारस्याण्त्वाद्रपरत्वे कृते 'कारकः' 'तारकः' इत्यादि यद्यपि सिद्ध्यति 'तथापि कायकः' 'तावकः' इत्याद्यनिष्टमप्यापद्यते । यत्तु पूर्वसूत्रे भाष्यकारैरिमं पक्षमाश्रित्य समाहितम्—"अनान्तर्यमेवैतयोरान्तर्यम्" इति । यच्च तत्रैव वार्त्तिककारैरुक्तं "सम्प्रयोगो वा नष्टाश्वदग्धरथवद्" इति । तदुभयमपि पाक्षिकं बोध्यम् । तथाहि, यदा ऋत्वजात्यवच्छिन्नस्य कोऽन्तरतम इति परीक्ष्यते अत्वजात्यवच्छिन्नश्च कस्येति तदाऽनुरूपप्रतिसम्बन्धिराहित्येनैव धर्मेणैतयोरान्तर्यम् । न ह्यान्तर्यं चतुर्द्धेति मुनित्रयोक्तिरस्ति प्रत्युत "सोष्मणः सोष्माणः" इति भाष्याद् वृत्तेश्चानियम एव लभ्यते । एवञ्च नष्टाश्वदग्धरथन्यायोऽपि जात्यवच्छेदेन परीक्षायामेव । व्यक्तिपुरस्कारेण परीक्षायां तूक्तरीत्या दुष्टोऽयं पक्षः । तथाचात्र सूत्रे वार्त्तिकम्—"य उस्स्थाने ऽण् स रपर इति चेद् गुणवृद्ध्योरवर्णाप्रतिप-

त्तिः" इति। किञ्चास्मिन्पक्षे क्व रेफपरत्वं क्व वा लकारपरत्वमिति व्यव-स्थापि दुरुपपादा स्यात्। "स्वतन्त्रः कर्त्ता" (पा०सू०१-४-५४) इति निर्देशान्न विनिमयो "ग्रो यङि" (पा०सू०८-२-२०) "अचि विभाषा" (पा०सू०८-२१) इत्यारम्भाच्च न विकल्प इति समर्थनेऽपि प्रतिपत्ति-गौरवं स्यादेव। रेफस्य पूर्वान्ततां साधयितुम् "आद्यन्तौ" (पा०सू०१-१-४६) इति सूत्रात्समासैकदेशभूतमन्तग्रहणमनुवर्त्य तस्य रपर इत्य-न्यपदार्थविशेषणीभूतेन रेफान्वयश्च वाच्य इति महान्क्लेशः। चतुर्थपक्षे तु नैतदुपयुज्यते इति वक्ष्यामः। तस्मान्निर्दोषत्वाच्चतुर्थपक्ष एवाश्रि-तः। स चेत्थमुपपादनीयः। स्थानशब्दद्वयमिहानुवर्त्तते तत्रैकमुः स्थाने योऽणित्यनुवादेऽपि स्थानसम्बन्धलाभाय। द्वितीयं तु प्रसङ्गावस्था-यामेव रपरो भवतीति कालविधानार्थम्। स्थानेन्तरतमसूत्रे स्थानश-ब्दस्य तात्वादिपरत्वेऽपि शब्दाधिकाराश्रयणादिह प्रसङ्गपरत्वं बो-ध्यम्। एवञ्च गुणवृद्ध्योः प्राप्त्यवस्थायामेवाणो रपराः सम्पन्ना इति प्रमाणतोऽन्तरतमाविङावैचौ बाधित्वा स्थानतोन्तरतमोऽणेव भवतीति न कश्चिद्दोषः॥ एवमुदात्तादिविधिष्वप्यन्तरतमत्वादकारो भवति न तु अर् इर् इत्यवधेयम्। न चैवं 'कर्त्ता' इत्यादावनेकाल्त्वात्सर्वादे-शप्रसङ्गः, आनुपूर्व्येण सिद्धत्वात्। तथाहि, ऋस्थानित्वमुपजीव्य प्रवृत्तं रपरत्वं सर्वादेशतां नापादयति, उपजीव्यविरोधात्। तथाच पूर्वसूत्रे वार्त्तिकम्—"सर्वादेशप्रसङ्गस्त्वनेकाल्त्वात्। न वाऽनेकाल्त्व-स्य तदाश्रयत्वादृवर्णादेशस्याविघातः" इति।

अण्ग्रहणं किम्? रीङ्रिङादीनां रपरत्वं मा भूत्। मात्रीयति। क्रियते। तथा ढकि लोपोऽपि रपरः स्यात्। "एवेच" सूत्रवैयर्थ्यापत्तौ सामर्थ्यादनेनालोन्त्यविधिं बाधित्वा सर्वादेशः स्यात्। तथा 'होतापो-तारौ' इत्यत्राऽनङोऽपि रपरत्वे संयोगान्तलोपे च कृते तस्यासिद्धत्वा-न्नलोपो न स्यादिति दिक्।

अथ यो रिङादिष्वण् स रपरः कुतो नेति चेत्? अनादेशत्वात्। आदेशत्वं हि समुदाये विश्रान्तम्। न चैवं 'कृष्णर्द्धिः' इत्यादौ रपरत्वं न स्यात्पूर्वपरसमुदायस्य स्थानित्वादिति वाच्यम्, पूर्वपरयोरिति द्वि-वचननिर्देशेन सहितयोरवयवयोरेव स्थानित्वावगमात्। अत एव द्वयोः स्थानिनोर्भिन्नादिषु नत्ववद् द्वावादेशौ मा भूतामिति तत्रैकग्रहणं कृतम्। तस्मादकारस्यापि स्थानित्वमस्त्येव। तदुक्तम्—"यो ह्युभयोः स्थाने भवति लभतेऽसावन्यतरतो व्यपदेशम्" (भाष्य०) इति। तस्मादेका-देशेऽपि रपरत्वं भवतीति स्थितम्।

स्यादेतत्। उक्तरीत्या "ऋत उत्" (पा०सू०६-१-११) इत्युकारादेशस्यापि रपरत्वं स्यात्। तथा च विभक्तिसकारस्य रुत्वे कृते पूर्वस्य "रोरि" (पा०सू०८-३-१४) इति लोपे "ढ्रलोपे" (पा०सू०६-३-१११) इति दीर्घेण मातूः पितूरिति प्राप्नोतीति चेत्? मैवम्, रुत्वस्यासिद्धत्वेन "रात्सस्य" (पा०सू०८-२-२४) इति सकारलोपे रेफस्य विसर्गेण रूपसिद्धेः। नन्वेवं 'मातुःकार्यम्' इत्यत्र षत्वं स्यात्। "इदुदुपधस्य-चाप्रत्ययस्य" (पा०सू०८-३-४१) इति सूत्रात्। न चायं प्रत्ययविसर्जनीय एवेति वाच्यम्, अकारस्य प्रत्ययावयवत्वेऽप्यप्रत्ययतया तदादेशस्य सुतरामतथात्वादिति चेत्? उच्यते, "ऋत उत्" (पा०सू०६-१-१११) इत्येकादेशस्य परादिग्रहणेन ग्रहणादस्ति तावत्सान्तस्य प्रत्ययसञ्ज्ञा सकारे लुप्ते त्ववशिष्टस्यैव प्रत्ययसञ्ज्ञा एकदेशविकृतस्योपसंख्यानात् स्थानिवदादेश इत्यत्रादेशग्रहणाद्वा। अत एव यङो यकारे लुप्ते अकारस्य प्रत्ययसञ्ज्ञेत्युक्तम्। तथाचाप्रत्ययस्येति षत्वनिषेधः सिद्धः। न चैवं प्रत्ययावयवस्थानिकत्वेऽपि प्रत्ययस्थानिकत्वाभावात् षत्वं स्यादेवेति वाच्यम्, अप्रत्ययस्येत्यनुवादे परिभाषानुपस्थानेन स्थानेयोगस्य दुर्लभत्वात्। अवयवावयविभावस्य षष्ठ्यर्थत्वसम्भवात्। नन्वप्रत्ययस्येति पर्युदासः तथाच पूर्वान्तत्वेनैकादेशग्रहणात्षत्वं स्यादेव। किञ्च प्रसज्यप्रतिषेधपक्षेऽपि सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात् अप्रत्ययो यो विसर्गस्तस्य षत्वं स्यादिति वाक्यार्थः। तथा च 'अग्निः करोति' इत्यादौ स्थानिवद्भावेन विसर्गस्य प्रत्ययत्वान्मा भूत् षत्वम्। 'मातुःकार्यम्' इत्यादौ तु स्यादेवेति चेत्? इहेदं तत्त्वम्—कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठो ज्ञापक एकादेशशास्त्रेण निर्वृत्तात्परस्य षत्वं न स्यादिति। यद्वा, प्रसज्यप्रतिषेधवैयधिकरण्यान्वयावेव ज्ञाप्येते। यत्तु भाष्यं "लुप्यते प्रत्ययो रात्सस्य" इति। यच्च कैयटकृतं तद्व्याख्यानम्—"उत्वे कृतेऽवशिष्टः सकार एव प्रत्ययसञ्ज्ञः स च लुप्तः" इति। तदुभयमपि चिन्त्यम्, इह "सिद्धं तु प्रसङ्गे रपरत्वात्" इति पक्षे यद्यप्यरारादिरूपेण विधानादभक्तत्वादिशङ्कैव नास्ति तथापि सम्प्रयोगो वेति पूर्वसूत्रोक्तरीत्या तृतीयपक्षमाश्रित्य भाष्ये पक्षत्रयं चिन्तितम्। तत्राभक्तत्वपक्षे परादित्वपक्षे च 'वव्रे' इत्यादावुरदत्वे रपरत्वे च कृते हलादिः शेषेण रेफो न निवर्त्तेत, अभ्यासावयवस्यानादेर्हल एव तेन निवर्त्तनात्। तस्मादन्तग्रहणमनुवर्त्य पूर्वान्तपक्ष एवेह स्थापित इति सङ्क्षेपः।

अलोऽन्त्यस्य (पा०सू०१-१-५२)। स्थानषष्ठीनिर्दिष्टस्य यदुच्यते तत्तदन्त्यस्यालः स्थाने बोध्यम्। "त्यदादीनामः"-(पा०सू०७-२-१०२) सः, यः। स्थानषष्ठीति किम्? आर्द्धधातुकस्येट् तृच ऋकारात्पूर्वो मा भूत्। इदं च "षष्ठी स्थानेयोगा" (पा०सू०१-१-४९) इति सूत्रस्यानुवृत्तेर्लभ्यते। अल इति किम्? "पदस्य" (पा०सू०८-१-१६) इत्यधिकृत्य विधीयमानं "वसुस्रंसु" (पा०सू०८-२-७२) इति दत्वं 'परमानडुद्भ्याम्' इत्यदावन्त्यस्य पदस्य मा भूत्। एतेनाल इति जसन्तमाश्रित्यालात्मका आदेशा अन्त्यस्य स्युरिति व्याचक्षाणाः परास्ताः, अन्त्यस्य पदस्यापि प्रसङ्गात्। किञ्चैवं लाघवार्थमलन्त्यस्येत्येव सूत्रयेत्। अपि च "अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपः" (पा०सू०५-४-५१) "पादशतस्य संख्यादेः" (पा०सू०५-४-१) इति लोपो ढकि लोपश्च सर्वादेशः स्यात्। ततश्च 'विरजीकरोति' इत्यादि न सिध्येत्। यत्तु अल इति जसन्तमिति पक्षे "अनेकाल्शित्सर्वस्य" (पा०सू०१-१-५५) इति सूत्रे अनेकाल्ग्रहणं न कर्त्तव्यमिति लाघवोपवर्णनं, तदपि न, षष्ठीति पक्षेऽपि "ङिच्च" इत्यत्र ङिदेवानेकाल् अन्त्यस्य स्यात्, न तु आङिदपीति नियमाश्रयणेनानेकाल्ग्रहणप्रत्याख्यानसम्भवात्। वस्तुतस्तु पक्षद्वयेऽप्यनेकाल्ग्रहणं कर्त्तव्यमेव। अन्यथा "अतो भिस ऐस्" (पा० सू०७-१-९) इत्यादिपञ्चमीनिर्देशेष्वनेकालप्यादेशः परस्यादेः स्यात्। सत्यनेकाल्ग्रहणे परत्वात्सर्वादेशः। अत एव "तस्मादित्युत्तरस्यादेः" इति न सूत्रितम्। तथाहि, "अलोऽन्त्यस्य" (पा०सू०१-१-५२) इत्यस्य द्वावपवादौ-"आदेः परस्य" (पा०सू०१-१-५४) "अनेकाल्शित्सर्वस्य" (पा०सू०१-१-५५) इति। तत्र प्रथमस्यावकाशः-"ईदासः" (पा०सू०७-२-८३) "बहोर्लोपः" (पा०सू०६-४-१५८) इति। आसीनः 'भूयान्'। द्वितीयस्यावकाशः-"अस्तेर्भूः" (पा०सू०२-४-५२) इत्यादि। "अतो भिस" (पा०सू०७-१-९) इत्यादेः परत्वात्सर्वादेशत्व सिद्धं 'रामैः' इत्यादि। न च "आदेः परस्य" (पा०सू०१-१-५४) इत्यत्राल इति जसन्तमनुवर्त्य 'रामैः' इत्यादि साधनीयमिति वाच्यम्, तथा सति 'भूयान्' 'भूमा' इत्याद्यसिद्ध्यापत्तेः। तदेवं कार्यस्यान्त्येऽल्यनुसंहारो व्याख्यातः "ङिच्च" (पा०सू०१-१-५३) इत्याद्यग्रिमसन्दर्भानुगुणत्वात्। यद्वा, षष्ठ्या एवायमनुसंहारः। या स्थानेयोगा षष्ठी साऽन्त्यस्यालो बोध्येति। अत्र पक्षे "ङिच्च" (पा०सू०१-१-५३) इत्यस्यायमर्थः- यत्र ङिदादेशो विधीयते तत्र या षष्ठी सा अन्त्यस्याल इति। एवमग्रेऽपि।

ङिच्च (पा०सू०१-१-५३)। ङिदनेकालप्यन्त्यस्य स्यात्। दध्ना। दध्ने। अनन्यार्थङित्त्वेष्वनङादिषु चरितार्थमिदं तातङि परेण "अनेकाल्शित्सर्वस्य" (पा०सू०१-१-५५) इत्यनेन बाध्यते। ननूत्सर्गापवादयोरयुक्तो विप्रतिषेध इति चेत्? सत्यम्, सर्वादेशेऽपि तातङि गुणवृद्धिप्रतिषेधरूपं प्रयोजनं लभ्यते। तावता च किञ्चिद्विलम्बेन प्रवृत्तोऽयमपवादोऽन्यस्मिन्विषये उत्सर्गेण समकक्षतामापन्न इति युक्तो विप्रतिषेधः। यद्वा, "एरुः" (पा०सू०३-४-८६) इत्यस्यानन्तरं 'तिह्योस्तात्' इति वक्तव्ये ङित्करणं गुणवृद्धिप्रतिषेधार्थमेवेति विप्रतिषेधोपपत्तिः। अस्तु वा विनाऽपि विप्रतिषेधं सर्वादेशः प्रदर्शितस्य गुणवृद्धिप्रतिषेधार्थत्वस्य सर्वादेशतामन्तरेणानुपपत्तेः॥

आदेः परस्य (पा०सू०१-१-५४)। परस्य यद्विधीयते तदादेरलो बोध्यम्। "ईदासः" (पा०सू०७-२-८३)। अत्र "तस्मादित्युत्तरस्य" (पा०सू०१-१-६७) इत्युपतिष्ठते। तेनादेरीकारः, आसीनः॥

अनेकाल् शित्सर्वस्य (पा०सू०१-१-५५)। अनेकाल् आदेशः शिच्च सर्वस्य स्यात्। "अस्तेर्भूः" (पा०सू०२-४-५२) भविता। "इदम इश्" (पा०सू०५-३-३) इतः। "ङिच्च" (पा०सू०१-१-५३) इति नियमात्सिद्धेऽनेकाल्ग्रहणमपवादविप्रतिषेधार्थमित्युक्तम्। यत्तु वृत्तिकारैः "जश्शसोः शिः" (पा०सू०७-१-२०) इति शित उदाहरणं दत्तम्। तच्चिन्त्यम्, सर्वादेशतां विना तत्र शित्वस्यैवालाभात्। सर्वादेशतायाश्चानुपूर्व्यादनेकाल्त्वेनैव णल्डादेशादिष्विव सिद्धत्वात्। तथाहि, णल्डाशिप्रभृतयो यदा सर्वादेशास्तदा प्रत्ययसंज्ञाः। ततः प्रत्ययादित्वप्रयुक्ता इत्संज्ञा। ततो लोपः। तत एकाल्त्वे सत्यपि न सर्वादेशत्वक्षतिः उपजीव्यविरोधापत्तेः। अत एव हि 'कर्ता' इत्यादौ न सर्वादेशतेत्युक्तम्। शकारेणानुबन्धेन इश्प्रभृतीनामनेकाल्त्वादेव सिद्धे शिद्ग्रहणं "नानुबन्धकृतमनेकाल्त्वम्" (प०भा०६) इति ज्ञापनार्थम्। तेन "दिव उत्" (पा०सू०६-१-१३१) "अर्वणस्त्रसौ" (पा०सू०६-४-१२७) इत्यादेर्न सर्वादेशतेति बोध्यम्। ननु कथं ज्ञापकता "ध्वसोरेद्धावभ्यासलोपश्च" (पा०सू०६-४-११९) इत्येतदर्थतया शिद्ग्रहणस्य चरितार्थत्वात्। तत्र हि लोपश् इति छिद्यते संज्ञायां च कृतं शित्वं तत्रानुपयुक्तं सत्संज्ञिनि फलति, ङमुटष्टित्ववदिति सिद्धान्त इति चेत्? सत्यम् 'अनेकान्ता अनुबन्धाः" (प०भा०४) इति पक्षे "नानुबन्धकृतमनेकाल्त्वम्" (प०भा०६) इत्यस्य प्रयोजनाभावात्तदभिप्रायको लोपशितिच्छेद इति सिद्धान्तः। एकान्ता इति पक्षे तूक्तरीत्या ज्ञापकमावश्य-

कम्। श्वसोरित्यत्र तु लोप इत्येव छेदः। "लोपो यि" (पा०सू०६-४-११८) इति प्रकृते पुनर्लोपग्रहणसामर्थ्यात्सर्वादेशः। वार्त्तिकमते तु "नानर्थकेऽलोन्त्यविधिः" (प०भा०१०५) इत्येव सिद्धम्। न चानभ्यासविकारेष्विति पर्युदासस्यायं विषयः, लोपस्य विकारत्वाभावात्। रूपान्तरापत्तिर्हि विकारः। यथा "भृञामित्" (पा०सू०७-४-७६) "अर्त्तिपिपर्त्योश्च" (पा०सू०७-४-७७) इत्यादिः। अत एव पस्पशायां लोपो विकारात्पृथगुपात्तः "लोपागमवर्णविकारज्ञो हि वेदं परिपालयिष्यति" इति। उक्तं च "पृषोदरादीनि" (पा०सू०६-३-१०९) इति सूत्रे कैयटेन—"द्वौ चापरौ वर्णविकारनाशौ" इति। वस्तुतस्तूपदेशावस्थायामेवान्तरङ्गतयेत्संज्ञा। अत एवोच्चरितप्रध्वंसिनोनुबन्धाः स्मर्यमाणाः सन्त एव कार्यं निर्वाहयन्तीति सिद्धान्तः। इदं चोत्तरसूत्रे एव कैयटे स्फुटम्। तथाच "दिव उत्" (पा०सू०६-१-१३१) "अवर्णस्तृ" (पा०सू०६-४-१२७) इत्यादेरेकाल्त्वादेकान्तपक्षेऽपि न सर्वादेशता प्रसज्यते। एवञ्च "नानुबन्धकृतमनेकाल्त्वम्" (प०भा०६) इति ज्ञापनं व्यर्थम्। शिद्ग्रहणं च सुतराम्। "इदम इश्" (पा०सू०५-३-३) "इदं किमोरीश्की" (पा०सू०६-३-९०) इतीशीशोस्तु शकारोच्चारणसामर्थ्यात्सर्वादेशतायाः प्राङ् नलोपः। यत्तु कृतेऽपि सर्वादेशे प्रयोजनाभावाच्छकारस्येत्संज्ञा न स्यादिति हरदत्तेनोक्तम्। तन्न, लोपस्यैव प्रयोजनत्वात्। न चैवमुच्चारणवैयर्थ्यं, सर्वादेशस्वसम्पादनेन कृतार्थत्वादिति दिक्। तस्मादिह सूत्रभाष्यकृतोरभिप्रायश्चिन्त्यः। इह नानेकाल्शिदिति पठित्वा अन्त्यस्यादेरिति चानुवर्त्यानुसंहारद्वयनिषेधे सर्वस्येति शक्यमकर्तुम्॥

इति श्रीशब्दकौस्तुभे प्रथमाध्यायस्य प्रथमे पादे सप्तममाह्निकम्॥

---

स्थानिवदादेशोऽनल्विधौ (पा०सू०१-१-५६)। आदेशः स्थानिवत्कार्यं लभते प्रवर्त्तयति च। तृतीयान्ताद्वतिना स्थानिना तुल्यं वर्त्तते इति वाक्यार्थलाभात्। यद्रूपवैकल्यादुपदेशाप्रवृत्तौ सत्यामतिदेशो मृग्यते तच्चेद्रूपं स्थान्यलोऽसाधारणं न भवेत्। आवधिषीष्ट। अत्र हन्तेर्विधीयमानमात्मनेपदमतिदेशाद्वधेरपि भवति। "आङो यमहनः" (पा०सू०१-३-२८) इत्यत्र हि अल्नाश्रीयते। 'रामाय' इत्यादौ "सुपि च" (पा०सू०७-३-१०२) इति दीर्घे कर्त्तव्ये यद्यपि यञादौ इत्यलाश्रीयते तथापि न तत्र तद्विरहप्रयुक्ता "सुपि च" (पा०सू०७-३-१०२) इत्यस्याप्रवृत्तिः, यादेशस्य यञादित्वात्। सुप्त्ववैकल्यात्तूपदेशस्याप्र-

वृत्तिः। सुप्त्वञ्चेह यद्यपि ए इत्यस्मिन्नलि वर्त्तते तथापि न तदलोऽसाधारणम्, स्यामादौ समुदाये विश्रान्तेः। इदं च कार्यकालपक्षाश्रयेणोक्तम्। यथोद्देशपक्षे तु सुप्सञ्ज्ञाया अपि शास्त्रीयत्वात्सैवातिदिश्यते। तत उपदेशेनैव दीर्घं इति न किञ्चित्कष्टम्। एतेन 'अरुदिताम्' 'अरुदितम्' इत्यादाविडागमोऽपि व्याख्यातः। तत्रापि सार्वधातुकसञ्ज्ञातिदेशसम्भवादिति दिक्।

अत्र धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः प्रयोजनमिति वृत्तिकृतः। उदाहरणदिक् चेयम्, न तु परिगणनमिति भ्रमितव्यम् "च्लेः सिच्" (पा०सू०३-१-४४)इत्यादीनामसङ्ग्रहापत्तेः। क्रमेणोदाहरणानि—"अस्तेर्भूः" (पा०सू०२-४-५२) आर्द्धधातुके विवक्षिते। अत एवाङ्गात्पृथक् धातूपादानम्। धातुत्वाद्धातुप्रत्ययाः—भव्यम्। केन, काभ्यां, कैः। अङ्गत्वादिनादेशदीर्घैस्भावाः। कृत्—प्रकृत्य, कृत्वा। "ह्रस्वस्य पिति कृति" (पा०सू०६-१-७१) इति तुक्। अद्यतनम् तद्धितत्वात्तदन्तत्वप्रयुक्ता प्रातिपदिकसञ्ज्ञा। 'कदश्वः' स्थानिवद्भावेनाव्ययत्वादव्ययपूर्वपदप्रकृतिस्वर इत्याहुः। तच्चिन्त्यम्, स्थानेन्तरतमपरिभाषया गतार्थत्वात्। 'अधोऽधः' इति तूदाहरणमाष्टमिकद्वित्वस्य स्थानेद्विर्वचनरूपत्वात्सम्भाव्यते, किन्तु तत्रापि फलं दुर्वचम्। तस्माद् 'अधोऽधः कामः' इत्युदाहार्यम्। "अतः कृकमि" (पा०सू०८-३-४६) इति प्राप्तस्य सत्वस्याव्ययत्वात्पर्युदासः। यत्तु वृत्तौ 'प्रस्तुत्य' इत्यव्ययादेशोदाहरणम्। तच्चिन्त्यम्, क्त्वामात्रस्यानव्ययत्वात्। तदन्तविधेः सर्वैकवाक्यतया सिद्धान्तितत्वात्। न च जहत्स्वार्थायां वृत्तौ क्त्वआनर्थक्यात्सर्वे सर्वपदादेशा इत्यभिप्रायेणेदमिति वाच्यम्, "ह्रस्वस्य पिति कृति" (पा०सू०६-१-७१) इति तुगभावापत्तेरिति दिक्। सुप्-रामाय। तिङ्—अपचताम्, तिङन्तत्वात्पदत्वम्। वः, नः, पदत्वाद्रुत्वादि। नन्वेवम् 'अधोऽधः' इत्यस्यापि पदादेशत्वादेव गतार्थतेति चेत्? सत्यम्, गोबलीवर्दन्यायेनाव्ययग्रहणादिति दिक्। इह 'काभ्याम्' इत्यादावादेशः कार्यं लभते 'केन' 'कैः' इत्यादौ तु परस्य प्रवर्त्तयतीति विवेकः।

ननु वत्करणं मास्तु, स्थान्यादेश इत्येतावताऽपि "असंयोगाल्लिट् कित्" (पा०सू०१-२-५) इत्यादाविव वत्यर्थलाभात्। यदाहुः—"परत्र परशब्दः प्रयुज्यमानो विनापि वतिं वत्यर्थं गमयति" इति। न च स्थानी आदेशं प्रतिपद्यते इत्येव वाक्यार्थः किं न स्यादिति वाच्यम्, तत्तदादेशविधायकैरेव गतार्थत्वात्। न चादेशः स्थानिरूपमापद्यते,

वचनद्वयप्रामाण्याच्च विकल्प इति वाच्यम्, "वा लिटि" (पा०सू०२-४-५५) इत्यारम्भात्। न च चक्षिङः ख्याञ् आदेशः स्थानीति वचनद्वयप्रामाण्यात्सर्वत्र विकल्पापत्तौ लिट्येवेति नियमार्थं तत्स्यादिति वाच्यम्, एवमपि "विभाषा लुङ्लृङोः" (पा०सू०२-४-५०)इत्याद्यप्राप्तविभाषासु वाग्रहणवैफल्यापत्तेः। अस्तिभूभ्यां रूपद्वयसिद्धौ "अस्तेर्भूः" (पा०सू०२-४-५२) इत्यस्य वैयर्थ्यापत्तेश्च।

अत्राहुः—वत्करणाभावे स्थानी आदेशस्य संज्ञा स्यात्। प्रायेण ह्यस्मिन्पादे संज्ञासूत्राण्येवारभ्यन्ते। ततश्च "आङो यमहनः"(पा०सू०१-३-२८) इत्यात्मनेपदं वधेरेव स्यान्नतु हन्तेः। नच "स्वं रूपम्" (पा०सू०१-१-६०) इति हन्तेरपि ग्रहणम्, अशब्दसंज्ञेति निषेधात्। न च स्थानिनः संज्ञात्वे सिद्धं धर्मिणमित्यादिन्यायबाधः, अनेकशक्तेः शब्दस्य शक्त्यवच्छेदेन संज्ञिनि विनियोग इति पक्षे संज्ञाया एवोद्देश्यकोटिनिवेशात्। न चैवम् "आङो वधियमः" इत्येव ब्रूयादिति वाच्यम्, "वध हिंसायाम्" इति भौवादिकस्यापि ग्रहणापत्तेः। न चैवम् "आङो वधयमः" इति पठ्यताम्, अकारस्य विवक्षितत्वाच्च न भौवादिकेऽतिप्रसङ्ग इति वाच्यम्, सकलहन्त्यादेशसंग्रहार्थम् "आङो यमहनः" (पा०सू०१-३-२८) इत्यस्यैव वाच्यत्वात्। तथा चावाधिष्टवद् 'आजघ्ने' इत्यत्राप्यात्मनेपदं सिद्धम्। तथाहि, हन्तोर्लिटि लसामान्यापेक्षत्वादन्तरङ्गत्वात्तिबादिषु कृतेषु परत्वनित्यत्वाभ्यां "शेषात्कर्त्तरि" (पा०सू०१-३-७८) इति बाधित्वा "लिटि धातोः" (पा०सू०६-१-८) इति द्विःप्रयोगे ऽभ्यासस्य चुत्वेऽभ्यासात्परस्य घत्वे एकदेशविकारासम्भवेन समुदायस्य समुदायादेशत्वाद्धन्त्यादेशत्वं, ततो वधिना सह तुल्ययोगक्षेमतैवेति दिक्। अस्तु वा स्थानिन आदेशः संज्ञा, तथाप्यनिष्टं तुल्यमेव। तथाहि, "अस्यतिवक्ति"(पा०सू०३-१-५२) इत्यत्र ख्यातिपदेन चक्षिङेव गृह्यते, कृत्रिमत्वात्। तथाच 'समचक्षिष्ट'इत्यत्राऽङ् स्यात् 'आख्यत' इत्यत्र च न स्यात्। न चैवं "चक्षिङः" इत्येव ब्रूयात्, अनुबन्धनिर्देशेनापि यङ्लुग्वारणसम्भवादिति वाच्यम्, एवमपि गाङ्कुटादिसूत्रे गाङा इङ्गाङोर्ग्रहणापत्तेः। ङित्यवचनसामर्थ्याद् शुभयगतिः स्यात्। "गमेरिट् परस्मैपदेषु"(पा०सू०७-२-५८) इत्यत्र त्विणिङिकामेव ग्रहणं स्यात्। तस्मात्कर्त्तव्यमेव वत्करणम्। नन्वेवं वत्करणाभावाधीनलाघवानुरोधात्संज्ञाप्रकरणादन्यत्रैव स्थानिवद्भावप्रकरणं क्रियतामिति चेत् ? न, तथा सत्यादेशग्रहणं विना वाक्यार्थानिर्वाहे बहुगौरवापत्तेः। सिद्धान्ते त्वादेशग्रहणमातिरिच्यमानमानुमानिकसंग्र-

हार्थं भवतीति तद्बलेन "एकदेशविकृतस्योपसंख्यानम्" इतिवार्तिकं प्रत्याख्यास्यते। अपिच "काममतिदिश्यतां वा" (भा०३०) इति वक्ष्यमाणमपि वत्करणायत्तमिति दिक्।

स्यादेतत्, यदि संज्ञाप्रकरणे वत्करणं विना अतिदेशालाभस्तर्हि कित् ङित् इत्यादौ का गतिरिति चेत्? उच्यते, किदिति न संज्ञा "न क्त्वा सेट्" (पा०सू०१-२-१८) इति ज्ञापकात्। नहि क्त्वः कित्संज्ञा प्राप्ता या निषिध्येत। ननु "मृडमृद" (पा०१-२-७) इति प्राप्ता सा निषिध्यताम्, वचनद्वयस्यार्थक्याय च विकल्पोऽस्त्विति चेत्? न, "मृडमृद" (पा०सू०१-२-७) इत्यत्रैव वाग्रहणस्य सम्भवात्। किञ्चैवं "निष्ठाशीङ्" (पा०सू०१-२-१९) इत्यादि व्यर्थं स्यात्। न हि शीङादिभ्यो निष्ठायाः केनचित्संज्ञा प्राप्ता। एवं ङिदित्यतिदेशः, कित्साहचर्यात्। किञ्च ङिदित्यस्य संज्ञात्वे ग्रहिज्यादिसूत्रेऽस्यैव ग्रहणं स्यात्, कृत्रिमत्वात्। तथाच "न वशः" (पा०सू०६-१-२०) इति सूत्रं व्यर्थं स्यात्, 'वावश्यते' इत्यत्र संप्रसारणाप्राप्तेः। किञ्च "क्ङिति च" (पा०सू०१-१-५) इत्यत्रास्याग्रहणं स्यात्, संज्ञास्वरूपानुच्चारणात्। तथाच "गाङ्कुटादि" (पा०सू०१-२-१) इत्यत्र कुटादिग्रहणं व्यर्थं स्यात्। "बहुगण" (पा०सू०१-१-२३) इत्यत्र तु संख्येत्यतिदेशः। अन्यथा टिघुभादिवदेकाक्षराया एव संज्ञायाः कर्त्तव्यतापत्तेः। "किकिनौ लिट् च" (पा०सू०प०३-२-१७१) इत्यादि तु न संज्ञाप्रकरणं, तेन लिड्वदित्यतिदेशो निर्बाध इति दिक्।

अथादेशग्रहणं किमर्थम्? स्थानिवदित्येतावतैव सम्बन्धिशब्दमहिम्ना तल्लाभात्। यथा 'पितृवदधीते' इत्युक्ते पुत्र इति गम्यते इति चेत्? सत्यम्, द्विविध आदेशः—"अस्तेर्भूः" (पा०सू०२-४-५२) इत्यादिः प्रत्यक्षः, "तेस्तुः" इत्यादिस्त्वानुमानिकः। अत्र हीकारेणेकारान्तः स्थान्यनुमीयते, उकारेण चोकारान्त आदेशः। तथाच "तेस्तुः" इति फलितार्थः। तत्रासत्यादेशग्रहणे प्रत्यक्षस्यैव ग्रहणं स्यान्नानुमानिकस्य। आदेशग्रहणसामर्थ्यात्तूभयपरिग्रहः। तेन 'पचतु' इत्यादेस्तिङन्तत्वात्पदसंज्ञा सिद्ध्यति। ननु "एरुः" (पा०सू०३-४-८६) इत्यादिं यथाश्रुतमस्तु, एकदेशविकृतस्यानन्यत्वाच्च पदत्वं भविष्यतीति चेत्? न, अर्थवत्येव स्थान्यादेशभावविश्रान्तेर्वाच्यत्वात्तस्यैव प्रसङ्गसम्भवात्। तथाहि, "षष्ठी स्थानेयोगा" (पा०सू०१-१-४९) इत्युक्तम्। स्थानं च प्रसङ्गः। स चार्थवतः, अर्थप्रत्यायनार्थं शब्दप्रयोगात्। यद्यपि रुलेः सिजादावसम्भवन्नेदम्, तथापि सति सम्भवेऽर्थप्रयुक्तप्रसङ्ग एव ग्राह्य

इत्यादेशग्रहणेनैव ज्ञाप्यते । उक्तञ्च-

सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः ।
एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥

पदमिहार्थवत्, पद्यते ऽनेनेति व्युत्पत्तेः । यद्यपि सर्वविकारे सुतरां नित्यत्वानुपपत्तिः, तथापीह विकार एव नास्तीति तात्पर्यम् । तथाच वार्त्तिकम्-"कार्यविपरिणामाद्वा" इति । कार्यमिह ज्ञानं योग्यताबलात् । तथाच ज्ञाननिष्ठमुत्पादविनाशादिकं विषये आरोप्यते इति भावः । नन्वेवं बुद्धिविपरिणाममात्रस्य स्थान्यादेशभावत्वेऽपवादेऽप्युत्सर्गकृतं स्यात् । तथाहि, कप्रत्ययान्तादप्यणन्तत्वप्रयुक्तो ङीप् स्यात् । अत्राह वार्त्तिककारः-"सिद्धन्तु षष्ठीनिर्दिष्टस्य स्थानिवद्वचनात्" इति । "षष्ठी स्थानेयोगा" (पा०सू०१-१-४९) इत्यनुवृत्तेरिति भावः । न चापवादः षष्ठीनिर्दिष्टस्य स्थाने विधीयते । "नाभि नभञ्च" (का०वा०) इत्यादौ तु षष्ठ्याः स्थाने प्रथमा बोध्या । विश्रवणरवणेत्यादीनि तु शब्दान्तराणि प्रत्ययविषयाणि बोध्यानि । विश्रवःशब्दात्तु प्रत्ययो न भवति अनभिधानादिति भावः । तथाच "विदूराञ्ञ्यः" (पा०सू०४-३-८४) इति सूत्रे भाष्यम्--

वालवायो विदूरं च प्रकृत्यन्तरमेव वा ।
न वै तत्रेति च ब्रूयाज्जित्वरीवदुपाचरेत् ॥ इति ॥

अस्मिन्पक्षे षष्ठीनिर्दिष्टस्य स्थाने आदेशा विधीयन्ते इति वृद्धिसूत्रस्थं भाष्यं यथाश्रुतमेवेति निर्बाधम् । यत्तु स्थान्यर्थाभिधानसमर्थस्यैवादेशतेत्येवंपरतया कैयटेन भङ्क्त्वा व्याख्यातम्, तदन्यतरपक्षान्तराभिप्रायेणेत्यवधेयम् । अथ वा श्यनः शित्करणं ज्ञापकम्-अपवादे उत्सर्गकृतं नेति । न च पित्त्वनिवृत्त्यर्थं तदिति वाच्यम्, नित्त्वादेव तत्सिद्धेः । नित्त्वं ह्याद्युदात्तार्थम् । श्यनः पित्त्वे तु पित्त्वादनुदात्तत्वे लसार्वधातुकानुदात्तत्वे च धातुस्वरेणैव सिद्धौ किं नित्त्वेन ? न चानेकाक्षु विशेषः, दिवादौ तदभावात् । "वावृतु वर्त्तने" (दि०) इत्यस्तीति चेत् ? न, वाशब्दस्य विकल्पार्थत्वात् । न च भ्वादिपाठेन सिद्धेस्तद्वैयर्थ्यम्, भ्वादिपाठस्य "वृद्भ्यः स्यसनोः" (पा०सू०१-३-९२) इत्याद्यन्तर्गणकार्ये उपक्षीणत्वात् । नन्वेवं--

ततो वावृत्यमाना सा रामशालां न्यवीक्षत । (भ०का०)

इति भट्टिप्रयोगानुपपत्तिरिति चेत् ? न, तत्र वाशब्दस्यैवार्थतया कामयमानेव न तु तथा । किन्तु छलनार्थमागतेत्यर्थात् । अत्र कैयटः । ताच्छील्यादिविषये चानशि श्यनो नित्त्वं प्रकृतेराद्युदात्तार्थं स्यादिति ।

तत्र हि लसार्वधातुकाभावादनुदात्ताप्राप्त्या "चितः" (पा०सू०६-१-१६३) इत्यन्तोदात्तत्वमेव प्राप्तमिष्टं च । तत्रानिष्टार्थमेव नित्त्वं किन्न स्यादिति तस्याशयः । न त्वेतद् युक्तम् "अन्यत्र विकरणेभ्यः" इति पर्युदासाच्छ्रयन्स्वरस्य दुर्बलत्वात् । न च नित्त्वसामर्थ्यात्तद्बाधः, लसार्वधातुके चरितार्थत्वात् । तत्र स्थानिवद्भावलब्धेन पित्त्वेन गतार्थतेति चेत् ? न, इह नित्त्वेनातिदेशपर्युदासयोरन्यतरस्मिन्नवश्यबाध्येऽतिदेशबाधस्यैव न्याय्यत्वात्, "पूर्वान् बाधन्ते नोत्तरान्" (प०भा०प० ६१) इति न्यायाच्च । यत्तु कैश्चिच्चानशन्तस्याद्युदात्तत्वमिष्टमित्येवंपरतया कैयटग्रन्थं व्याख्याय "विकरणेभ्योऽन्यत्र" इति पर्युदासस्तु यत्र विकरणः स्वरभाक् तद्विषयः, इह तु विकरणो न स्वरभाक् "सौवर्यः सप्तम्यस्तदन्तसप्तम्यः" इति सिद्धान्तादित्युक्तम् । तदेतन्निर्मूलम्, घुसंज्ञासूत्रशेषस्थेन खश्सूत्रस्थेन च भाष्येण विरुद्धं चेत्युपेक्ष्यम् । किञ्च "आतोऽनुपसर्गे कः" (पा०सू०३-२-३) इति कापवादस्य "गापोष्टक्" (पा०सू०३-२-८) इति टकः कित्करणं ज्ञापकमनापवादे उत्सर्गकृतं भवतीति ।

अनल्विधाविति किम् ? तेन तस्मात्तस्य तस्मिंश्च विधौ मा भूत् । तत्राला विधौ यथा व्यूढोरस्केन । अत्र "सोपदादौ" (पा०सू०८-३-३८) इति विसर्जनीयस्य स्थाने विहितस्य सकारस्य स्थानिवत्त्वाद्विसर्जनीयस्य अट्सूपदेशाद् "अड्व्यवाये" इति णत्वं प्राप्तम् । अलः परस्य विधौ यथा—द्यौः । पन्थाः । सः । अत्र हल्ङ्यादिलोपो न भवति । अलो विधौ यथा—"दिव उत्" ( पा०सू०६-१-३१ ) द्युकामः । "लोपो व्योर्वलि" ( पा०सू०६-१-६६ ) इति लोपो न भवति । उत्वविधानं तु 'अहर्विमलद्यु' इत्यादौ चरितार्थम् । अलि विधौ यथा—यजेः कः इष्टः । क इष्ट इत्यत्र सम्प्रसारणस्य स्थानिवत्त्वात् 'कोयष्टा' इत्यादाविव "हशि च" (पा०सू०६-१-११४) इत्युत्वं न भवति । 'स इष्टः' इत्यत्र एतत्तदोः सुलोपो न भवति । अनल इत्युक्तेपि सम्बन्धसामान्ये षष्ठ्या प्रागुक्तानेकविभक्त्यर्थसङ्ग्रहो यद्यपि सम्भवति, तथापि विधिशब्दोपादानमप्राधान्येनाप्यल आश्रयणे निषेधार्थम् । तेन 'प्रपठ्य' इत्यादि सिद्धम् । अत्र हि वलादेरित्यप्राधान्येनालाश्रितः न तु प्राधान्येन ।

स्यादेतत् । स्थान्यनुबन्धकार्याण्यपि तर्हि निषिध्येरन् । तथाच 'प्रदीव्य' इत्यत्र स्थानिवद्भावेन कित्त्वं न लभ्येतेति चेत् ? न, "अनेकान्ता अनुबन्धाः" ( पा०सू०४ ) इति पक्षे अनुबन्धानां स्थान्यवयवत्वाभावात् ।

एकान्तपक्षेऽप्यन्तरङ्गेण लोपेनादेशसम्बन्धात्प्रागेवानुबन्धानामपहा-रात् "न ल्यपि" (पा०सू०६-४-६९) इति लिङ्गाच्च। यत्तु "सेह्यपिच्च" (पा०सू०३-४-८७) इति ज्ञापकमुच्यते, तत्पाक्षिकम्, अपिच्चवचनसा-मर्थ्यात्स्थानेऽन्तरतमपरिभाषया प्राप्तमनुदात्तत्वं न भवतीत्यस्यापि सुवचत्वात्। यद्यपि 'सामान्यातिदेशे विशेषानतिदेशः' इति सिद्धा-न्तः, उपस्थितसामान्यप्रयुक्तधर्मैस्तदाक्षिप्तव्यापकसामान्यधर्मैश्च वि-ध्याकाङ्क्षापूरणे सत्यनुपस्थितस्य विशेषस्य ग्रहणे प्रमाणा-भावात्। अत एव 'ब्राह्मणवदस्मिन् क्षत्रिये वर्त्तितव्यम्' इत्युक्ते माठ-रादिविशेषकार्यं नातिदिश्यते। अत एव च "आशंसायां भूतवच्च" (पा० सू०३-३-१३२) इत्यत्र भूतसामान्ये विहितयोर्लुङ्निष्ठयोरेवातिदेशो न तु भूतविशेषे विहितयोर्लङ्लिटोरपीति सिद्धान्तः। तथापीह सूत्रे "न ल्यपि" (पा०सू०६-४-६९) इति लिङ्गाद्विशेषोऽप्यतिदिश्यते। क्तिति परतो विहितमित्वं निषेद्धुं हि "न ल्यपि" (पा०सू०६-४-६९) इत्यारभ्यते। कित्त्वञ्च क्त्वाविशेषधर्मः, सेट्क्त्वे तदभावात्। तेन 'प्रदीव्य' इत्यादिसिद्धम्। तस्मात् "न ल्यपि" (पा०सू०६-४-६९) इत्येव सूत्रं विशेषातिदेशेऽनुबन्धकार्यातिदेशे चेत्युभयत्रापि ज्ञापकमिति स्थितम्।

यत्तु प्राञ्चः—"अनल्विधौ" (पा०सू०१-१-५६) इति निषेधो विशेषातिदेशज्ञापक इति। तच्चिन्त्यम्, 'व्यूढोरस्केन' 'क इष्टः' इत्यादौ विसर्गत्वस्य यण्त्वस्य च व्यापकीभूतयोरट्त्वहश्त्वयोर्निषेधेन चरितार्थत्वात्। यदपि त्वादेशे कृत्वप्रत्ययत्वाद्यतिदेशमभ्युपेत्य 'क इष्टः' इत्यादौ हश्त्वादिविशेषातिदेशो न प्राप्नोतीति मिश्रैरुक्तम्। तत्र विसर्गत्वयण्त्वयोरट्त्वहश्त्वे कथं विशेषधर्माविति विपश्चित एव विदाङ्कुर्वन्तु। यद्यपि तत्स्थानापन्नस्तद्धर्मं लभते इति न्यायसिद्धम्। अत एव व्रीहिस्थानापन्नेषु नीवारेषु वचनं विनैव व्रीहिधर्मा अवघातादयः क्रियन्ते। तथापि तेषां प्रकृतापूर्वसाधनत्वप्रयुक्ततया युक्तं नीवारादावनुष्ठानम्। "आङो यमहनः" (पा०सू०१-३-२८) इति हन्तेरात्मनेपदं तु न हिंसाद्यर्थाभिधानप्रयुक्तं येन वधौ भवेत्। किन्तु "स्वं रूपम्" (पा०सू०१-१-६८) इतिवचनात्स्वरूपविशेषप्रयुक्तम्। अत एव 'अतृणेड्' इत्यादौ न भवति। तस्माद्युक्त एवातिदेशारम्भः।

स्यादेतत्। मा भून्न्यायेन गतार्थता, ज्ञापकात्तु भविष्यति। तथाहि, "युष्मदस्मदोरनादेशे" (पा०सू०७-२-८६) इति सूत्रेऽनादेशग्रहणं ज्ञापयति,—आदेशः स्थानिवत्स्यादिति। "अदो जग्धिः" (पा०सू०२-४-३६) इति सूत्रे तिकितीत्येव सिद्धे ल्यब्ग्रहणमनल्विधावितीममंशं

ज्ञापयति, अप्राधान्येनाप्यलाश्रयणे निषेध इत्यंशं च। तथाच किं सूत्रे· णेति ? उच्यते, उत्तरार्थं तावत् 'स्थानिवदादेशः' इति कर्त्तव्यमेव। तस्यैव योगविभागमात्रेणोपपत्तौ सत्यामर्थापत्तिकं वचनं न कल्प्यम । एवं स्थिते ऽनल्विधावित्यंशमप्यंशः स्पष्टप्रतिपत्त्यर्थं क्रियते, उत्तरसूत्रे द्वितीयविधिग्रहणस्यानुवृत्त्यर्थं च । तत्प्रयोजनं तु तत्रैव वक्ष्यते। एतदेव च सकलमभिसन्धायोक्तं भगवता—"आरभ्यमाणेऽप्यस्मि· न्सूत्रे" इति ।

स्यादेतत् । अस्तु सूत्रारम्भः, तथापि कार्यातिदेश एवायमिति कु· तः ? प्रकारान्तराणामपि सम्भवात् । तथाहि, अतिदेशः षोढा—निमि· त्तव्यपदेशतादात्म्यशास्त्रकार्यरूपातिदेशभेदात् । तत्र निमित्तमशक्य· मतिदेष्टुम् । ब्राह्मण्यवत् । न हि ब्राह्मणस्याग्रभोजनादौ निमित्तभूतं ब्राह्मण्यं वचनशतेनापि क्षत्रियेऽतिदेष्टुं शक्यते । "पूर्ववत्सनः" (पा० सू०१-३-६२) इत्यत्रापि प्रकृतिगतं निमित्तं ङित्वादि न सन्नन्तेऽतिदि· श्यते । किन्तु प्रकृतिगतमेव तत्सना व्यवधाने सत्यप्यात्मनेपदं प्रव· र्त्तयतीत्येतावन्मात्रमतिदिश्यते । एतावतैव च निमित्तातिदेशोऽयमि· ति व्यवहारः । न चायं कार्यातिदेश एवास्तामिति वाच्यम् 'चिक्रंसते' 'प्रचिक्रंसते' इत्यादाविट्प्रसङ्गात् । निमित्तातिदेशपक्षे त्वनुपसर्गः प्रपू· र्वश्च क्रमिरेवेह सना व्यवहितोऽप्यात्मनेपदं प्रवर्त्तितवानिति "स्नुक्रमो· रनात्मनेपदनिमित्ते" (पा०सू०७-२-३६) इति नियमादिण् न भवति । निमित्तं हि तत्र फलोपहितमेव गृह्यते न तु स्वरूपयोग्यतामात्रमिति वक्ष्यामः । "सिद्धं त्वात्मनेपदेन समानपदस्थस्येट्प्रतिषेधात्" इति वार्त्तिकरीत्या त्विहापि कार्यातिदेशता सुवचा न्याय्या चेति तत्रैव व· क्ष्यते । व्यपदेशातिदेशस्तु "आद्यन्तवदेकस्मिन्" (पा०सू०१-१-२१) इत्येकस्मिन्नप्यादिरन्त इति च व्यपदेशेऽतिदिष्टे तत्तत्सूत्रैरेव कार्याणी· ति भावः । तथा च प्राञ्चः—

आद्यन्तवद्व्यपदेशो निमित्तं पूर्ववत्सनः । इति ।

एतच्च निर्मूलमिति तस्मिन्नेव सूत्रे हरदत्तः । तस्यायं भावः-कार्या· तिदेश एव तत्र युक्तः, सर्वातिदेशानां कार्यार्थतया कार्यस्यैव प्राधा· न्यात् । अत एव कार्यातिदेशाभ्युपगमे यत्र बाधकावतारस्तत्रैव प्रका· रान्तरानुसरणम् । न चाद्यन्तवत्सूत्रे तदस्ति, प्रत्युत व्यपदेशातिदेशपक्षे एव बाधकम्। तथाहि, 'कुरुते' 'कुर्वे' इत्यादावन्त्यव्यपदेश आदिव्यपदे· शश्चास्तु । तथाप्यन्त्योऽजादिर्यस्येत्येवंरूपस्य बहुव्रीह्यर्थस्याभावा· ट्टिसंज्ञाया अभावे टेरेत्वं न स्यात् । 'कुर्वाते' इत्यादौ इष्टस्य टेरेत्वाख्य·

स्य कार्यस्यातिदेशे तु न कश्चिद्दोष इति। तादात्म्यातिदेशस्तु भिन्नयोरभेदातिदेशः। "सुबामन्त्रिते पराङ्गवत्स्वरे" (पा०सू०२-१-२) इति यथा। तेन "यत्ते दिवो दुहितर्मर्त्तभोजनम्" इत्यादौ "आमन्त्रितस्य च" (पा०सू०८-१-१९) इत्याष्टमिकसूत्रेण पदात्परस्यामन्त्रितस्य क्रियमाणो निघातो 'दिवो दुहितर्' इति समुदाये प्रवर्त्तते। शास्त्रातिदेशस्तु "कर्मवत्कर्मणा"(पा०सू०३-१-८७) इत्यत्र पाक्षिको वक्ष्यते। कार्यातिदेशो "गोतो णित्" (पा०सू०७-१-९०) इत्यादिः। रूपातिदेशस्तु "द्विर्वचनेऽचि" (पा०सू०७-१-९५) "तृज्वत्क्रोष्टुः" (पा०सू०१-१-५९) इत्यादिः। तदिह कार्यातिदेश एवेत्यत्र किं विनिगमकमिति चेत्? उच्यते, कार्यस्य प्राधान्यात्तदतिदेश एवायम्, अतिदेशान्तरे बाधकसत्त्वाच्च। तथाहि, निमित्तव्यपदेशातिदेशौ तावत्पाक्षिकावित्युक्तम्। शास्त्रातिदेशोऽप्येवम्। तादात्म्यातिदेशस्तु द्वयोः सहावस्थितयोः स्यात्। सुबामन्त्रितयोरिव। इह तु स्थानी आदेशेन अपहृत इति तदसम्भवः। रूपातिदेशे त्वादेशविधानं व्यर्थं स्यात्। न च वचनद्वयप्रामाण्याद्विकल्पः-"विभाषा लुङ्लृङोः" (पा०सू०२-४-५०) इति विकल्पारम्भात्। तस्मात्कार्यातिदेश एवायमिति स्थितम्।

यत्तु न्यासकारेणोक्तम्-व्यपदेशातिदेशस्संज्ञापक्षे पर्यवसन्नः। स च वत्करणसामर्थ्यादेव न भविष्यतीति। तत्रेदं वक्तव्यम्-अस्तीह संज्ञापक्षाद्वैषम्यम्। तथाहि, "आङो यमहनः" (पा०सू०१-३-२८) इत्यादौ वधेरेव ग्रहणं स्यान्न तु हन्तेः। तथा 'केन' 'कस्माद्' इत्यादावङ्कार्यादीनि न स्युरिति संज्ञापक्षे दोषद्वयम्। न चेदं व्यपदेशातिदेशेऽस्ति। "स्वं रूपम्" (पा०सू०१-१-६८) इति वचनाद्धि हन्तेर्हन्तिरेव संज्ञा। तद्व्यपदेशस्य वधावप्यतिदेशे द्वाभ्यामात्मनेपदं लभ्यते, न तु हन्तेरेव। एवं स्थानिनिष्ठानां धात्वङ्गादिव्यपदेशानामादेशेऽतिदेशाद्धात्वङ्गादिकार्याण्यपि सुलभान्येव। तस्मात्प्राधान्यात्कार्यातिदेशोऽयमित्येव तत्त्वम्।

अत्र वार्तिककाराः-"तस्य दोषः" (भा०३०) इत्युपक्रम्य "तयादेशे उभयप्रतिषेधः" "ङ्याब्ग्रहणे ऽदीर्घः" "आहिभुवोरीट्प्रतिषेधः" इत्यादि पेठुः। तत्रोभयशब्दे यथा नातिप्रसङ्गस्तथा सर्वादिगणव्याख्यावसरे एवोपपादितम्। ङ्याब्ग्रहणेऽपि ङी ई आ आबिति दीर्घप्रश्लेषाद् 'अतिखट्वेन' 'अतिखट्वं' इत्यादौ नातिप्रसङ्गः। न चैवमपि 'अतिखट्वाय' इत्यत्र दोषतादवस्थ्यम्, उपसर्जनस्त्रीप्रत्यये तदादिनियमसत्त्वात्। न चैवं प्रश्लेषवर्णनवैयर्थ्यम् 'अतिखट्वे' इत्यादावङ्गाधि-

कारविरहेणावयवात्टाबन्तात्परत्वमाश्रित्य हल्ङ्यादिलोपापत्तेः। न हि तत्र विहितविशेषणाश्रयणं युक्तम्। 'यः' 'सः' इत्यादावतिव्याप्तेः 'या सा' इत्यादावव्याप्तेश्चेत्युक्तम्। अत एव सूत्रकारोऽपि तत्र दीर्घग्रहणं कृतवान्। दीर्घप्रश्लेषस्तु तत्प्रत्याख्यानाय वर्ण्यते इत्यन्यदेतत्। युक्तं चैतत्, वार्तिकमते 'अतिखट्वाय' इत्यादावङ्गाधिकारबलेन कथञ्चिन्निर्वाहेऽपि 'जरसे' 'नसे' 'पृते' इत्यादावतिप्रसङ्गस्य दुर्वारत्वात्, सुतामिच्छन् 'सुतीः' इत्यादौ सुलोपापत्तेश्चेति दिक्। अस्तु वा आकारान्तरमपि प्रश्लिष्य तत्सामर्थ्यान्मध्ये ह्रस्वतामापन्नस्य परिहार इति दिक्। "आहिभुवोः" इति वार्त्तिकं त्वित्थं भाष्यकाराः प्रत्याचख्युः—'आत्थ' इत्यत्र आहेः स्थानिवद्भावेन प्राप्तोऽपि भुव ईण्न भवति—"आहस्थः" (पा०सू०८-२-३५) इति ज्ञापकात्। तेन हि झलादौ परे थत्वं विधीयते। न च कृतेपीटि भूतपूर्वगत्या झलादित्वात्थकारोऽस्त्विति वाच्यम्, एवं हि सत्याथमेव विदध्याल्लाघवात्, तिबादीनां पञ्चानामपि झलादितया णलादीनामपि भूतपूर्वगत्या झलादित्वात्। तस्माद् "आहस्थः" (पा०सू०८-२-३५) इति ज्ञापकादाहेरिड्विधौ स्थानिवद्भावो नेति स्थितम्। "अस्तेर्भूः" (पा०सू०२-४-५२) इति विहितस्य भुवोऽपि स्थानिवत्वनिषेधो न वक्तव्यः। "अस्तिसिचोऽपृक्ते" (पा०सू० ७-३-९६) इति द्विसकारकनिर्देशेन सकारान्तादेवास्तेः परस्येड्विधानादिति।

स्यादेतत्। अस् स् इति सकारद्वयनिर्देशे धातुत्वाभावात् श्तिबेवानुपपन्नः, पदमध्यप्रविष्टेन सकारेण सिचो विशेषणासम्भवे सिजाश्रयस्य ईटः प्रसङ्गश्च। न चास्तेः सान्तत्वेन विशेषणसामर्थ्यात्सिच्प्रयुक्तोऽपीण् नेति वाच्यम्, तथापि स्वतन्त्रस्य भवतेरतिप्रसङ्गस्य दुर्वारत्वात्। तथाचार्थभेदाभावेऽपि स्वतन्त्रास्वतन्त्राभ्यां भूभ्याम् 'अभूवीत्' 'अभूत्' इति रूपद्वयापत्तिः। यत्त्वेतद्दोषोपन्यासपूर्वकं माधवाचार्यैरुक्तम्—"सिचोल्पाच्कत्वाद्बहुविषयत्वेनाभ्यर्हितत्वाच्च पूर्वनिपाते कर्त्तव्ये "अस्तिसिचः" (पा०सू०७-३-९६) इति वचनात्तन्त्रादिना विधमानात्सिच इत्यर्थो लभ्यते। अत एव श्तिप्प्रयोगोऽपि सार्थकः। अन्यथा 'सिजस्भ्याम्' इत्येव ब्रूयात्। न चैवमसतावस्यतौ चातिप्रसङ्गः, विकरणव्यवधानेन ताभ्यां परस्यापृक्तसार्वधातुकस्यासम्भवात्" इति। तच्चिन्त्यम्, एवमपि श्तिप्प्रत्ययाप्रसमाधानेन द्विसकारको निर्देश इति भाष्यस्यानिर्वाहात्। एतेन सिच्च अस् च सिचस्। समाहारद्वन्द्वे लुप्तपञ्चमीकं पदम्। अयस्मयादित्वेन भत्वान्न कुत्वजश्त्वे। अस्ति च

तस्सिजस् चेति कर्मधारयः । तेन लुप्तात्सिचो भूभावेनापहृतादस्तेश्च परस्य नेति कल्पनापि प्रत्युक्ता, उक्तरीत्या रूपसिद्धावपि भाष्यानिर्वाहात् । तस्मादिह भगवतोऽभिप्रायान्तरमेव वक्तव्यमिति ।

अत्रोच्यते, अस्तिसिचस् स् इतिच्छेदः । सान्तादस्तेर्न तु कृतभूभावात् । सान्तात्सिचः श्रूयमाणादिति यावत् । तथाच सिच इत्यस्यानन्तरं सकारः प्रश्लिष्यते न तु श्तिपः प्राक् , येन माधवोक्तः श्तिप्प्रत्ययानुपपत्तिरूपो दोषः स्यात् । अत एव 'सिचो ऽपृक्ते' इति द्विसकारको निर्देश इत्युक्तं भाष्ये । अन्यथा ह्यस्तीति निर्देश इत्येव ब्रूयात् । नन्वेवमस्तिसिचोऽपृक्ते इति संहिता कथं निर्वहतीति चेत् ? इत्थम् , "संयोगान्तस्य लोपः" (पा०सू०८-२-२३) इति द्वितीयः सकारो लुप्यते । ननु लुप्तविभक्तिकं स् इति पदम् । न चैतत्संयोगान्तम् । तथाच संयोगान्तं यत्पदं तस्य विधीयमानो लोपः कथमिह स्यादिति चेत् ? न, संयोगान्तस्य पदान्तस्य लोपः स्यादिति व्याख्यानात् । संयोगेति हि लुप्तषष्ठीकं पृथक् पदम् । संयोगस्य पदस्येत्युभयं चान्तस्य विशेषणम् । एष एव च सूत्रकृतोऽप्याशयः । यदि ह्ययं बहुव्रीहिः पदं चान्यपदार्थ इति वृत्तिकारकृतं व्याख्यानं संमतं स्यात्तर्ह्यन्तग्रहणं न कुर्यात् , संयोगेन पदविशेषणादेव तदन्तलाभात् । अपिच सरूपसूत्रे पृथक् सर्वेभ्यो विभक्तावेकशेष इति पक्षे 'वृक्षस् स्' इति प्रसज्येतेत्याशङ्क्य संयोगान्तलोपात्सिद्धमिति भाष्यग्रन्थः प्रकृतव्याख्यान एवानुकूलः । यत्तु तत्र कैयटो वक्ष्यति-"वस्तुतस्संयोगान्तस्य लोपाद्धल्ङ्यादिलोपात्" इति । तत्तु मूलस्वरसविरुद्धम् , अत्र व्याचक्षत इत्युपक्रमादपरितोषग्रस्तश्च । अत एव हलन्त्यसूत्रे अन्योन्याश्रयोद्धारार्थमन्त्यलकारस्येत्संज्ञायां णलो लित्वं स्वरार्थं क्रियमाणं ज्ञापकमिति प्रक्रम्य ननु लकारः श्रवणार्थ एवेत्याशङ्क्यापृक्तं हलिति हल्ग्रहणं णल्व्यावृत्तये क्रियमाणं णलोऽपृक्ततां ज्ञापयतीति वक्ष्यति । तस्य ह्ययमाशयः-'भेत्ता' इत्यादौ डादेशो हल्ग्रहणस्य व्यावर्त्यो न सम्भवति । सुतिसीतिप्रत्ययैः प्रकृतेराक्षेपेण हलन्तायाः प्रकृतेः परेषां स्वादीनां लोपः । न च डादेशं प्रति तासन्ता प्रकृतिरिति । एवं चेहापि वृक्षस् इत्यस्य प्रकृतित्वाभावात्कथं हल्ङ्यादिलोपः । "अस्तिसिचोपृक्ते" (पा०सू०७-३-९६) इति द्विसकारको निर्देश इति प्रकृतग्रन्थोप्युक्तव्याख्यायामनुकूल एव । नन्वस्तूक्तरीत्या संयोगान्तलोपस्तथापि तस्यासिद्धत्वाद्रोरुत्वं दुर्लभमिति चेत् ? न, "संयोगान्तलोपो रोरुत्वे" इति वार्त्तिकेनासिद्धत्वनिषेधात् 'हरिवो मेदिनं त्वा' इत्यादिवत् । सिचोपृक्ते इति प्रकृत-

निर्देश एव च वार्त्तिकोक्तार्थे ज्ञापको बोध्यः। अथवा अस्तु वृत्तिकारोक्त एव "संयोगान्तस्य लोपः" (पा०सू०८-२-२३) इति सूत्रस्यार्थः। अन्तग्रहणन्तु प्रत्येकं संयोगसंज्ञेति पक्षे संयोगावन्तौ यस्येति द्वित्वावगतयेऽस्तु, संयोगसंज्ञासूत्रे भाष्यकैटयोस्तथैवाभिधानात्। प्रकृते तु माऽस्तु संयोगान्तलोपः। किन्तु द्वयोः सकारयो रुत्वे कृते "अतो रोः" (पा०सू०६-१-११३) इत्यनेन एक एवोकारो भविष्यति विधेयविशेषणस्यैकत्वस्य पश्वेकत्ववद्विवक्षितत्वात्, रोरिति जातिपरनिर्देशनातः परत्वस्य पूर्वत्वस्य च सम्भवात्। जातिपरत्वे प्रकृतिनिर्देश एव प्रमाणमस्तु। न च परत्वाद् "हशि च" (पा०सू०६-१-११४) इति प्रथमस्यैव रोरुः स्यादिति वाच्यम्, रुत्वस्यासिद्धतया हश्परत्वाभावात्। न चाश्रयात्सिद्धत्वमिति वाच्यम्, स्थान्यंशे तथात्वेऽपि निमित्तीभूतहशंशे तदसम्भवात्। एष एव च द्विसकारकनिर्देशं वदतो भाष्यकारस्याशयः। न तु संयोगान्तलोप इति। अत एव "नुदविद" (पा०सू० ८-२-५४) इति सूत्रे "क्षुभः कः" (पा०सू०८-२-५१) इत्यादि बहुयोगविच्छिन्नस्य नकारस्य कथमनुवृत्तिरित्याशङ्क्य "अन्यतरस्यान्नध्याख्या" (पा०सू०८-२-५७) इति संहितापाठेन नकारान्तरप्रश्लेष इत्युक्तं भाष्ये। "हलो यमाम्" (पा०सू०८-४-६४) इति लोप इति हि तस्याशयः। पूर्वोक्तरीत्या तु संयोगान्तलोपेनैव सिद्धौ संहितापाठपर्यन्तं नोपन्यस्येत्। संहितायामपि हि "हलो यमाम्"(पा०सू०८-४-६४) इति लोपस्य बहिरङ्गत्वत्रिपादीस्थत्वाभ्यामसिद्धत्वात्संयोगान्तलोपेनैव भाव्यम्। "संयोगान्तलोपे यणः प्रतिषेधः" न वा झलो लोपाद्बहिरङ्गलक्षणत्वाद्वा" इति वार्त्तिकोक्तपक्षत्रये प्रथमचरमयोस्तस्य दुर्वारत्वात्। तस्मात्समुदाये प्रत्येकं वा संयोगसंज्ञेति पक्षद्वयानुरोधेनेह समाधानद्वयं व्यवस्थितमिति भाष्यार्थः। पूर्वोक्तरीत्या सिचस् इति समाहारमाश्रित्य तदुपरि स् इतिच्छेद इति पक्षे स्वस्तिग्रहणप्रत्याख्यानपरतयाऽपीदं भाष्यं योजयितुं शक्यमिति दिक्। एतेन "संयोगान्तस्य लोपः" (पा०सू०८-२-२३) इति सूत्रेऽन्तग्रहणं शक्यमकर्त्तुमिति पदमञ्जरी प्रत्युक्ता, पक्षद्वयेऽपि प्रयोजनस्योक्तत्वात्। विद्यमानं यत्सिचस् इति पक्षे वा योज्या। वस्तुतस्तु झल इतिवत् सस्येत्यपकृष्यते तत्सामर्थ्यात्संयोगान्तस्य पदत्वाभावेऽपि लोप इत्यलम्।

यत्तु सिचः परत्वादीटि प्राप्ते "आहिभुवोरीट्प्रतिषेधः" इति वार्त्तिकबलान्निषेध इति कैश्चिदुक्तम्। तन्न, "तस्य दोषः" इत्युपक्रमात्स्थानिवद्भावप्रतिषेधपरेणोक्तवार्त्तिकेनास्तेः परत्वमुपजीव्य प्रवृत्तस्ये-

टो निवृत्तावपि सिच्प्रयुक्तस्यानिवार्यत्वात् 'अस्थात्' 'अगात्' इत्यादावुक्तदोषतादवस्थ्याच्च । तस्मात्प्रागुक्तएवेवाल्यतमः पन्थाः शरणमित्यलं बहुना ।

वध्यादेशे वृद्धितत्वप्रतिषेध इड्विधिश्चेति वार्त्तिकान्तरम् । अस्यार्थः-हन्तेर्ण्वुलि कृते "बहुलन्तण्यन्नवधकगाम्नविचक्षणाजिराद्यर्थम्" (का०वा०) इति वार्तिकेन संज्ञाछन्दसोर्वधादेशः । स च हलन्त इति मत्वा वृद्धिरापाद्यते "हनस्तोचिण्णलोः" (पा०सू०७-३-३२) इति तकारश्च । तयोः कर्त्तव्ययोः स्थानिवद्भावप्रतिषेधः । तथा 'आवधिषीष्ट' इत्यादौ स्थानिवद्भावेनाङ्गतया "एकाचः" (पा०सू०७-२-१०) इतीण्निषेधः प्राप्तः । तस्मिन्नपि कर्त्तव्ये स्थानिवद्भावेनाङ्गता नेति वाच्यम । तदेतदिड्विधिश्चेत्यनेनार्थादुक्तम् । एतदपि भाष्ये प्रत्याख्यातम् । तथाहि, वधादेशस्तावददन्तः । अन्यथा 'अवधीत्' इत्यत्र "अतो हलादेः" (पा०सू०७-२-७) इति वृद्धिप्रसङ्गात । एतच्चोत्तरसूत्रे भाष्ये एव स्पष्टम् । 'वधकः' इति तु नायं ण्वुल् किन्तु "हनो वध च" (उ०सू०२०४) इत्यौणादिकसूत्रेण क्वुन्प्रत्ययः । तथाचेह वृद्धितत्वयोः प्रसङ्ग एव नास्ति । 'आवधिषीष्ट' इत्यादाविण्निषेधोऽपि न भवति वध्यादेशे आद्युदात्तनिपातनसामर्थ्यात् । न चैवं सतिशिष्टेन तेन यदावधिषीष्टेत्यादौ प्रत्ययस्वरो बाध्येतेति वाच्यम् । आर्द्धधातुकीयानामादेशानां प्रत्ययविवक्षामात्रेण प्रवृत्त्या प्रत्ययस्वरस्यैव सतिशिष्टत्वादिति ।

स्यादेतत् । इड्विधिश्चेत्यंशो पूर्वपक्ष एव शिथिलः । तथाहि, उपदेशेऽनुदात्तादिण्निषिध्यते । न च वधिस्तथा । स्थानिवद्भावेनायं तथेति चेत् ? न, अल्विधौ स्थानिवद्भावविरहात् । सत्यम्, नेह स्थानिवद्भावं ब्रूमः । किन्तु हन्त्युपदेश एव वधेरुपदेशः । कृञुपदेश इव 'कर्त्ता' 'कर्त्तुम्' इत्यादौ करित्यादीनाम । स्थानिवद्भावस्त्वङ्गसंज्ञार्थं मृग्यते इत्युक्तमेव । नन्वेवमपि परिहारग्रन्थोऽसङ्गत एव । यदि हि प्रागेव प्रत्ययोत्पत्तेर्वधादेशाभ्युपगमस्तर्हि "वधभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेन" इति स्यसिच्सूत्रीयं वार्तिकं विरुध्येत, अन्तरङ्गबहिरङ्गयो र्विप्रतिषेधायोगात् । तथाच कर्मणि सीयुटि 'वधिषीष्ट' इत्येकमेव रूपं स्यात । इष्यते तु 'घानिषीष्ट' इति द्वितीयमपि । अत्रोच्यते वार्तिकमते "आर्द्धधातुके" इत्यस्य विषयसप्तमीत्वेऽपि लिङ्लिुङित्यादीनां परसप्तमीत्वाभ्युपगमेन विप्रतिषेधः सम्भवत्येव । अत एवेहाद्युदात्तनिपातनासंभवादिड्विधिश्चेत्युपसंख्यातम् । भाष्यकाराणां त्वयमाशयः--आर्द्धधातु-

क्ङ्इतिवलिलिङीत्यादिरपि विषयसप्तम्येव । तथाचाद्युदात्तनिपातनेनैवो-पपत्तौ इड्विधिश्चेति न कर्त्तव्यमेव । 'घानिषीष्ट' इति कथं सिध्येदिति परमवशिष्यते । तत्रेदमुत्तरम्--प्रतिपदविधेर्बलीयस्त्वाच्चिण्वद्भाव इति। एतच्च स्यसिच्सूत्रे कैयटेन स्पष्टमुक्तम् । तस्माद्वार्त्तिकमते विप्रतिषेधा-च्चिण्वद्भावः, भाष्यमते तु प्रतिपदोक्तत्वादिति विवेकः । एतेन "एका-च उपदेश" (पा०सू०७-२-१०) इति सूत्रेपि "आर्द्धधातुकीयाः सामा-न्येन भवन्ति" इत्यादिभाष्यग्रन्था व्याख्याताः। यत्तु तत्र कैयटेनो-क्तं विप्रतिषेधे उपपत्तिश्चिन्त्येति, तन्न प्रागुक्तोपपत्तिरेव समर्त्तव्ये त्येवंपरम् ।

स्यादेतत्, प्रतिपदविधित्वं किमिह विवक्षितम्--अनवकाशत्वं वा साक्षादुपादानमात्रं वा ? नाद्यः, स्यसिच्सूत्रे हन्ग्रहणस्य 'घानिष्यते' इत्यादौ लब्धावकाशत्वात् । तत्रत्यस्य सीयुट्ग्रहणस्य तु 'कारिषीष्ट' इत्यादौ कृतार्थत्वात् । न चाजन्तादीनां चतुर्णां स्यादिचतुष्कसम्बन्धे अस्वरितत्वाच्च यथासंख्याभावे हन्तेः सीयुटीति योऽशस्तस्यानर्थ-क्यमेव । अन्तरङ्गत्वाद्धि वधभावे कृते तस्य स्थानिवत्वेन हन्तिग्रहणेन ग्रहणात्सीयुटि चिण्वदिटि कृते "णयल्लोपावियङ्" ( का०वा० ) इति पूर्वविप्रतिषेधेनाल्लोपे सति 'वधिषीष्ट' इत्येव रूपं स्यादिति वाच्यम्, अन्तरङ्गेण वधिनापहारे न्याय्ये सत्यसम्भवादेव हन्तेः सीयुटा समं सम्बन्धायोगात् ।

संभवे व्यभिचारे च स्याद्विशेषणमर्थवत् ।

इति न्यायात् । अत एव भस्त्रादिसूत्रे आतः स्थाने इत्येतत्स्वशब्द-स्यैव विशेषणं न तु भस्त्रादीनामिति वक्ष्यते । तथा "नित्यं क्रीडाजी-विकयोः" (पा०सू०२-२-१७) इत्यत्र क्रीडायां तृचोऽसम्भवादेकेनैव तदन्वय इति वक्ष्यते।

नान्त्यः, वधादेशेऽपि "हनो वधलिङि" (पा०सू०२-४-४२) इति साक्षादुपादानस्याविशिष्टत्वात । अन्तरङ्गत्वस्याधिकत्वाच्चेति चेत् ? अत्रोच्यते, "चिण्वदिट् च" (पा०सू०प०६-४-६२) इति चकारस्यानुक्त-समुच्चयार्थत्वेन व्याख्यानाद्धन्तेरपि परस्य सीयुटश्चिण्वद्भावो विधी-यते । तस्य चानर्थकत्वमेव प्रतिपदविधित्वम् । अनुक्तसमुच्चयार्थत्वं चास्य भाष्यकार एव वक्ष्यति—"चं भगवान्कृतवांस्तु तदर्थम्" इति । अत एव ह्याभात्सूत्रप्रत्याख्यानपक्षे कृतेऽपीटि णिलोपः सिध्यति । सूत्रा-रम्भे परमिट् चासिद्धस्तेन मे लुप्यते णिरिति वक्ष्यमाणं बोध्यम् । यद्वा लिङीति सामान्यमार्धधातुके सीयुटीति विशेषः । हन्तेरित्युभयत्राभि-

शिष्टम् । तथाचापवादत्वमेव चिण्वदिडिति नास्त्यसम्भवः, येन ह-
न्तिः सीयुटा नान्वियात् । तथाच कैयटोक्तं प्रतिपदविधित्वमपि
सम्यगेव ।

युक्तश्चैतत् । यदि ह्यसम्भवस्तर्हि चेनाप्यसम्भविनो विधानायोगेन
प्रागुक्तपक्षस्य दुर्बलत्वात् । अथवा वक्ष्यमाणनिष्कर्षरीत्या "अन्तरङ्गं
बलीयः"(प०भा०५०) इत्यस्य "असिद्धं बहिरङ्गम्" (प०भा०५०) इत्यनेन
प्रत्याख्यानात्सत्य च क्षति तुग्ग्रहणेनानित्यत्वाल्लक्ष्यानुरोधेनेह त्यागा-
द्युक्तो विप्रतिषेधः । अथवा लिङीति परसप्तम्येवास्तु । परत्वाच्च चि-
ण्वदिट् । आद्युदात्तनिपातनं तु माऽस्तु । न चैवं 'वधिषीष्ट' इत्यत्रेण्
निषेधापत्तिः 'कर्त्ता' इत्यादाविवेति वाच्यम् । वधेर्हि द्वावुपदेशौ । हन्त्यु-
पदेशो वध्युपदेशश्चेति "एकाच" (पा०सू०७-२-१०) इति सूत्रे भाष्ये
एव स्पष्टम् । तथाच वध्युपदेशेऽनेकाच्त्वादिण्निषेधो न भविष्यति ।
एकेति विशेषणसामर्थ्याद्ध्यनेकाच्कोपदेशो व्यावर्त्यते । नन्वच इत्युक्ते-
ऽजन्तस्यैव स्यात् । मैवम्, पचादीनामनुदात्तत्वस्य वैयर्थ्यापत्तेः । अत
एवैकत्वविवक्षया अच इत्यस्यैको योऽच् तद्वत इत्यर्थे लब्धे एकग्रहण-
सामर्थ्यादुक्तार्थलाभः । न च "यत्रैकाज्ग्रहणम्" (प०भा०प०१३१) इति
परिभाषाप्रवृत्तये एकग्रहणमिति युक्तम्, शब्दविशेषमनादृत्य एकाच
इत्यर्थमेवाश्रित्य परिभाषाप्रवृत्तेः सुवचत्वात् । न चैवमिहैव विशेषण-
सार्थक्ये "श्तिपा शपा" (प०भा०१३१) इत्यादिपरिभाषाज्ञापकत्वं न
स्यादिति वाच्यम्, "शीङः सार्वधातुके गुणः" (पा०सू०७-४-२१)
"दीङो युडचि" (पा०सू०६-४-६३) इत्यादिसानुबन्धनिर्देशानामेव त-
ज्ज्ञापकत्वसम्भवात् । तदेवं सर्वथाऽपि वधेः परस्येडस्त्येवेति स्थितम् ।
अत एवानिट्कारिकासु व्याघ्रभूतिनाऽदन्तपर्युदासः कृतः "अदन्त-
मृदन्तमृताञ्च वृङ्वृञौ" इत्यादिना । यत्तु कौमुद्यां भावकर्मलकारव्यु-
त्पादनावसरे 'घानिषीष्ट' इत्युदाहृत्य पक्षे वधादेश इत्युक्तं तत्सूत्ररी-
त्या भाष्यमते वार्त्तिकमते वा उभयथापि निर्बाधमेव । एवं स्थिते पक्षे
वधादेश इति प्रतीकमुपादाय 'इदन्तु सिद्धान्तविरुद्धं भाष्यादौ वधा-
देशानभ्युपगमात्' इति वदन् प्रसादकारः प्रत्युत स्वस्यैव कलङ्कमावि-
रकरोत् । यदपि तेन स्वकीयभ्रमबीजभूतं वार्त्तिकमुदाहृतं "हनिणि-
ङादेशप्रतिषेधश्च" इति । नैतल्लिङि प्राप्तस्य निषेधपरं, किन्तु स्यादि-
ष्वपि चिण्वदित्यतिदेशेन प्राप्तस्य । अत एवाङ्गाधिकारादाङ्गस्यैवाति-
देशो न तु हनिणिङादेशानाम् अनाङ्गत्वादित्यङ्गाधिकारबलेनैव भाष्यं
तद्वार्त्तिकं प्रत्याख्यातम् । यद्यप्येतात्सिद्धान्तग्रन्थेष्वविवादमेव तथा-

ऽपि "अन्धस्येवान्धलग्नस्य" इति न्यायेन प्रसादग्रन्थं दृष्ट्वा बाला मा भ्राम्येयुरित्येतदर्थमस्माभिः स्फुटीकृतम् ।

प्रकृतमनुसरामः, आकारान्तान्नुक्पुकप्रतिषेधः । लोडादेशे शाभाव-जभावधित्वहिलोपैत्वप्रतिषेधः । त्रयादेशे स्रन्तप्रतिषेधः । आम्विधौ च । स्वरे च वस्वादेशे । एतान्यपि पञ्च वार्त्तिकानि प्रत्याख्यातानि । तथाहि, 'विलापयति' 'भापयति' इत्यत्र नुक्पुकौ न भविष्यतः, ली ई भी ई इतीका-रप्रश्लेषात् ह्रस्वप्रश्लेषाद्वा । तथा 'शिष्टात्' 'हतात्' 'भिन्तात्' 'कुरुतात्' 'स्तात्' इत्यत्र परत्वात्तातङि कृते "शाहौ" (पा०सू०६-४-३५) "हन्ते-र्जः" (पा०सू०६-४-३६) "हुझल्भ्यो हेर्धिः" (पा०सू०६-४-१०१) "उत-श्च प्रत्ययादसंयोगपूर्वात्" (पा०सू०६-४-१०६) "ध्वसोरेद्धौ" (पा०सू० ६-४-११९) इत्येते विधयो यद्यपि प्राप्नुवन्ति तातङः स्थानिवद्भावेन हिग्रहणेन ग्रहणात्, तथापि "सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधि-तमेव" (प०भा०४० ) इति न्यायान्न भवन्ति । एवं 'पुष्णीतात्' इत्यत्र "हलः श्नः शानज्झौ" (पा०सू०३-१-८३) इति न भवति, उभ-योर्नित्ययोः परत्वात्तातङः प्रवृत्तेः । तथा 'तिसृणाम्' इत्यत्र परत्वात्ति-सृभावेन बाधितः "त्रेस्त्रयः" (पा०सू०६-३-४८) इति त्रयादेशोऽपि बा-धित एव । एवं 'चतस्रस्तिष्ठन्ति' इत्यत्र परेण चतसृभावेन "चतुरन-डुहोः" (पा०सू०७-१-९८) इत्याम् बाध्यते । तथा 'अशासन्त्वाविदुषी सस्मिन्नहन्' इत्यत्र "विदेः शतुर्वसुः" (पा०सू०७-१-३६ ) इति वस्वा-देशस्य शतृग्रहणेन ग्रहणात् "शतुरनुमो नद्यजादी" (पा०सू०६-१-१७३ ) इति सूत्रेणान्तोदात्तात्छत्रन्तात्परत्वमुपजीव्य प्राप्तं नद्या उदा-त्तत्वम्, "यस्यैवं विदुषोऽग्निहोत्रं जुह्वति" इत्यत्र विदुष इत्यत्र षष्ठ्या उदात्तत्वं च न भवति, अनुम इति निषेधात् । तथाहि, अविद्यमान उम् यस्येति बहुव्रीहिः । उमिति च "सनाशंस" (पा०सू०३-२-१६८) इत्युकारात्प्रभृत्यानुमो मकारात्प्रत्याहारः "तनादिकृञ्भ्य" (पा०सू० २-१-७९) इत्युकारात्प्रभृति वा । तत्र च "वसोः सम्प्रसारणं" (पा० सू०६-४-१३१) चान्तर्भूतम् । नन्वेवं द्वितीयपक्षे "लुनता अच्छारवं प्रथमा जानतीगात्" इत्यादावपि निषेधापत्तिः । "तनादिकृञ्भ्यः" (पा०सू०३-१-७९) इत्युपक्रमे श्नाप्रत्ययस्यापि तत्रान्तर्भावादिति चेत् ? न, शतरि परे श्नाप्रवृत्तावपि शतुरनुमकत्वानपायात् । नुमा-गमग्रहणपक्षेऽपि हि शतुरेव तद्राहित्यं विशेषणं न तु शत्रन्तस्य, 'मुञ्चता' 'मुञ्चते' इत्यादावपि निषेधापत्तेः । इदन्तु वार्त्तिकं सि-द्धान्तेऽपि स्थितम्—"गोः पूर्वणित्वात्वस्वरेषु प्रतिषेधः" इति ।

'चित्रग्वग्रम्' इत्यत्र हि "सर्वत्र विभाषा गोः" (पा०सू०६-१-१२२) इति पूर्वरूपं प्राप्तम्। "नान्तः पादम्" (पा०सू०६-१-११५) इति पाठस्य "इकों गुणवृद्धी" (पा०सू०१-१-३) इति सूत्रे षाष्ठभाष्ये च स्थितत्वेन तद्रीत्या "सर्वत्र" (पा०सू०६-१-१२२) इति सूत्रस्यापि पूर्वरूपविधायकत्वौचित्यात्। कैयटस्तु शाकलसूत्रे "ह्रस्वश्च" (पा०सू०पा०६-१-१२७) इति चकारेण प्रकृत्येत्यनुकृष्यत इति भाष्यदर्शनात् "प्रकृत्याऽन्तः पादम्" (पा०सू०६-१-११५) इति पाठमनुसृत्य वार्त्तिकस्थं पूर्वपदं तत्प्राप्तिपूर्वकप्रकृतिभावोपलक्षणमिति सूचितवान्। न च "सर्वत्र विभाषा" (पा०सू०६-१-१२२) इत्यत्रेङ इत्यनुवर्त्यालिवधित्वान्निषेधः सुवचः 'हे चित्रगो अग्रम्' इत्यत्रैवमप्यतिप्रसङ्गात्। नह्यत्र स्थान्यल आश्रयणं स्वत एव एङन्तत्वात्। 'चित्रगुः' इत्यत्र "गोतो णित्" (पा०सू०७-१-९०) इति णित्त्वं प्राप्तम्। 'चित्रगुं' 'चित्रगून्' इत्यत्र तु "आगोतोम् शसोः" इति षाष्ठवार्त्तिकरीत्या आत्वं प्राप्तम्। अत्र णित्वाग्रहणं तु शक्यमकर्त्तुम्, गोत इति तपरकरणसामर्थ्यादेव णित्वात्वाप्रवृत्तेः, औतोमिति पाठस्यैव स्थापयिष्यमाणत्वाच्च। 'अचिनवम्' इत्यादावतिप्रसङ्गस्य शसा साहचर्येणापि वारणसम्भवात्। स्वर-बहुगुमान्। इह "ह्रस्वनुड्भ्यां मतुप्" (पा०सू०६-१-१७६) इत्युदात्तताया "नगोश्वन्" (पा०सू०६-१-१८२) इति निषेधः प्राप्तः। तस्माद् गोः पूर्वस्वरयोरिति पठनीयमिति स्थितम्। एवञ्च "नगोश्वन्" (पा०सू०६-१-१८२) इति सूत्रे वृत्तौ यत्पठ्यते 'बहुगुना' 'बहुगुभ्याम्' इत्यादौ "अन्तोदात्तादुत्तरपदादन्यतरस्याम्" (पा०सू०६-१-१६९) इति प्राप्तः प्रतिषिध्यत इति, तच्चिन्त्यम्, भाष्यवार्त्तिकविरुद्धत्वात्॥

अचः परस्मिन्पूर्वविधौ (पा०सू०१-१-५७)॥ परनिमित्तोऽच आदेशः स्थानिवत्स्यात्स्थानिभूतादचः पूर्वत्वेन यो दृष्टस्तस्य तस्माद्वा निमित्तभूताद्विधौ कर्त्तव्ये। वव्रश्च। इह "उरत्" (पा०सू०७-४-६६) इत्यत्वस्य स्थानिवद्भावेन "न संप्रसारणे" (पा०सू०६-१-३७) इति निषेधाद्वकारस्य न सम्प्रसारणम्। न च पूर्वसूत्रेण गतार्थता, अलिवधित्वात्। न च परनिमित्तत्वमसिद्धमिति वाच्यम्, अङ्गाक्षिप्तप्रत्ययनिमित्तकत्वात्। न च प्रागभ्यासविकारेभ्योऽङ्गाधिकार इति वाच्यम्, आसप्तमाध्यायसमाप्तेरिति पक्षस्य सिद्धान्तयिष्यमाणत्वात्। पूर्वस्माद्विधौ यथा-तन्वन्ति, तन्वते। इह यणादेशस्य स्थानिवद्भावान्नेट्। तत्र हि तन् इत्यङ्गं निमित्तम्, तच्चोकारात्पूर्वमिति। अच इति किम्? विश्नः, प्रश्नः। द्यूत्वा, स्यूत्वा। अभिगत्य। तथाहि, 'विश्नः' 'प्रश्नः',

इत्यत्र छकारस्य शकारः परनिमित्तकः, तस्य स्थानिवद्भावात् "छे च" (पा०सू०६-१-७३) इति तुक् प्राप्तः अच इति वचनान्न भवति।

स्यादेतत्। इहान्तरङ्गत्वात् पूर्वमेव तुका भाव्यम्। न च "वार्णादाङ्गं बलीयः" (प०भा०५५) इति शकारः स्यादिति वाच्यम्, यत्र ह्येकमेव निमित्तीकृत्य युगपदाङ्गवार्णयोः प्राप्तिस्तत्र वार्णादाङ्गं बलीयः। यथा करोतेर्लिटि णलि कृ अ इति स्थिते गौरित्यत्र सावकाशाम् "अचो ञ्णिति" (पा०सू०७-२-११५) इति वृद्धिं बाधित्वान्तरङ्गत्वात्प्राप्तं यणं वृद्धिरेव बाधते। 'प्रश्नः' इत्यत्र तु शस्य नङ् निमित्तम्। तुकस्तु छः। भिन्नकाला चानयोः प्राप्तिः। ननु यत्रैकस्मिन्विषये युगपच्च प्राप्तिस्तत्रैवेयं परिभाषेत्यत्र किं प्रमाणमिति चेत्? धर्मिग्राहकमानमेवेति गृहाण। तथाहि, "अभ्यासस्यासवर्णे" (पा०सू०६-४-७८) इति सूत्रे ऽसवर्णग्रहणमस्याः परिभाषाया ज्ञापकम्। एतच्च षष्ठे प्रथमान्हिकान्ते भाष्ये स्थितम्। तद्धि 'ईषतुः' 'ऊषतुः' इत्यादिवारणाय नोपयुज्यते, अन्तरङ्गेण सवर्णदीर्घेण तत्रेयङुवङोर्बाधात्। तौ ह्यङ्गसंज्ञामभ्याससंज्ञां चापेक्षमाणौ बहिरङ्गौ। न चैवमप्यपवादत्वात्तावेव स्यातामिति वाच्यम्, येन नाप्राप्तिन्यायेन तयोर्यणं प्रत्येवापवादत्वात्। ननु 'इयेष' इत्यादौ प्रवृत्तस्यापि गुणस्य 'इयाय' इत्यत्र प्रवृत्ताया वृद्धेश्च "द्विर्वचनेऽचि" (पा०सू०१-१-५९) इति रूपातिदेशेनापहारे द्वित्वे च कृते सवर्णदीर्घस्यापि प्राप्त्या सोऽपि येननाप्राप्तिन्यायेनेयङुवङ्भ्यां बाध्येतेति चेत्? तर्हि कृतेऽप्यसवर्णग्रहणे निर्विषयतापत्तिः। असवर्णग्रहणसामर्थ्यात्पुनर्गुणवृद्धी सवर्णदीर्घं बाधित्वा स्यातामिति चेत्? न, 'इयर्ति' इत्यादौ चरितार्थत्वात्। नन्वेवं सत्यसवर्णग्रहणं विनापि येन नाप्राप्तिन्यायेन 'इयर्ति' इति यणो बाधने सिद्धे तन्न कुर्यादिति चेत्? तर्हि सामर्थ्यात् 'इयेष' इत्यादौ गुणादिप्रवृत्तिरिति फलितोऽर्थः। तथाच पुनरप्यसवर्णग्रहणं व्यर्थमेव। "अचश्च" इति सूत्रयित्वा य्वोरिति चानुवर्त्याचेरिकारस्य लाघवादियङि विधेये 'अभ्यासस्य' इत्युक्तिसामर्थ्येनापि 'इयेष' इत्यादिः सुसाधत्वात्। नन्वचेरिति श्तिपा निर्देशे 'अरियर्ति' इति यङ्लुकि इयङ् न स्यादिति चेत्? तर्ह्युरित्येवोच्यताम्। "इणो यण्" (पा०सू०६-४-८१) इति साहचर्याद्वा धातुग्रहणं भविष्यति, अङ्गेन उर्विशेषणाद्वा। तेन अर्तारमतिक्रान्तैरत्युर्भिरित्यादौ नातिप्रसङ्गः। नन्वेवमपि 'इयेष' इत्यत्रेव 'ईषतुः' इत्यत्रापीयङ् स्यादिति चेत्? न, अन्तरङ्गेण दीर्घेण बाध इत्युक्तत्वात्। न चैवम् 'इयेष' इत्यत्रापि तुल्यमिति वाच्यम्, तत्र गुणसम्भावनायां विनाशोन्मुखेन

निमित्तेन दीर्घाप्रवर्त्तनात्। वक्ष्यते हि "समर्थानां प्रथमाद्" (पा०सू० ४-१-८२) इति सूत्रे समर्थग्रहणम् "अकृतव्यूहाः पाणिनीयाः" (प० भा०५६) इति परिभाषां ज्ञापयतीति। अत एव 'सौत्थितिः' 'वैक्षमाणिः' इत्यत्र भाविन्या आदिवृद्ध्या अन्तरङ्गस्यापि सवर्णदीर्घस्य निमित्तविघातादप्रवृत्तिर्मा भूदिति 'सावुत्थितिः' 'वायीक्षमाणिः' इत्यनिष्टरूपं वारयितुं समर्थग्रहणम्। परिनिष्ठितत्वं च तत्र समर्थशब्दस्यार्थः। कृतमपि निवर्त्तयन्तीति वा ज्ञाप्यताम्। फलं तु तुल्यमेव। गौरवं परमधिकमिति दिक्। ततश्चेयेषेत्यादौ गुणे कृते सवर्णदीर्घप्राप्तौ यणि प्राप्ते तस्यैवेयङपवादः। ईषतुरित्यादावन्तरङ्गत्वात्सवर्णदीर्घेण बाध्यत इत्यसवर्णग्रहणमनर्थकं सज्ज्ञापकमेवोक्तपरिभाषायाः। ननु गुणेन कथं निमित्तविघातः "अचः परस्मिन्" (पा०सू०१-१-५७) इति स्थानिवत्त्वेन सवर्णदीर्घप्राप्तेस्तदवस्थत्वादिति चेत्? न, दीर्घस्य पूर्वपरविधित्वेन तस्मिन्कर्त्तव्ये स्थानिवत्त्वाभावात्। पूर्वस्यैव विधौ हि सः, न तु पूर्वपरयोरिति विधिग्रहणव्यावर्त्यनिरूपणावसरे उपपादयिष्यमाणत्वात्, सवर्णे यो विधिः सोऽपि सवर्णस्य विधिरिति तत्र कर्त्तव्ये "न पदान्त" (पा०सू०१-१-५८) इति निषेधाच्च। एतेनासवर्णग्रहणे कृते स्थानिवद्भावेन 'इयेष' इत्यत्रेयङ् न स्यात्। न चासवर्णग्रहणसामर्थ्याच्छ्रौतासवर्णमाश्रित्येयङ् प्रवर्त्तताम् 'घ्नन्ति' इति घत्ववदिति वाच्यम्, तथा सति परिभाषाज्ञापनासम्भवात्। 'इयर्ति' इत्येकप्रयोजनाय हि 'उश्च' इति वक्तव्ये ऽभ्यासस्येति वचनसामर्थ्याद्भवन्तावियङुवङौ णलीवातुसि दीर्घमप्यविशेषाद्बाधेयातामिति तद्व्यावृत्त्यैवासवर्णग्रहणस्य चरितार्थत्वादिति प्रत्युक्तम्, सवर्णे परे न भवतीति प्रसज्यप्रतिषेधाश्रयणात्। तत्र चोक्तरीत्या स्थानिवद्भावे प्रतिषिद्धे 'इयेष' इत्यादौ यण एव प्राप्त्या तदपवादत्वेन निर्णीतयोरियङुवङोरन्तरङ्गेण दीर्घेण 'ईषतुः' इत्यादौ बाधसम्भवात्। सा च ज्ञाप्यमाना समानाश्रये युगपत्प्राप्तौ चेत्येवंरूपविशेषविषयैव लक्ष्यानुरोधेनेति प्राचां भावः। अत एव 'स्योनः' इति सिवेरौणादिके नप्रत्यये वलोपापवादे ऊठि च कृते सि ऊ न इति स्थितेऽन्तरङ्गत्वाद्यण्, न त्वाङ्गोऽप्युपधागुणः, व्याश्रयत्वात्। न चोठं बाधित्वा परत्वाद् गुणः शङ्क्यः, लघुभूतामिग्लक्षणामुपधामङ्गं चापेक्षमाणस्य गुणस्य बह्वपेक्षत्वेन बहिरङ्गत्वात्। एतच्च "येन विधिः" (पा०सू०१-१-७२) इति सूत्रे कैयटे स्पष्टम्। वृत्तिकारोऽप्येवम्।

प्रकृतमनुसरामः। उक्तरीत्या तुकि कृते शादेशः। तथा च विश्व-

प्रश्नयोस्तुक् श्रूयेतैवेति तन्निवृत्तौ यत्नान्तरमास्थेयम्, अच इत्यस्य प्रत्युदाहरणान्तरञ्चेति चेत् ? सत्यम्, अस्त्येव यत्नान्तरम्, "च्छ्वोः-(पा०सू०६-४-१९) इति सतुक्कनिर्देशस्य भाष्यादौ स्थितत्वात् ।

स्यादेतत् । "अकृतव्यूहाः पाणिनीयाः" (प०भा०६-४-१९) "कृतं वा निवर्तयन्ति" इति परिभाषाभ्यां विश्नप्रश्नयोः सिद्धौ किं सतुक्कनिर्देशेन ? न चोक्तपरिभाषयोरनित्यत्वज्ञापनं तत्फलम् । तेन 'चाखायिता' इति सिद्धम् । अन्यथा "यस्य हलः" (पा०सू०६-४-४९) इति भाविनं लोपमालोक्य प्रागवात्वं न क्रियेत, कृतं वा निवर्त्येत, 'त्वकत्पितृकः' 'अतिभवकान्' इत्यादौ चाकच् न श्रूयेतेति वाच्यम् "अदो जग्धिः" (पा०सू०२-४-३६) इति सूत्रे ल्यब्ग्रहणस्य "प्रत्ययोत्तरपदयोः" (पा०सू०७-२-९८) इति सूत्रे उत्तरपदग्रहणस्य च क्रमेण ल्यब्लुकोरन्तरङ्गबाधकताज्ञापनार्थतया सिद्धान्तग्रन्थेषु प्रसिद्धस्यैवोक्तपरिभाषाद्वयानित्यत्वज्ञापकत्वसम्भवात् । अथ निर्युक्तिकः सिद्धान्तप्रवादो न श्रद्धेयः ल्यबुत्तरपदग्रहणयोरप्राप्तविध्यर्थत्वादकृतव्यूहपरिभाषावशादप्राप्तेः स्पष्टत्वादिति चेत्तर्हि मा भूतां ल्यबुत्तरपदग्रहावपि, अकृतव्यूहपरिभाषाया अनित्यत्वे प्रकृतिप्रत्यापत्तिवचनस्यैव ज्ञापकत्वसम्भवात् । मास्तु वा तदपि, "केऽणः" (पा०सू०७-४-१३) "सोऽचि लोप" (पा०सू०६-१-१३४) इत्यादिनिर्देशानामेव ज्ञापकत्वात् । तथाहि, क इ स उ इतीवुतोः पदान्तरप्रयुक्ते यणादेशे कृते आद्गुणस्य निमित्तविघाताद् "अकृतव्यूहाः" (प०भा०५६) इति न्यायेन गुणो न स्यात् । न च "असिद्धस्वहिरङ्गम्" (प०भा०५०) "अन्तरङ्गं बलीयः" इति परिभाषाभ्यां निस्तारः' वृक्ष इ इदमित्यादौ कृतेऽपि दीर्घे निमित्तविघातेन तत्र 'पचावेदम्' इत्यादौ च सावकाशयोर्द्वयोरपि परिभाषयोर्थेन नाप्राप्तिन्यायेनाकृतव्यूहपरिभाषाबाध्यत्वात् । अन्यथा 'उपेयुषा' 'जग्मुषः' इत्याद्यपि न सिध्येत् । एवं 'विश्नः' इत्यत्र गुणं निषेद्धुं क्रियमाणं नङो ङित्वमेवाकृतव्यूहपरिभाषां ज्ञापयेत् । समर्थानामिति च मास्तु । अत एव "समर्थः पदविधिः" (पा०सू०२-१-१) इति सूत्रे "अकर्तव्यं च क्रियते समर्थानां प्रथमाद्" इति भाष्यं सङ्गच्छते । तस्माद्, प्रत्यापत्तिसमर्थत्वल्यबुत्तरपदग्रहाः सतुक्त्वं च पञ्चापि न कार्याणीत्यवस्थितम् ।

अत्रोच्यते, "वार्णादाङ्गम्बलीयः" (प०भा०५५) इति परिभाषाया अनित्यत्वं ज्ञापयितुं सतुक्ग्रहः । तथाहि, 'समानाश्रय' इति प्रा-

चां ग्रन्थाननुसृत्य प्रागुक्तं, न तु क्षोदक्षमम्, व्याश्रयेष्वपि बहुधा तत्स्वीकारात्। तथाच कैयटेनासिद्धवत्सूत्रे 'शुनः' इत्यत्र वार्णादाङ्गस्य बलीयस्त्वात्पूर्वैकादेशं बाधित्वाऽल्लोप उक्तः। न च तत्रोभयोरकारांशे समानाश्रयत्वमस्त्येवेति वाच्यम्, 'विश्नः' 'स्योनः' इत्यत्रापि छकारेकारांशसाम्येन व्याश्रयत्वोपन्यासविरोधात्। किञ्चाङ्गस्य "आच्छीनद्योः" (पा०सू०७-१-८०) "शीङो रुट्" (पा०सू०७-१-६) "अचः परस्मिन्" (पा०सू०१-१-५७) "येन विधिः" (पा०सू०१-१-७२) "उपेयिवाननाश्वान्" (पा०सू०३-२-१०९) "आडजादीनाम्" (पा०सू० ६-४-७२) 'अजादेर्द्वितीयस्य" (पा०सू०६-१-२) "अदस औ सुलोपश्च" (पा०सू०७-२-१०७) "सार्वधातुकमपित्" (पा०सू०१-२-४) "उपसर्गाद्ध्रस्वऊहतेः" (पा०सू०७-४-२३) "स्नुक्रमोरनात्मनेपदे" (पा०सू०७-२-३६) इत्यादिसूत्रेषु कैयटहरदत्तादिसकलग्रन्थाः समानाश्रयतां क्वचिदादृत्य क्वचिदनादृत्य प्रवृत्ताविति स्पष्टमेव सिद्धान्तपरिशीलिनाम्। षाष्ठभाष्ये प्रथमाह्निकान्ते "वार्णादाङ्गम्" (प०भा०५५) इति परिभाषायाः प्रयोजनान्यपि व्याश्रयसाधारणान्येव। "न माङ्योगे" (पा०सू०६-४-७४) इतिसूत्रस्थकैयटग्रन्थे ऽप्येवमेव। "आतोनुपसर्गे कः" (पा०सू० ३-२-३) इति सूत्रे भाष्येऽप्येवमेव। तस्माद्बहिरङ्गपरिभाषाऽकृतव्यूहपरिभाषयोरिव "वार्णादाङ्गम्" (प०भा०५५) इत्यस्या अप्यनित्यत्वमेव शरणम्। तच्च सतुक्ग्रहणेन ज्ञाप्यते। न च परस्मिन्पूर्वविधावपि स्थानिवद्भावेन तुकं वारयितुं सः, अन्यार्थतयाऽवश्यकर्त्तव्येन।च इत्यनेन गतार्थत्वात्। एवञ्चान्यार्थं क्रियमाणं सतुक्ग्रहणम् "अकृतव्यूह" (प०भा०५६) इत्यस्याप्यनित्यतां कामं ज्ञापयतु। प्रकृतसूत्रे 'विश्नः' इति प्रत्युदाहरणन्तु यथाश्रुतरीत्या। एवं स्थिते ङडो ङित्वस्य गुणनिषेधे चरितार्थत्वादकृतव्यूहपरिभाषायां ज्ञापकान्तरमास्थेयम्। तच्च प्रत्ययवचनमुत्तरपदग्रहणं समर्थग्रहणं वा। तेभ्यो लघुत्वात् ल्यब्ग्रहणमेवेति तु निष्कर्षः। आचारक्विबन्तार्थं प्रत्ययग्रहणं तवममादिबाधनार्थमप्राप्तविध्यर्थञ्चोत्तरपदग्रहणमिति हि स्थास्यति। मपर्यन्तानुवृत्तिरेव ज्ञापिकेति हरदत्तोत्प्रेक्षा त्वन्तरङ्गस्यापवादबाध्यत्वादयुक्तेति सप्तमे वक्ष्यते। एवञ्च (१)पामाद्यन्तर्गणसूत्रे "विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः" (का०वा०) इत्यत्राकृतसन्धिग्रहणमप्यनावश्यकम्। वीक्षमाणादिभ्यः कृतसन्धिभ्य एव तद्धिता इति स्पष्टीकरणार्थं

(१) "लोमादिपामादिपिच्छादिभ्यः शनेलचः" (पा०सू०५-२-१००) इति सूत्रस्थेत्यादिः।

वाऽस्तु। एवं "स्त्रियाः पुंवद्" (पा०सू०६-३-३४) इति सूत्रे नत्वेषा परिभाषा सर्वत्राश्रीयते इति कैयटः समीचीन एव। आभात्सूत्रस्थ-कैयटस्तु "निमित्तापाये" इति परिभाषा भाष्यासम्मतेत्येवंरूप आपाततः। छ्वोः शूठ्सूत्रे न हीदं वचनं नापि न्याय इत्येवंरूपो हरदत्तग्रन्थोऽप्यापातत एव "समर्थानाम्" (पा०सू०४-१-८२) इति सूत्रे परिभाषापरिष्कारस्य स्वयमेव कृतत्वात्। अथवोक्तपरिभाषयोर्मध्येऽकृतव्यूहपरिभाषैव लाघवादादर्त्तव्या न तु कृतमपीति गौरवादित्येवम्परतया कथञ्चिद्ग्रन्थो नेयः। फलन्तु निर्विवादम्, ज्ञापकान्तराणामपि सुलभत्वात्। तद्यथा—"चौ" (पा०सू०६-२-१३८) इति सूत्रं दीर्घं विदधदिह ज्ञापकम्। अन्तरङ्गे हि यणि कृते 'प्रतीचः' इत्यादौ कथं दीर्घस्य विषयलाभः? लौकिकन्यायोऽपीह सुवचः। लोके हि निमित्तमुभयविधमपि दृष्टम्। कार्यस्य स्थितौ नियामकं तदनियामकं च। आद्यं यथा–न्यायनये ऽपेक्षाबुद्धिः, तन्नाशेन द्वित्वनाशाभ्युपगमात्। तथा वेदान्तनये प्रारब्धस्य विक्षेपस्थितिनियामकत्वमुपाधेः स्फटिकलौहित्यादिस्थितिनियामकत्वं च प्रसिद्धमेव। द्वितीयं तु–दण्डादि। तन्नाशेऽपि घटनाशादर्शनात्। एवं स्थिते लक्ष्यानुरोधेनेहापि द्वैविध्यं कथं न भवेत्? तथाच यस्य च लक्षणान्तरेण निमित्तं विहन्यते नासावनित्य इत्यस्य क्वचिदाश्रयणं क्वचिन्नेत्येवंरूपे सिद्धान्ते लौकिकद्विविधव्यवहार उपष्टम्भकत्वेनोदाहृतः कैयटादिभिः। वालिसुग्रीवयोर्युध्यमानयोर्भगवता वालिनि हतेऽपि न सुग्रीवस्य वालितः प्राबल्यं व्यवहरन्ति। भगवत्सहायैः पाण्डवैर्जये लब्धेऽपि पाण्डवानां प्राबल्यं व्यवहरन्ति चेति दिक्।

स्यादेतत्। यदि "छ्वोः" (पा०सू०६-४-१९) इति सतुक्निर्देशस्तर्हि राल्लोपे तस्यैवानुवृत्तिः स्यात्। तथाच 'हूः, हुरौ, हुरः' इत्यत्र लोपो न स्यात्, वितुक्त्वात्। न चानुवृत्तिसामर्थ्यात्तुकं विनैव तत्र गृह्यताम् "राधोर्हिंसायाम्" (पा०सू०६-४-१२३) इत्यत्रात इत्यनुवृत्तेर्व्यवर्ण इवेति वाच्यम्, वकारमात्रान्वयस्यापि सुवचत्वात्। यत्तु सतुकावतुकौ द्वावपीह निर्दिश्येते इति। तन्न, समाहारद्वन्द्वे एकवचनापत्तेः। इतरेतरयोगे बहुवचनापत्तेः। छकारयोःसमाहारं समासं कृत्वा वकारेणेतरेतरयोगद्वन्द्वं करिष्याम इति चेत्? न, समाहारे टच्प्रसङ्गात्, यथासंख्यासम्भवापत्तेश्च।

अत्रोच्यते—छकारवकारयोः समाहारद्वन्द्वे कृते छकारान्तरस्य द्वन्द्वान्तरमस्तु। आदेशेऽपि शब्दप्रश्लेषः। तथाचान्तरतम्याद्यथासं-

च्यन्यायाच्चेष्टं सिद्धम्। अस्तु वा सतुक्कस्यैव निर्देशः। रालोपे तु सामर्थ्यात्केवलस्यान्वयः "नध्याख्या" (पा०सू०८-२-५७) इति नत्वनिषेधाल्लिङ्गाच्च। 'मूर्च्छः' इत्यत्र हि छलोपं विना नत्वप्राप्तिरेव न सम्भवति। एवं "मूर्त्तौ घनः" (पा०सू०३-३-७७) "द्रवमूर्त्तिस्पर्शयोः श्यः" (पा०सू०६-१-२४) इत्यादिनिर्देशा अपि सङ्गच्छन्ते इति दिक्। अस्मिन्पक्षे अच इत्यस्य प्रत्युदाहरणन्तु 'द्यूत्वा' 'स्यूत्वा' इति। अत्र ऊठः स्थानिवत्त्वाद्यण् न स्यात्। ननु स्वाश्रयमच्त्वं भविष्यति। अतिदेशानां स्वाश्रयकार्यानिवर्त्तकत्वादिति चेत्? न, विधिग्रहणप्रयोजनकथनावसरे इह सूत्रे स्वाश्रयनिवृत्तेः सिद्धान्तयिष्यमाणत्वात्। नन्वेवमपि योऽत्र यण्विधावाश्रीयते अच् नासावादेशः, यश्चादेश ऊडिति समुदायः, नासौ यण्विधौ निमित्तमिति चेत्? न, अनुबन्धानामनेकान्ततया एकान्तत्वेऽप्युच्चरितप्रध्वंसितयोकारस्यैवादेशत्वात्, वतिनिर्देशादभावोऽप्यतिदिश्यते इति वक्ष्यमाणत्वाच्च। एवम् 'अभिगत्य' इत्यपि प्रत्युदाहरणम्। अत्र ह्यनुनासिकलोपः परनिमित्तकस्तस्य स्थानिवद्भावाद् "ह्रस्वस्य पिति कृति" (पा०सू०६-२-७१) इति तुङ् न प्राप्नोति। अथ परस्मिन्निति किमर्थम्? युवजानिः। अत्र जायाया निङः स्थानिवद्भावाद्यलोपो न प्राप्नोति। स्वाश्रयनिवृत्तिरभावातिदेशश्च वक्ष्यते इति ह्युक्तमेव। किञ्च व्याघ्रस्येव पादावस्य व्याघ्रपाद् "पादस्य लोपोऽहस्त्यादिभ्यः" (पा०सू०५-४-१३८) इत्यपरनिमित्तको लोपस्ततो गर्गादित्वाद्यञ्। वैयाघ्रपद्यः। लोपस्य स्थानिवद्भावात् "पादः पत्" (पा०सू०६-४-१३०) इति पद्भावो न स्यात्। वचनसामर्थ्याद्भविष्यतीति चेत्? 'पादेन' इत्यादावतिप्रसङ्गः। किञ्च "पादशतस्य" (पा०सू०५-४-१) इति लोपवचनसामर्थ्यात्स्थानिवद्भावाप्रवृत्तौ सत्यां 'द्विपदिका' इत्यादौ पद्भाववचनं चरितार्थमिति क्व तस्य सामर्थ्यम्? परस्मिन्निति कृते तु 'वैयाघ्रपद्यः' इत्यादौ पद्भावस्य चरितार्थतया 'पादेन' इत्यादावेकादेशस्य स्थानिवद्भावात् "पादः पत्" इति पद्भावो नेति स्थितम्। नन्वेकादेशो नाचः किन्त्वचोः। तत्कथं स्थानिवत्त्वमिति चेत्? न, वर्णनिर्देशे जातिग्रहणात्। अत एव 'श्रायसौ' 'गौमतौ' 'चातुरौ' 'आनडुहौ' इत्यादि सिध्यति। श्रेयसोऽपत्यमित्यण्। "देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसाम्" (पा०सू०७-३-१) इत्याकारादेशः। ततश्चतुर्भ्योऽप्यणन्तेभ्य औप्रत्यये एकादेशस्यादिवत्वात्प्राप्तौ नुमामौ न भवतः। तथा-उदवाहे। उदकं वहतीति कर्मण्यण्। संज्ञायामुदभावः। ततो ङावेकादेशस्यादिवत्वाद्भत्वे सति प्राप्तो वाह ऊठ्

भवति। पूर्वविधाविति किम्? नैधेयः। निपूर्वाद्धाञ "उपसर्गे घोः किः" (पा०सू०३-३-९२) आतो लोपः। "द्व्यचः" (पा०सू०४-१-१२१) "इतश्चानिञः" (पा०सू०४-१-१२२) इति ढक्। आकारलोपस्य स्थानिवत्त्वे तु सति त्र्यच्कत्वव्यपदेशेन द्व्यच्कत्वं विरुद्धत्वाद्बाध्येत। नहि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते। नन्वेवमपि विधिग्रहणं मास्तु पूर्वस्येति षष्ठ्या कार्यं कर्त्तव्ये इत्यर्थस्याक्षेप्तुं शक्यत्वादिति चेत्? न, पूर्वस्य विधिः पूर्वस्माद्विधिरिति समासद्वयलाभार्थं विधिग्रहणम्। पञ्चमीसमासे उदाहरणं तु 'तन्वन्ति' इत्युक्तमेव।

स्यादेतत्, यदि पञ्चमीसमासोऽपीष्टस्तर्हि 'विगणय्य' इत्यादि न सिध्यति "ल्यपि लघुपूर्वात्" (पा०सू०६-४-५६) इत्ययादेशे कर्त्तव्येऽल्लोपस्य स्थानिवद्भावात्। न चारम्भसामर्थ्यम् 'अनुगमय्य' इत्यादौ मित्सु चरितार्थत्वात्। अत्रोच्यते। पूर्वस्माद्विधौ स्थानिवत्त्वमनित्यम् "निष्ठायां सेटि" (पा०सू०६-४-५२) इति ज्ञापकात्। तथाहि। तत्र सेटीति पदं न तावदनिड्व्यावृत्त्यर्थं णिजन्तात्तदसम्भवात्। ननु 'संज्ञपितः पशुः' इत्यत्र "यस्य विभाषा" (पा०सू०७-२-१५) इतीण्निषेधः सम्भवत्येव। "सनीवन्त" (पा०सू०७-२-४९) इति विकल्पितेट्कत्वादिति चेत्? "यस्य विभाषा" (पा०सू०७-२-१५) इत्यत्रैकाच इत्यनुवृत्तेः। अन्यथा 'दरिद्रितः' इतीण्न स्यात्। तस्मात्कालावधारणार्थं सेट्ग्रहणम्। इटि कृते णिलोपो न तु ततः प्रागिति। अन्यथा 'कारितम्' इत्यादौ णिलोपे कृते "एकाच उपदेशे" (पा० सू० ७-२-१०) इतीण्निषेधः स्यादिति सेटीति वदतो भावः। पूर्वस्माद्विधौ स्थानिवत्त्वे तु न प्राप्त एव निषेधः, णिचा व्यवधानात्। तस्मात्सेट्ग्रहणमनित्यतां ज्ञापयतीति स्थितम्। तथा चाष्टमे "अन्तः" (पा० सू० ८-४-२०) इति सूत्रे हरदत्तः—"अनित्यः पूर्वस्माद्विधौ स्थानिवद्भावः "निष्ठायां सेटि" (पा० सू० ६-४-५२) इति सेट्ग्रहणात्। एतच्च स्थानिवद्भावप्रकरणे एव व्याख्यातम्" इति। यद्यपीह प्रकरणे स्वयं न व्याख्यातं तथापि न्यासकारादिभिर्व्याख्यातमिति तद्ग्रन्थस्यार्थः। लेखकप्रमादाद्ग्रन्थभ्रंशो वा कल्प्यः। एतेन "ओः पुयण्" (पा० सू० ७-४-८०) इति सूत्रे यदत्र वक्तव्यं तद् "द्विर्वचनेऽचि" (पा० सू० १-१-५९) इत्यत्रैवोक्तमित्यपि हरदत्तग्रन्थो व्याख्यातः। तथाच वस्वेकाच्सूत्रे कैयटः—पूर्वस्मादपि विधावित्येतदनित्यमिति। माधवाचार्यास्तु 'परिव्रढय्य गतः' इत्यत्रासिद्धतामुद्भाव्य व्याश्रयत्वात्तां परिहृत्य पूर्वस्मादपीति स्थानिवत्त्वमाशङ्क्य 'प्रबेभिदय्य' 'प्रस्तनय्य' इत्यादिभाष्योदाहरणबलेन समादधुः। यद्वा

"ल्यपि लघुपूर्वात्" (पा०सू०६-४-५६) इत्यनेन सामर्थ्यादन्यपदार्थस्य वर्णस्यापेक्षायां वर्णग्रहणे जातिग्रहणाद्यवधानेऽपि न दोष इति। केचित्तु पञ्चमीसमास इह मास्तु, प्रयोजनाभावात्। तथाहि, 'बेभिदिता' 'माथितिकः' 'अपीपचन्' इति प्रयोजनत्रयं भाष्ये उक्तम्। तत्र 'बेभिदिता' इति तावदन्यथासिद्धम् "एकाच उपदेशे" (पा० सू०७-२-१०) इत्यत्र विहितविशेषणाश्रयणात्। माथितिकेति मथितं पण्यमस्येति विग्रहे "तदस्यपण्यम्" (पा०सू०४-४-५१) इति ठकि तस्येकादेशे "यस्येति च" (पा०सू०६-४-१४८) इत्यल्लोपे कृते "इसुसुक्तान्तात्" (पा०सू० ७-३-५१) इति कादेशो न भविष्यति "अनल्विधौ" (पा०सू०१-१ ५६) इतिनिषेधेन स्थानिवद्भावासम्भवात्। "ठस्येकः" (पा०सू०७-३-५०) इत्यत्र स्थान्यादेशयोरकारस्य उच्चारणार्थतया वर्णमात्रस्य स्थानित्वात्। अस्तु वा स्थान्यादेशयोरकारस्य विवक्षा। न चैवमनल्विधित्वात्कादेशप्रसङ्गः सन्निपातपरिभाषया समाधानात्। न चापीपचन्नित्युदाहरणम्। इह हि अन्तेरकारस्य चङकारस्य च "अतो गुणे" (पा० सू० ६-१-९७) इति पररूपत्वे तस्य परं प्रत्यादिवद्भावाज्झिग्रहणेन ग्रहणे सति "सिजभ्यस्त" (पा०सू० ३-४-१०९) इति जुस् प्राप्तो णिलोपस्यैकादेशस्य वा स्थानिवद्भावान्न भवतीति वाच्यम्, वेत्तेर्हि लङ्येवानन्तरो झिः सम्भवतीति तत्साहचर्यादभ्यस्तादपि लङ एव झेर्जुस्विधानात्। न च सिचा साहचर्याल्लुङोऽपि ग्रहणमस्त्विति वाच्यम् "विप्रतिषेधे परम्" (पा० सू० १-४-२) इति परसाहचर्यस्य बलीयस्त्वादिति। अत एव भवतेर्यङ्लुङन्ताल्लुङि 'अबोभूवन्' इति माधवः। पञ्चमीसमासप्रयोजनतया 'अपीपचन्' इत्युदाहरतो भगवतस्तु नेह साहचर्यं नियामकतया सम्मतम्। कृत्वोऽर्थग्रहणाद्धि ज्ञापकात्साहचर्यं न सर्वत्राश्रीयते इत्युक्तं "दीधीवेवीटाम्" (पा०सू०१-१-६) इति सूत्रे। तस्माद्यङ्लुकि भुवो लुङि जुसेवोचितः "आतः" (पा०सू०३-४-११०) इति नियमस्य सिचः परत्वमाश्रित्य यो जुस्प्राप्तस्तन्मात्रपरतया माधवेनैवोक्तत्वात्। अभ्यस्ताश्रयस्य जुसो दुर्वारत्वात्। यदि तु लाघवाद् "आतः" (पा०सू०३-४-११०) इति नियमः सामान्यापेक्षस्तदा जुसभावे "अदभ्यस्तात्" (पा० सू० ७-१-४) इत्यत्, तथा च 'अबोभूवुः' 'अबोभूवत्' इति पक्षभेदेन रूपद्वयं लभ्यते, नित्यत्वेन वुको गुणबाधकत्वात्। माधवोदाहृतम् 'अबोभूवन्' इति तु चिन्त्यमेव, अन्त्यादेशस्य दुर्लभत्वात्। 'अपीपचन्' इत्येतत्सिद्धये च पञ्चमीसमास आश्रयणीयः। 'विगणय्य' इत्यादावतिप्रस-

ङ्गस्य तु पूर्वोक्ता एवोद्धाराः स्मर्त्तव्या इति युक्तः पन्थाः। ननु पञ्चमीसमासो नास्त्येवेति वदतो मते 'तन्वन्ति' इत्यत्रेट् स्यादिति कुतो नोद्भावितमिति चेत्? न, बहिरङ्गस्य यणोऽसिद्धत्वात्। न च "नाजानन्तर्ये" (प०भा०५१) इति निषेधः, अनन्तरे कार्यविधौ यत्राच आनन्तर्यमिति कैयटेनाभ्युपगमात्। कथं तर्हि 'तन्वन्ति' इति पञ्चमीसमासोदाहरणं प्राग्दत्तमिति चेत्? हरदत्तमतेनेत्यवेहि। स हि यत्रान्तरङ्गे बहिरङ्गे वा अचोरानन्तर्यमिति व्याख्यत्। नन्वेवं न पदान्तसूत्रे 'दध्यत्र' इति वृत्तिमुपादाय स्थानिवद्भावप्रतिषेधसामर्थ्याद्बहिरङ्गपरिभाषा न प्रवर्त्तत इति मिश्रोक्तिर्विरुध्येत, बहिरङ्गे यणि अचोराश्रयणेन "नाजानन्तर्ये" (प०भा०५१) इति निषेधादेव परिभाषाया अप्रवृत्तेः। किञ्च "संयोगान्तस्य लोपः" (पा०सू०८-२-२३) इति सूत्रे "असिद्धं बहिरङ्गम्" (प०भा०५०) इति परिभाषामाश्रित्य क्रियमाणं "यणः प्रतिषेधः" (का०वा० ) इति वार्त्तिकस्य प्रत्याख्यानमपि विरुध्येत। अपि च "लण्" (मा०सू०६) इति सूत्रे "उरण्रपरः" (पा०सू०१-१-५१) इति परेण चेत् 'कर्त्रर्थम्' इत्यत्र रेफद्वयं श्रूयेतेत्युक्तम्, तदपि विरुध्येत "रो रि" (पा०सू०८-३-१४) इति लोपसम्भवात्, असिद्धपरिभाषायाश्चोक्तरीत्या निषेधात्। किञ्च "न धातुलोप" (पा०सू०१-१-४) इति सूत्रे 'प्रेद्धम्' इत्यत्रत्यभाष्येण "संयोगान्तस्य" (पा०सू०८-२-२३)इत्यत्र "यणः" (का०वा० ) इत्यस्य प्रत्याख्यानभाष्येणापि विरोधः। किञ्च "एत ऐ" (पा०सू०३-४-९३) इत्यत्र 'पचावेदम्' इत्यादौ अतिप्रसङ्गमाशङ्क्य बहिरङ्गतया स्वीकृतं समाधानमपि भज्येतेति दिक्। तस्माद्धरदत्तकृता व्याख्या पूर्वापरस्वग्रन्थेन भाष्येण च विरुद्धेति चेत्? सत्यम्, अत एवेमां व्याख्यां नधातुलोपसूत्र एवानुपादेयामवोचाम। "केऽणः" (पा०सू०७-४-१३) इत्यादिज्ञापकात् "नाजानन्तर्ये" (प०भा० ५१) इत्यस्यानित्यतामाश्रित्य वा कथञ्चित्समर्थनीयम्।

स्यादेतत्। कैयटमतेऽप्यचोरिति द्वित्वं विवक्षितं न वा? आद्ये मूलभूतज्ञापकविरोधः। नहि 'कोसिचत्' 'कोस्य' इत्यादावनन्तरे षत्वविधावचोराश्रयणम्। द्वितीये तु मूलभूतं ज्ञापकं सम्भवेत् यदीण्ग्रहणं पूर्वेण स्यात्, तत्तु परेणैवेति स्थितम्। अथ परेणेण्ग्रहणे हलोऽपि केचिदन्तर्भवन्तु नाम, अजानन्तर्यन्तु न गतमित्याशयः, तर्हीस्तु कथञ्चिज्ज्ञापकनिर्वाहः। 'अयजे इन्द्रम्' 'वृक्षे इन्द्रम्' इत्यादौ परत्वात्सवर्णदीर्घस्तु दुर्वार एव। न ह्यत्र "असिद्धं बहिरङ्गम्" (प०भा०५०) इति प्राप्नोति "नाजानन्तर्ये" (प०भा०५१) इति निषेधात्। नन्वन्तरङ्गं बलव-

दिति परिभाषान्तरेणेदं सिद्ध्यति। तथाच विप्रतिषेधसूत्रे 'अन्तरङ्गं च' इत्युपक्रम्य इण्ङिशीनामादूगुणः सवर्णदीर्घत्वादिति प्रयोजनं पठितमिति चेत्? सत्यं पठितम्, किन्तु बहुतमप्रयोजनानि पठित्वा असिद्धपरिभाषयैव गतार्थत्वान्नेयं कर्त्तव्येत्युपसंहृतम्। एतेन प्रकृतसूत्रे 'पट्व्या' 'मृद्व्या' इत्युदाहरणदूषणप्रस्तावे ऽसिद्धपरिभाषां भाष्यकारैरुदाहृतामन्तरङ्गम्बलीय इत्येतदुपलक्षणतया व्याचक्षाणोऽपि कैयटः प्रत्युक्तः, विप्रतिषेधसूत्रस्थभाष्यविरोधात्। तस्मादिह सिद्धान्ततत्त्वमन्यदेव वक्तव्यमिति। उच्यते, अन्तरङ्गपरिभाषाया निरपवादत्वादसिद्धपरिभाषायास्तु "नाजानन्तर्ये" (प०भा०५१) इति सापवादत्वादुभयोरावश्यकता। विप्रतिषेधसूत्रस्थं भाष्यं त्वभ्युच्चयपरमेवेति भागवृत्तिकाराः। कैयटलघुविवरणादयोऽप्येवम्। बृहद्विवरणकारास्तु— "नाजानन्तर्ये" (प०भा०५१) इति परिभाषा मास्तु। तज्ज्ञापकतया यत्सम्मतं तेनासिद्धपरिभाषाया अनित्यत्वमेव ज्ञाप्यते इत्याहुः। अस्मिंश्च पक्षे विप्रतिषेधसूत्रस्थं "नाजान्तर्ये" इति भाष्यमप्यनित्यत्वपरतया भङ्क्त्वा नेयम्। अन्यथा हि तत्रैव "अन्तरङ्गं बलीयः" इत्यस्य प्रत्याख्यानं विरुध्येत। अत एव वृत्तौ "नलोपः सुप्स्वर" (पा०सू० ८-२-२) इत्यत्र नलोपस्यासिद्धत्वात् "ह्रस्वस्य" (पा०सू०६-१-७१) इति तुक् नेत्युपक्रम्य सन्निपातबहिरङ्गपरिभाषाभ्यां गतार्थतामाशङ्क्य परिभाषाद्वयस्याप्यनित्यतां ज्ञापयितुं तुग्ग्रहणमित्युक्तम्। अत एव तत्र मिश्रैरप्युक्तम्--बहिरङ्गपरिभाषाया अनित्यत्वात् 'या' 'सा' इत्यत्र बहिरङ्गमपि त्यदाद्यत्वमन्तरङ्गे टापि नासिद्धमिति। तथा 'प्रतिदीव्नः' इत्यादिसिद्धयेऽप्यसिद्धपरिभाषाया अनित्यत्वं स्वीकृतम्। अत एव च 'अक्षद्यूः' इत्यत्र यलोपे कार्ये ऊठ् नासिद्ध इति दिक्।

एतदपवादश्च "अकृतव्यूहाः" (प० भा० ५६) इत्यादिः। उत्सर्गापवादयोर्द्वयोरप्यनित्यत्वे स्थिते लक्ष्यानुरोध एव व्यवस्थाहेतुरिति सर्वं सुस्थम्।

स्यादेतत्। पूर्वस्येति सम्बन्धसामान्ये षष्ठी। सम्बन्धश्च द्विविधः—कार्यित्वेन निमित्तत्वेन वा। एवञ्च विधिग्रहणं विनैव समासद्वयस्य फलं लब्धम्। विधिग्रहणे सत्यपि हि पूर्वस्मान्निमित्तत्वेनाश्रितादिति व्याख्येयमेव, अन्यथा 'हे गौः' इत्यत्र गकारात्परस्य विधौ वृद्धेः स्थानिवद्भावाद् "एङ्ह्रस्वात्" (पा०सू०६-१-६९) इति सम्बुद्धिलोपः स्यात्।

सत्यम्। विधिग्रहणं योगविभागार्थम्। तेन 'पूर्वस्य विधौ स्था-

निवदेव' इति नियमात्स्वाश्रयं व्यावर्त्यते । यद्वा, माऽस्तु योगविभागः । विधिग्रहणसामर्थ्याद्विधिमात्रे स्थानिवद्भावो भविष्यति शास्त्रीयेऽशास्त्रीये च । तेन 'पटयति' इत्यादौ वृद्ध्यभावोऽशास्त्रीयोऽपि सिध्यति । नन्वेवमपि पूर्वसूत्रादेव विधिग्रहणमनुवर्तयिष्यते ? सत्यम्, पुनर्विधिग्रहणात् द्वितीयो नियमः क्रियते—पूर्वस्यैव विधौ स्थानिवन्न तु पूर्वपरयोर्विधाविति । तेन 'ईयतुः' इति सिद्ध्यति । अन्यथा हि इणोऽतुसि "द्विर्वचनेऽचि" (पा०सू०१-१-५९) इति यणादेशस्य स्थानिरूपातिदेशाद् द्वित्वे कृते द्वित्वकाले यणोऽपहारात् पुनः प्रवृत्तिवेलायां व्याश्रयत्वेन "वार्णादाङ्गं बलीयः" (प०भा०५५) इत्यस्मिन्नप्रवृत्ते वर्णमात्राश्रयत्वेनान्तरङ्गत्वात्सवर्णदीर्घः स्यात् । न च "अकृतव्यूहाः" (प०भा०५६) इति यणिति वाच्यम्, निमित्तविघाताभावात् । कृतेऽपि यणि स्थानिवत्त्वेन सवर्णदीर्घप्राप्तेः । ततश्च सवर्णदीर्घे कृते "अन्तादिवच्च" (पा० सू०६-१-८५) इत्यनेनाभ्यासग्रहणेन ग्रहादभ्यासह्रस्वत्वे "दीर्घ इणः किति" (पा०सू०७-४-६९) इति दीर्घत्वे कृते दीर्घविधानसामर्थ्यादिणो यणभावे 'ईअतुः'इति स्यात् । सिद्धान्ते तु पूर्वपरयोर्विधौ स्थानिवत्त्वाभावान्निमित्तविघातेनाकृतव्यूहपरिभाषयेणो यणि सिद्धं रूपम् । यद्वा, स्थानिवदिति वतिबलेनाभावोऽप्यतिदिश्यते, उत्तरसूत्रे द्विर्वचनादिग्रहणाल्लिङ्गात् । विधिग्रहणं तु पूर्वस्यैव न तु पूर्वपरयोरित्येतदर्थमिति दिक् ।

इह स्थान्यादेशनिमित्तानां त्रयाणां सन्निधानाविशेषेऽपि स्थान्यपेक्षमेव पूर्वत्वं गृह्यते न तु आदेशापेक्षं निमित्तापेक्षं वा 'वैयाकरणः' इत्यत्र आयादेशापत्तेः । तदुक्तम्—"अचः पूर्वत्वविज्ञानादैचोः सिद्धम्" (भा०३०) इति ।

नन्वेवं 'समाद्य' इत्यत्र जग्ध्यादेशप्रसङ्गः "ण्यल्लोपौ" (का०वा०) इति पूर्वविप्रतिषेधेन णिलोपे कृते ततः प्रत्ययलक्षणेन वृद्धौ सत्यामेकदेशविकृतस्यानन्यतयाऽदिग्रहणेन ग्रहणात् । एवं 'घात्यात्' इत्यत्र वधादेशप्रसङ्ग इति चेत् ? न, आदिघात्योरपि स्थानिद्वाराऽनादिष्टादचः पूर्वत्वात् । ननु स्थानिनः पूर्वत्वेऽपि आदेशस्य किमायातम् ? नह्यनादिष्टादचः पूर्वत्वं नाम शास्त्रीयं कार्यं, यत् "स्थानिवदादेशः" (पा०सू० १-१-५६) इति पूर्वसूत्रेणातिदिश्येतेति चेत् ? न, अनादिष्टादचः पूर्वत्वमुपजीव्य "अचः परस्मिन्" (पा०सू०१-१-५७) इति शास्त्रे प्रवर्तयितव्ये "स्थानिवदादेशः" (पा०सू०१-१-५६) इत्यस्य प्रवृत्तिसम्भवात् । तथाच "अचः परस्मिन्" (पा०सू०१-१-५६) इत्यतिदेश एव शास्त्रीयं

कार्यं, तच्च पूर्वसूत्रेणातिदिश्यते इति फलितोऽर्थः । अत एव नपदान्तसूत्रे सवर्णग्रहणं कृतम् । अन्यथा श्नसोरल्लोपे कृते पश्चाद्भवन्ननुस्वारो नानादिष्टादचः पूर्वं इति तस्य विधौ स्थानिवद्भावविरहात्सवर्णग्रहणं व्यर्थमेव स्यात् । नन्वेवं 'क्षत्रियकण्डूतिः' इति न सिध्यति । तथाहि, कण्डूयतेः क्तिचि अल्लोपयलोपयोः कृतयोरल्लोपस्य स्थानिवत्त्वेनोवङि कृते ऊकारस्यानादिष्टादचः पूर्वस्य स्थाने जातस्योवङः "स्थानिवदादेशः" (पा०सू०१-१-५६) इति स्थानिवद्भावेनानादिष्टादचः पूर्वत्वाद् "अचः परस्मिन्" (पा०सू०१-१-५७) इतिस्थानिवत्त्वेनाकारेण व्यवायादूठोऽभावेन स्थानिवत्त्वादेव "लोपो व्योर्वलि" (पा०सू०६-१-६६) इति वलोपाभावेन "हलि च"(पा०सू०८-२-७७) इति दीर्घे कृते 'कण्डूवृति' इति प्राप्नोति । यत्तु यः स्थानिद्वारा पूर्वं उवङ् न तस्योठ्, कस्य तर्हि ? वकारस्य । यस्य चोठ् वकारस्य, न स स्थानिद्वारा पूर्व इति । तन्न, तेस्तुरितिवत्कण्डू इत्यस्य कण्डुव् इति आदेशात्, तस्य च कण्डुऊ इत्यादेशे कर्त्तव्ये स्थानिवद्भावावश्यम्भावात् । उक्तं हि—"सर्वे सर्वपदादेशाः" इति । अन्यथा 'निराय' 'वात्यात्' इत्यादावपि स्थानिवद्भावानापत्त्या मूलशैथिल्यापत्तेरिति ।

अत्रोच्यते । अनादिष्टादचः पूर्वतायाः स्थानिद्वारकत्वमनित्यं, नपदान्तसूत्रे 'कण्डूतिः' इति भाष्योदाहरणाज्ज्ञापकात् । "आतोऽनुपसर्गे कः" (पा०सू०३-२-३) इति सूत्रे "कविधौ सर्वत्र प्रसारणिभ्यो डः" इति वार्त्तिकस्य तत्प्रघट्टकभाष्यस्य च पर्यालोचनयाप्येवमेव लभ्यते । तथा च तत्र भाष्यम्—योऽनादिष्टादचः पूर्वस्तत्कार्यं स्थानिवत्त्वं हीति । स्थानिद्वारके तु पूर्वत्वे गृह्यमाणे सम्पूर्णः प्रघट्टक एवासङ्गतः स्यादिति तत्रैव स्फुटीकरिष्यते । तत्रत्यः कैयटस्त्वापाततः ।

एतेन तितउमाचष्टे तितापयतीति हरदत्तग्रन्थोऽपि व्याख्यातः । तत्र हि णौ टिलोपे कृते तस्य स्थानिवत्त्वाद् "अचो ञ्णिति" (पा०सू०७-२-११५) इति वृद्ध्यभावेऽपि "अत उपधायाः" (पा०सू०७-२-११६) इति वृद्धौ आकारे कृते तस्य स्थानिद्वारा उकारात्पूर्वत्वेन पुग्विधावुकारलोपस्य स्थानिवत्त्वात्पुङ् न प्राप्नोति । न च यस्य पुक् आकारान्तस्य, नासौ पूर्वः, यश्च पूर्वं आकारः, न तस्य पुगिति वाच्यम्, एकदेशविकृतस्यानन्यतया "सर्वे सर्वपदादेशाः" इत्युक्तरीत्या चाकारान्तस्यापि पूर्वत्वानपायात् । तस्मात् स्थानिद्वारकं पूर्वत्वमनित्यमित्येव हरदत्तस्य शरणम् ।

अत्र केचित्—'तितापयति' इत्यसाध्वेव । तथाहि, तितउ णिच्

इति स्थिते टिलोपश्च प्राप्नोति "अत उपधायाः" (पा०सू०७-२-११६) इति वृद्धिश्च । उभयोर्नित्ययोः परत्वाद् वृद्धिः । ततष्टिलोपे कृते स्वत एवानादिष्टादचः पूर्वमादन्तं न तु स्थानिद्वारेति पुङ् न प्राप्नोति । तस्माच्छपि णिचो गुणे कृते एचि वृद्धावायादेशे 'तितायति' इति भवति । न च 'तिता णिच्' इति स्थिते अन्तरङ्गत्वादादूगुणे शप्ययादेशे 'तितयति' इति स्यादिति वाच्यम्, शपि हि गुणे सति "वृद्धिरेचि" (पा०सू०६-१-८८) इति बाधेनाद्गुणस्य निमित्तविघातस्योत्पत्स्यमानतयाऽकृतव्यूहपरिभाषया पूर्वमन्तरङ्गस्याप्याद्गुणस्याप्रवृत्तेः । अकृतव्यूहपरिभाषा ह्यन्तरङ्गपरिभाषाया अपवाद इत्युक्तम् । न च शपि गुणस्य "अचः परस्मिन्" (पा० सू०१-१-५७) इति स्थानिवत्त्वादादूगुणस्य न निमित्तविघात इति वाच्यम्, पूर्वस्यैव विधौ स्थानिवद्भावो न तु पूर्वपरयोर्विधावित्युक्तत्वात् । तस्मात् 'तितायति' इत्येव साधु, न तु 'तितयति' 'तितापयति' इति वा । चङि तु तिता णिच् चङ् तिप् इति स्थिते "तनोतेर्डडः सन्वच्च" (उ०सू०५४१) इति व्युत्पत्तिपक्षे "अनभ्यासस्य" इति द्वित्वनिषेधे टिलोपस्य चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधाद् ह्रस्वाभावे णिलोपे तस्य स्थानिवत्त्वादसिद्धत्वाद्वाऽऽतोलोपाभावे दीर्घविधिं प्रति स्थानिवत्त्वनिषेधात्सवर्णदीर्घे 'अतितात्' इति भवति न 'अतितापत्' इति ।

अत्रेदं वक्तव्यम्—परत्वाद् वृद्धिरित्यसङ्गतं नित्यत्वेन टिलोपात् । न च वृद्धिर्नित्या "अचः परस्मिन्" (पा०सू०१-१-५७) इति कार्यातिदेशेन वृद्धिप्राप्तावपि "लक्षणान्तरेण प्राप्नुवन्ननित्यः" इति न्यायेनानित्यत्वात् । एवं च हरदत्तोक्तिः सुष्ठ्वेव । किन्तु अनित्यत्वेऽपि स्थानिद्वारकं पूर्वत्वमिह नेष्यते इत्यस्मिन्नर्थे प्रमाणं चिन्त्यम् ।

तदेवं स्थानिद्वारकं वा स्वतो वा उभयथाप्यचः पूर्वत्वमिह गृह्यते इति स्थितम् । विधीयते इति विधिरिति कर्मणि किप्रत्ययः । पूर्वस्येति शेषे षष्ठी, अनुवादे परिभाषानुपस्थानात् । पुगाद्यागमेऽपि विधेये स्थानिवद्भावः । अच इत्यत्र तु आदेश इति समभिव्याहारात् योग्यताबलात् स्थानिसम्बन्धलाभः, "षष्ठी स्थाने योगा" (पा० सू०१-१-४९) इत्यतः पूर्वसूत्रेऽनुवर्तितस्य स्थानेग्रहणस्येहाप्यनुवृत्तेर्वेति प्रसिद्धः पन्थाः ।

न्यासकारस्तु निमित्तापेक्षमादेशापेक्षं वा पूर्वत्वमित्यपि पक्षौ भाष्ये उपन्यस्तत्वात्स्वीचकार । वैयाकरणस्तु बहिरङ्गयोरेवोरासिद्धत्वान्न दोष इत्याह । इदं च नाजानन्तर्यपरिभाषाया बहिरङ्गपरिभाषाया एव वा अनित्यतेति प्रागुक्तमुपष्टभ्य समर्थनीयम् । अस्मिन्पक्षे विधिरिति भावे किः, षष्ठी तु अनभिहितत्वात्कर्मणीत्यपि सुस्थमेव ।

किं तु निमित्तापेक्षया पूर्वत्वे त्यदाद्यत्वस्य स्थानिवत्त्वात् 'द्वाभ्याम्' इत्यादौ दीर्घो न स्यात्। "ईद्यति"(पा० सू० ६-४-६५) इतीत्वस्य स्थानिवत्त्वादिगन्तलक्षणो गुणो न स्यात् 'देयम्' इति। तथा गुणवृद्ध्योः स्थानिवत्त्वात् 'लवनं' 'लावकः' इत्यवावौ न स्याताम्। "द्वयोरेकस्य" (पा० सू० ए० ५-३-९२) "देयमृणे" (पा० सू० ४-३-४७) "किरतौ लवने" (पा० सू० ६-१-१४०) इत्यादिनिर्देशोपष्टम्भेनानित्यताश्रयणं तु क्लिष्टमिति दिक्।

पूर्वत्वं च नाव्यवधानगर्भं किं तु व्यवहितसाधारणं "तस्मिन्निति निर्दिष्टे" (पा० सू०१-१-६६) इति सूत्रे निर्दिष्टग्रहणाल्लिङ्गात्, चङ्परनिह्रासे निषेधारम्भाच्च। तेन 'पटयति' 'अवधीत्' इत्यादौ स्थानिवद्भावः सिद्ध्यति। वधादेशो ह्यदन्तः।

स्यादेतत्। 'पटयति' इत्यत्रान्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदत्वाज्जश्त्वं प्राप्नोति। न च स्थानिवद्भावः, जश्त्वविधौ तत्प्रतिषेधात्। सत्यम्, कर्मसमर्पकात् प्रातिपदिकादेव णिजुत्पत्तिर्न तु सुबन्तादिति वक्ष्यमाणत्वात्;सुबन्ताण्णिजिति पक्षेऽपि इष्ठवदित्यतिदिष्टया भसंज्ञया पदसंज्ञाया बाधात्। पटुमित्यस्यैव हि भसंज्ञा प्रवृत्तेति कथं तत्र पदसंज्ञा प्रवर्त्तेत ? तत्र चाप्रवृत्ता कथन्तरामेकदेशविकृते लभ्येत ? स्रग्विणमाचष्टे स्रजयतीत्यादौ हि प्रातिपदिकाण्णिजुत्पत्तिरिति पक्षेऽप्येषैव गतिरिति वक्ष्यामः। 'अवधीत्' इत्युदाहरणं तु भाष्यमते, आर्द्धधातुकीयाः सामान्येन भवन्तीति पूर्वसूत्रे एवोपपादितत्वेनार्द्धधातुकोपदेशे यदकारान्तं तस्य लोप इति लोपसम्भवात्। वार्त्तिकमते तु लिङीति परसप्तमीत्युक्तम्। तथाच 'अत्' 'पत्' इत्यादाविवातो लोपो न प्राप्नोति। अत एव हलन्त एवायमादेश इति तन्मतम्। वृद्धिस्तु न भवति "वध्यादेशे वृद्धितत्वप्रतिषेधः" इति पूर्वसूत्रस्थवार्त्तिकात्। एवम् 'अखट्वकः' 'बहुखट्वकः' इत्यादौ "केणः" (पा०सू०७-४-१३) "आपोऽन्यतरस्याम्" (पा० सू० ७-४-१५) इति ह्रस्वस्य स्थानिवद्भावात् "ह्रस्वान्तेऽन्त्यात्पूर्वम्" (पा० सू० ६-२-१७४) इति खकाराकारस्योदात्तो न भवति, किन्तु "कपि पूर्वम्" (पा० सू० ६-२-१७३) इत्युत्तरपदान्तोदात्तत्वमेव भवति। 'अचितीकः' 'बहुचितीकः' इत्यादौ तु "चितेः कपि" (पा० सू० ६-३-१२७) इति दीर्घस्य स्थानिवद्भावाच्चिशब्देकारस्य उदात्तता भवति। न चोभयत्रापि स्त्र(१)रविधौ न स्था-

(१) "न पदान्त" इतिसूत्रेणेति भावः।

निवदिति निषेधः शक्यः, लोपाजादेशमात्रविषयः स इति वक्ष्यमाणत्वात्। एवं 'पट्व्या' 'मृद्व्या' इति बहुभिर्वृत्तिकारैरुदाहृतत्वात् मूर्द्धाभिषिक्तमिति भाष्ये ऽव्यवहृनमप्युदाहरणं साध्वेव, अकृतव्यूहन्यायेन प्रथमं पूर्वयणादेशायोगात्। न चैवं 'कर्त्र्या' 'हर्त्र्या' इत्यादौ "उदात्तयणः" (पा०सू० ६-१-१७४) इति विभक्तेरुदात्तत्वं न स्यादिति वाच्यम्, स्वरविधौ व्यञ्जनस्याविद्यमानवद्भावेन पूर्वयणमेवाश्रित्य तत्समाधानात्। न च पूर्वस्मादपि विधौ स्थानिवद्भावाद्व्यञ्जनमेव नेति वाच्यम्, रेफस्यादिष्टादचः पूर्वत्वात् स्थानिद्वारकस्य पूर्वत्वस्यानित्यत्वात् "निष्ठायां सेटि" (पा०सू०६-४-५२) इति सेट्ग्रहणेन पूर्वस्मादपि विधौ स्थानिवद्भावस्य अनित्यत्वाच्च। तस्मान्मूर्द्धाभिषिक्तमुदाहरणमितिपक्षो नातीव दुष्यति। अत एव ह्याश्रीयमाणायामेव प्रकृतौ स्थानिवत्त्वमिति पक्षे 'अकुर्व्याशाम्' 'अलुन्याशाम्' 'व्यत्यजन्याशाम्' 'राय्याशाम्' इत्यत्र क्रमेण "ये च" (पा०सू० ६-४-११३) इत्युलोपः, "ई हल्यघोः" (पा०सू० ६-४-१०९) इतीत्वं, "ये विभाषा" (पा०सू० ६-४-४३) "रायो हलि" पा०सू० ७-२-८५) इत्यात्वं च प्राप्नोतीति भाष्यवार्त्तिकयोरुक्तम्। यत्त्वन्तरङ्गं बलवदिति वा ऽसिद्धपरिभाषां वाश्रित्य 'पट्व्या' 'मृद्व्या' इत्युदाहरणनिराकरणपरं भाष्यं, तत्तु अकृतव्यूहवचसोऽनित्यताभिप्रायेण कथञ्चिन्नेयमिति दिक्।

न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु (पा०सू० १-१-५८)॥ पदान्तादिकर्मकेषु विधिषु पूर्वेण प्राप्तः स्थानिवद्भावो न स्यात्। पदान्ते-'कानि सन्ति' 'कौ स्तः'। इह यणावादेशयोः कर्त्तव्ययोः श्नसोरल्लोपो न स्थानिवत्। न चानादिष्टादचः पूर्वत्वाविरहादेव न स्थानिवदिति वाच्यम्, वाक्यादपोद्धृत्य पदानि संस्क्रियन्ते इति पक्षेऽनादिष्टादचः पूर्वत्वस्य सत्त्वात्। न हि पदान्तरनिरपेक्षमेव पदमिह शास्त्रे संस्कार्यमिति नियमः, "युष्मद्युपपदे" (पा० सू०१-४-१०५) इत्याद्यनुशासनस्यासंगतिप्रसङ्गात्। एतच्चाङ्गसंज्ञासूत्रे कैयटेन ध्वनितम्।

केवलपदसंस्कारपक्षे 'अदद्रीचः' इत्यादौ "अचः" (पा०सू०६-४-१३८) इत्यल्लोपो न स्थानिवदित्युदाहार्यम्।

विधिशब्दश्चेह न कर्मसाधनः। तथात्वे हि कर्मधारयो वा स्यात् शेषषष्ठ्यन्तेन सह तत्पुरुषो वा? नाद्यः, विधिशब्दस्य क्रियाशब्दतया पूर्वनिपातप्रसङ्गात्। नान्त्यः, पदान्तस्य कस्मिंश्चित्कर्त्तव्ये न स्थानिवदिति पर्यवसानेन 'वृक्षव्' इत्यत्र वलोपापत्तेः, द्वन्द्वनिर्दिष्टेषु द्विर्वचना-

दिषु अनन्वयापत्तेश्च। तस्माद्भावसाधन एवाऽन्तरङ्गत्वाच्च। अत एव कर्मषष्ठ्यन्तेन समासः। 'शुकी' 'तटी' इत्यादौ पदसंज्ञायां कर्त्तव्यायां "यस्य" (पा०सू०६-४ १४८) इति लोपः स्थानिवदेव। न हि "स्वादिषु" (पा०सू०१-४-१७) इति सूत्रेण पदस्यान्तो विधीयते, येन निषेधः स्यात्। किं तु संज्ञामात्रम्। तत्रापि यथोद्देशपक्षः। जश्त्वादिकार्यकालत्वे "पूर्वत्रासिद्धे न" (भा० ६०) इति निषेधापत्तेः। एकदेशविकृतस्यानन्यत्वाद् 'वेतस्वान्' इत्यत्र रुः प्राप्तः बहिरङ्गस्यासिद्धत्वान्नेति वक्ष्यते। भाष्ये तु पदसंज्ञायाः पदान्ततां स्वीकृत्य पदे अन्त इति भसंज्ञापि पदकार्यमिति च द्वेधा समाहितम्। तत्रान्त्ये षडिके वचनसामर्थ्यादिति बोध्यम्। वाचिकषडिकौ तु पञ्चमे वक्ष्येते।

द्विर्वचने—सुदुध्युपास्यः। स्थानिवद्भावनिषेधसामर्थ्यादेव बहिरङ्गपरिभाषापीह न प्रवर्त्तते। "नाजानन्तर्ये" (प०भा०५१) इति निषेधाद्वा।

वरे इति निपातनादलुक् द्वन्द्वश्च। वरे योऽजादेशः स न स्थानिवत्। यायावरः। यातेः "नित्यं कौटिल्ये" (पा०सू०३-१-२३) इति यङ् "यश्च यङः" (पा०सू०३-२-१७६) इति वरच् तन्निमित्तकोऽतो लोपः। स च "आतो लोप इटि च" (पा०सू०६-५-६४) इत्यालोपे कर्त्तव्ये न स्थानिवत्। नन्विह परनिमित्तकत्वमेव नास्ति, आर्द्धधातुके इति विषयसप्तम्यभ्युपगमात्। अत एव हि "अचो यत्" (पा०सू०३-१-९७) इति सूत्रेऽज्ग्रहणं कृतम्। अन्यथा हलन्ताण्ण्यतो विशेषविहिततया परिशेषादच एव यद्भविष्यति किं तेन ? विषयसप्तम्यां तु 'दित्स्यम्' 'धित्स्यम्' इत्यादावजन्तभूतपूर्वादपि यत्सिद्धये अज्ग्रहणमिति "यतोऽनावः" (पा०सू०६-१-२१३) इत्याद्युदात्तस्सिध्यति। सत्यम्, वरेग्रहणेन परसप्तमीपक्षो ज्ञाप्यते। तथा च "अनुदात्तेतश्च हलादेः" (पा०सू०३-२-१४९) इति सूत्रे आदिग्रहणं कृतम्—हलन्तादिति मा विज्ञायीति। अस्ति च हलन्तविशेषणस्य व्यावर्त्यं 'जुगुप्सनः' 'मीमांसनः' इति। विषयसप्तमीत्वे त्विहापि अतोलोपे हलन्तत्वाद्युचा भाव्यमेवेति हलन्तविशेषणवैयर्थ्यात्सामर्थ्यादेवादिपरिग्रहसिद्धौ हल इत्येव ब्रूयात्। एवञ्च यातेर्यङन्तात् क्विचि अतो लोपे यलोपविधिं प्रति स्थानिवत्त्वनिषेधाद्यलोपे च 'याया'—इति स्थिते यङकारलोपस्य स्थानिवत्त्वाद् "आतो लोप इटि च" (पा०सू०६-४-६४) इत्याकारलोपे पुनर्यलोपे यातिरिति भवति। न च पुनराकारयकारयोर्लोपे सति क्विप्प्रत्ययमात्रं श्रूयतेति वाच्यम्, आल्लोपस्य स्थानिवत्त्वात् चिणोलुङ्न्यायेनासिद्धत्वाद्वा।

यलोपे उदाहरणान्तरमपि। तद्यथा-कण्डूयतेः क्विच्—कण्डूतिः।

क्विन्निति तु काशिकायां प्रमादः। "अप्रत्ययात्" (पा०सू०३-३-१०२) इत्यनेन बाधात्। न च 'ज्ञप्तिः' इत्यादाविवेह आबादित्वकल्पनं बहुलग्रहणं वा शरणीकरणार्हम्, भाष्यकारेणैव 'कण्डूया' इत्येव भवितव्यमिति वदता एतस्यापशब्दतोक्तेः। तस्मादयं क्विजेव। ततोऽल्लोपयलोपौ। अल्लोपस्य स्थानिवत्त्वादुवङ्। ततः "च्छ्वोः शूड्" (पा०सू० ६-४-१९) इत्यूठ्। न चोठ्यपि स्थानिवत्त्वम्, आदिष्टादचः पूर्वत्वात्। अत एव ऊठः पुनरुवङ् न भवति। "सर्वे सर्वपदादेशाः" (भा०इ०) इत्याश्रित्य स्थानिद्वारकं पूर्वत्वं यद्यपीह वक्तुं शक्यते, भाष्यमते 'लोलुवः' 'पोपुवः' इत्यादौ यथा, तथापि स्थानिद्वारकं पूर्वत्वं क्वाचित्कमेवेति पूर्वसूत्रे एवोक्तम्। तथा तिष्ठतेर्यङन्तात् क्विच् अल्लोपयलोपयोः 'तेष्ठीति' इति स्थिते अल्लोपस्य स्थानिवत्त्वादियङ्, यलोपः। तेष्ठिनिः। तथा पेपीयतेः क्विचि अल्लोपयलोपयोः "एरनेकाचः" (पा०सू०६-४-८२) इति यणि यलोपे कृते 'पेप्तिः' इति भवति। "शो तनूकरणे" यङन्तात् क्विचि अल्लोपयलोपाऽऽल्लोपेषु "पूर्वत्रासिद्धे न" (भा०इ०) इति स्थानिवत्त्वनिषेधात् "छशां षः" (पा०सू०८-२-३६) इति षत्वे कृते 'शाष्टिः' इति भवति। एवं चेचीयतेश्चेक्किरिति दिक्।

तदेवं वरेयलोपेति नैकं निमित्तं किन्तु द्वे इति स्थितम्।

केचित्तु वरेई इति ईकारं प्रश्लिष्य ईकारे परतो विधौ न स्थानिवदिति व्याचख्युः। तेनाऽऽमलक्याः फलमामलकम् "नित्यं वृद्धशरादिभ्यः" (पा०सू०४-३-१४४) इति मयट्। "फले लुक्" (पा०सू०४-३-१६३) ततो "लुक् तद्धितलुकि" (पा०सू०१-२-४९) इति ङीषो लुक्। स च "यस्य" (पा०सू०६-४-१४८) इति लोपे न स्थानिवत्। पूर्वोक्तव्याख्याने तु 'लुका लुप्तं न स्थानिवत्' इति वचनं करिष्यते। तत्र च लुप्तमिति "नपुंसके भावे क्तः" (पा०सू०३-३-११४) लुङ् न स्थानिवदिति फलितोऽर्थः।

स्वरे-चिकीर्षकः। सनोऽतो लोपो "लिति" (पा०सू०६-१-१९३) इति ककारेकारस्योदात्तत्वे कर्त्तव्ये न स्थानिवत्। न च "लिति" (पा०सू०६-१-१९३) इत्यस्यारम्भसामर्थ्यम् 'कारकः' इत्यादौ सावकाशत्वात्। भाष्ये तु 'आकर्षिकः' इत्युदाहृतं, तदापाततः, छलो लित्त्वसामर्थ्यात् स्थानिवद्भावकृतव्यवधाने सत्यपि लित्स्वरस्य सुवचत्वात् 'घ्नन्ति' इत्यादौ कुत्ववत्।

सवर्णानुस्वारयोः-शिण्ढि। पिण्ढि। श्नसोरल्लोपोऽत्र न स्थानिवत्। अनुस्वारस्यानादिष्टादचः पूर्वत्वं तु स्थानिद्वारेत्युक्तम्। यद्यपि

पि सवर्णग्रहणमात्रेणानुस्वारोऽप्याक्षेप्तुं शक्यते तथापि विशेषापेक्षं ज्ञापकमित्यपि सम्भाव्येत । तथा च यत्र न परसवर्णप्रसङ्गः 'शिंषन्ति' इत्यादौ, तत्र स्थानिवद्भावं निषेद्धुमनुस्वारग्रहणम् "अचः परस्मिन्" (पा०सू०१-१-५७) इति सूत्रे उक्तरीत्या "अभ्यासस्यासवर्णे"(पा० सू०६-४-७८) इत्यादिषु सवर्ण इति निषेधस्य लब्धावकाशतया 'शिण्ढि' इत्यादेरपि असिद्ध्यापत्तेश्चेति दिक् ।

दीर्घे-प्रतिदीव्ना । इह "हलि च" (पा०सू०८-२-७७) इति दीर्घे ऽल्लोपो न स्थानिवत् । यत्तु काशिकायामुक्तम् "उपधायां च" (पा० सू०८-२-७८) इति, तत्प्रामादिकम् । तथाच "उपधायां च" (पा०सू० ८-२-७८) इत्यत्रोक्तम्-प्रतिदीव्नेत्यत्र "हलि च" (पा०सू०८-२-७७) इति दीर्घ इति । यद्वा, आचारक्विबन्तात् "क्विप् च" (पा०सू०३-२-७६) इति क्विपि समाधेयम् । नन्वेवम् "अनुनासिकस्य क्विझलोः" ( पा०सू०६-४-१५ ) इति दीर्घः स्यात् ? सत्यम् , अकृतव्यूहपरिभाषया भाविनमल्लोपमालोच्यान्तरङ्गोऽपि दीर्घो न करिष्यते, 'जग्मुषः' इत्यत्रेडागमनकारादेशाविवेति बोध्यम् । ननु स्थानिवत्त्वाभावेऽपि"असिद्धं बहिरङ्गम्" (प०भा०५० ) इत्यल्लोपस्यासिद्धत्वाद्दीर्घो न स्यादिति चेत् ? न, कृतितुग्विधिग्रहणेन बहिरङ्गपरिभाषाया अनित्यत्वस्य ज्ञापितत्वात् , यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति दीर्घस्यासिद्धतयाऽन्तरङ्गाभावेन परिभाषाया अप्रवृत्तेश्च ।

जशि-सग्धिश्च मे, बब्धान्ने हरी । तथाहि, अदनं ग्धिः । अदेः क्तिनि "बहुलं छन्दसि" (पा०सू०२-४-३९) इति घस्लादेशः । "घसिभसोर्हलि च" (पा०सू०६-४-१००) इत्युपधालोपः । "झलो झलि" (पा०सू०८-२-२६) इति सकारलोपः 'घिसकारे सिचो लोपः' इत्यस्य भाष्यकृतानाश्रयणात् । वार्त्तिकमते छान्दसो वर्णलोपः । "झषस्तथोः" (पा०सू०८-२-४०) इति धत्वम् । न च तस्मिन्कर्त्तव्ये पूर्वस्मादपीति स्थानिवद्भावः पञ्चमीसमासस्यानित्यतायाः पूर्वसूत्र एवोपपादितत्वात् । घस्य "झलाञ्जश्" (पा०सू०८-४-५३) इति जश्त्वे कर्त्तव्ये उपधालोपो न स्थानिवत् । समाना ग्धिः सग्धिः "सहस्य सः संज्ञायाम्" (पा० सू०६-३-७८) इति सूत्रात्स इत्यनुवर्त्तमाने "समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु" (पा०सू०६-३-८४) इति सूत्रेण समानस्य सभावः । बब्धामिति भसेर्लोट् । तसस्ताम् । शपः श्लुः । अन्तरङ्गत्वाद् द्वित्वमभ्यासकार्यम् । ततो "घसिभसोः" (पा०सू०६-४-१००) इत्युपधालोपादि प्राग्वत् ।

चरि—जक्षतुः, जक्षुः। घसंलिंट् अतुस् उस् च। "गमहन" (पा० सू०६-४-९८) इत्युपधालोपः। "खरि च" (पा०सू०८-४-५५) इति चर्त्वं प्रति न स्थानिवत्।

तत्र वार्त्तिकम्—"स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत्" इति। तेनान्यः स्थानिवदेव। पञ्चभिररत्निभिः क्रीताः पञ्चारत्नयः। वेदे तु पञ्चारत्न्यः। "जसादिषु छन्दसि वावचनं प्राङ्णौ चङ्युपधायाः" (का०वा०) इति गुणाभावे यण्। तस्य स्थानिवद्भावाद् "इगन्तकाल" (पा०सू०६-२-२९) इत्यादिना पूर्वपदप्रकृतिस्वर इत्याहुः। यद्यपि "असिद्धं बहिरङ्गम्" (प०भा०५०) इत्यनेनापीदं सिध्यति तथापि अकृतव्यूहपरिभाषामाश्रित्य योज्यम्। 'अचितीकः' 'अखट्वकः' इत्यत्र "ह्रस्वान्तेऽन्त्यात्पूर्वम्" (पा०सू० ६-२-१७४) इत्यस्य क्रमेण प्रवृत्यप्रवृत्ती फलमिति तु पूर्वसूत्रे एवोक्तम्। न च तत्र बहिरङ्गपरिभाषायाः प्रसङ्गोऽस्ति।

कियोंः, गियोंः। व्युत्पत्तिपक्षे "हलि च" (पा०सू०८-२-७७) इति दीर्घः प्राप्तो यणः स्थानिवद्भावान्नभवति। "अच इः" (उ०सू०५८८) इत्यधिकारे "भुजेः किच्च" (उ०सू०५९१) "कृगॄशॄपॄकुटिभिदिछिदिभ्यश्च" (उ०सू०५-९-२) इति इः, स च कित्। यत्तु हरदत्तेन न्यासकृता च "कृग्रोरिच्च" इत्युपन्यस्तं, तत् क्वचिदुणादिवृत्तौ अन्वेषणीयम्। वाय्वोः इह यलोपो न।

अस्मिंश्च वार्त्तिके स्वरग्रहणमात्रमावश्यकम्। 'कियोः' गियोंः' इति तु "उपधायां च" (पा०सू०८-२-७८) इति सूत्रे वृत्तिकारोक्तरीत्या उणादीनामव्युत्पत्तिपक्षालम्बनेनापि सिद्धम्। 'वाय्वोः' इति तु बहिरङ्गस्यासिद्धतया सिद्धम्।

क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम्। पूर्वत्रासिद्धे च। तस्य दोषः संयोगादिलोपलत्वणत्वेषु। अस्यार्थः—क्वौ विधिं प्रति न स्थानिवत्। लवमाचक्षाणो लौः। अत्र णिचि यष्टिलोपो यश्च क्वौ णिलोपस्तदुभयं "च्छ्वोः शूठ्" (पा०सू०६-४-१९) इति वकारस्य क्विनिमित्ते ऊठि कर्त्तव्ये न स्थानिवत्। "एत्येधत्यूठ्सु" (पा०सू०६-१-८९) इति वृद्धिः। तथा 'पिपठिषि ब्राह्मणकुलानि' इति "दीधीवेवीटाम्" (पा०सू०१-१-६) इतिसूत्रे यदुदाहृतं तदपि क्वौ विधिं प्रतीति व्याख्याने एव सङ्गच्छते। क्वौ लुप्तं प्रति न स्थानिवदिति व्याख्याने तु 'लौः' 'पिपठिषि' इत्युभयमपि न सिद्धयेत, णिचि टिलोपस्य स्थानिवद्भावे ऊठोऽसम्भवात्, पिपठिषतेरप्रत्यये अतो लोपे

नपुंसकबहुवचने शौ झलक्षणे नुमि कर्त्तव्ये अतो लोपस्य स्थानिव-त्त्वनिषेधेन नुम्प्रसङ्गाच्च। एतच्च "दीधीवेवीटाम्" (पा०सू०१-१-६) इति सूत्रे कण्ड्वादिसूत्रे च मिश्रग्रन्थे स्फुटम्। कैयटोऽपि "दीधीवेवी-टाम्" (पा०सू०१-१-६) इत्यत्र क्वौ विधिं प्रतीत्यर्थो व्यवस्थितो न तु क्वौ लुप्तं न स्थानिवदितीत्याह। अत्र व्यवस्थित इति वदता क्वौ लुप्तं न स्थानिवदिति पक्षोऽपि क्वचिदाश्रीयते एव, नियमः परं नास्तीति सूचितम्। लुप्तमिति नपुंसके भावे क्तः। एवञ्च सख्यु-र्गोमान् पदः त्वम् अहमिति सिद्धम्। तथाहि, "ख्यत्यात्परस्य" (पा० सू०६-१-११२) इतिसूत्रे भाष्यम्—सखीयतेः सख्युः लूनीयतेर्लून्युरि-ति। तत्र सखीयतेः क्विपि अल्लोपे यलोपे अल्लोपस्य स्थानिवद्भावात् परत्वात्क्विलोपं बाधित्वा "इकोयणचि" (पा०सू०६-१-७७) इति य-ण् स्यात्। ततो यलोपे 'सख्यः' 'लूनः' इति स्यात्। अत एव क्वौ लुप्तं न स्थानिवदिति तत्र यणं परिजहार कैयटः।

तथा "उगिदचाम्" (पा०सू०७-१-७०) इति सूत्रे अधातुभूतपूर्व-स्यापि नुमर्थमधातुग्रहणमित्युक्त्वा गोमत्यतेरप्रत्यये 'गोमान्' इत्यु-दाहृतं भाष्ये। तत्राप्यल्लोपस्य स्थानिवत्त्वात्सर्वनामस्थानपरत्वं ना-स्तीति नुम् न स्यात्। न चाधातुग्रहणसामर्थ्यात्स्थानिवद्भावकृतव्य-वाये सत्यपि नुम् स्यादिति वाच्यम्, आचारक्विबन्तात् "क्विप्च" (पा०सू०३-२-७६) इति क्विपि चरितार्थत्वात्। तस्मात्क्वौ लुप्तं ने-त्येव शरणम्। ननु गोमत्यतेर्गोमततेर्वा उभयथापि, 'गोमान्' इति न सिध्यति "अत्वसन्तस्य" (पा०सू०६-४-१४) इति दीर्घविधौ अधातो-रिति विशेषणात्। सत्यम्, तत्राधातुग्रहणमसन्तस्यैव विशेषणं न-त्वत्वन्तस्यापीति वक्ष्यमाणत्वान्न दोषः।

तथा "येनविधिस्तदन्तस्य" (पा०सू०१-१-७२) इति सूत्रे "केवलोऽपि पाच्छब्दोऽस्ति। पादयतेः पात्, पदः" इति भाष्यम्। अत्रापि स्था-निवद्भावाद्व्यवधानेन पद्भावो न स्यात्। क्वौ लुप्तं नेति सिध्यति। अत एव "पादस्य पादहस्त्यादिभ्यः" इति न सूत्रितम्। प्रतिपदोक्त-स्यास्यैव पदादेशो मा भूत्, किन्तु क्विबन्तस्यापि यथा स्यादिति। एवञ्च "पादस्य लोपः" (पा०सू०५-४-१३८) इति गुरुनिर्देशं कुर्वता सूत्रकृतैव क्वौ लुप्तं न स्थानिवदिति ज्ञापितम्। तच्च क्वाचित्कमिति तु प्रकृतसूत्रस्थेनैवं विज्ञायते क्वौ लुप्तं नेति भाष्यस्यार्थः, विशब्दमा-हात्म्यात् ख्यत्यात्सूत्रादिभाष्याच्चेति व्यवस्थितशब्दं प्रयुञ्जानेन कैय-टेन ध्वनितम्।

युष्मानाचष्टे युष्मयति । ततः क्विपि णिलोपे सौ "त्वाहौ सौ" (पा०सू०७-२-९४) इति कर्त्तव्ये णिलोपो न स्थानिवत् । तदुक्तम्—

स्थानिवत्त्वं च णेरत्र क्वौ लुप्तत्वान्न विद्यते । इति

स्थानिवत्त्वमिति । लोपस्येति शेषः । णेः क्वौ लुप्तत्वादित्यन्वयः । अस्तु तर्हि क्वौलुप्तमित्यपि नित्यमेव । तावताऽपि लवमाचक्षाणो लौरित्यस्य सिद्धेरिति चेत् ? न, 'पिपठिषि'इत्यस्यासिद्धिप्रसङ्गात् । देवयतेर्द्यूरिति तु इह कैयटेन यदुदाहृतं क्वौ लुप्तं नेति सिध्यतीति, तस्यायमाशयः-यद्यपीह क्वौ विधिं प्रत्यूठ् सिद्धः, तथापि तस्य स्थानिद्वारा अनादिष्टादचः पूर्वत्वेन णिलोपस्य स्थानिवद्भावाद् "अचो ञ्णिति" (पा०सू०७-२-११५) इति वृद्धिप्रसङ्गः । तस्मात्क्वौ लुप्तं नेत्येव शरणम् । यत्तु "लोपो व्योः" (पा०सू०६-१-६६) इति सूत्रे कण्डूयतेः क्यजन्तादप्रत्यये 'कण्डूः' 'कण्डुवौ' इति व्युत्पादयन् कैयट आह—अल्लोपस्य स्थानिवद्भावाद्यण् । तस्य ऊठ् । न च ऊठि कर्त्तव्ये स्थानिवत्त्वेन प्रतिबन्धः स्यादिति वाच्यम्, वकारस्यादिष्टादचः पूर्वत्वादिति, तत्तु स्थानिद्वारकं पूर्वत्वमनित्यमित्याश्रित्य । तद्रीत्या तु 'द्यूः' इत्यपि सुसाधमेव ।

ननूभयथापि 'द्यूः' इत्यत्र प्रत्ययलक्षणेन वृद्धिः स्यादेवेति चेत् ? न, बहिरङ्गस्य ऊठो वृद्धिं प्रत्यासिद्धत्वात् । एवञ्च स्थानिवद्भावे सत्यपि न काचित्क्षतिः, बहिरङ्गत्वेनैव सर्वसमाधानात् । तस्माद् द्यूरिति पक्षद्वयेऽपि सिद्ध्यतीत्येव तत्त्वम् । नन्वेकदेशविकृतस्यानन्यत्वाद्दिव औत्स्यादिति चेत् ? न, निरनुबन्धपरिभाषया अधातुग्रहणानुवृत्तेर्वा 'अक्षद्यूः' इत्यत्र न औदिति दिवऔत्सूत्रे भाष्ये एव स्पष्टत्वात् । यद्यपि "उगिदचाम्" (पा०सू०७-१-७०) इति सूत्रे अधातुभूतपूर्वादित्यर्थस्तथापीह शब्दाधिकार इति भावः । एतेन "हलि च" (पा०सू०८-२-७७) इति दीर्घः 'दीव्यति' इति नामधातुप्रकरणे कौमुदीप्रासादौ प्रत्युक्तौ । दिवोऽडिविरिति न्यासोद्दिष्टसूत्रेण डिविरिति वदन् माधवोपि 'दिव्यति' इति ह्रस्वमेवोपजगाम ।

प्रकृतमनुसरामः । द्विर्वचनादौ तु "ओः सुपि" (पा०सू०६-४-८३) इति यण् । 'द्व्यौ' 'द्व्यः' इत्यादि खलपूवत् । 'कण्डूः, कण्डुवौ; कण्डुवः, इत्यादि तुवङेव संयोगपूर्वकतया यणोऽप्राप्तेरिति दिक् ।

अत्रायं संग्रहः—

सख्युर्गोमान् पदस्त्वं च क्वौ लुप्तस्य निदर्शनम् ।
अनित्यत्वे पिपठिषि क्वौ विधौ लौर्द्युयोर्द्यूः ॥

लुक् न स्थानिवत्। आमलक्याः फलम् आमलकम्। फले लुकः प्रत्याख्यानपक्षे तु पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुरित्युदाहार्यम्। तथा पञ्च इन्द्राण्यो ऽग्नाय्यश्च देवताऽस्य पञ्चेन्द्रः, पञ्चाग्निः, ङीपा सन्नियुक्त आनुक् ऐकारश्च श्रूयते। न च सन्नियोगशिष्टन्यायेन निवृत्तिः, परतद्धितलुङ्निमित्ताया ङीषनिवृत्तेः पूर्वयोरानुगैकारयोर्निवृत्तौ कर्त्तव्यायाम् "अचः परस्मिन्" (पा०सू०१-१-६७) इति स्थानिवत्त्वात्। ये तु पूर्वोक्तरीत्या वर ईं इनीकारप्रश्लेषं कुर्वन्ति तेषामिह लुग्ग्रहणं न कार्यम्।

उपधात्वे कर्त्तव्ये न स्थानिवत्। तेन परिखाशब्दाच्चातुरर्थिके अणि कृते "वृद्धादकेकान्तखोपधात्" (पा०सू०४-२-१४१) इति पारिख शब्दात्खोपधलक्षणे छप्रत्यये 'पारिखीयः' सिध्यति। अन्यथा उपधासंज्ञायाः पूर्वविधित्वेन तत्र कर्त्तव्यायामाल्लोपः स्थानिवत्स्यात्। नन्वेवं 'पटयति' इत्यादौ वृद्धिः स्यादिति चेत्? न, यत्रोपधासंज्ञामुपजीव्य प्रत्ययो विधित्सितस्तत्रैवायं निषेध इति भाष्ये स्थितत्वात्। अत्र चङ्परनिर्ह्रासग्रहणमेव ज्ञापकम्। कथं तर्हि भाष्ये यलोपे 'सौरी बलाका'इत्युदाहरणं दत्त्वा उपधाविधौ नेत्येव सिद्धमित्युक्तमिति चेत्? अनास्थावादमात्रं तदित्यवेहि। तत्र हि "तेनैकदिक्" (पा०सू० ४-३-११२) इत्यणन्तान्ङीप्यल्लोपद्वयस्यापि यलोपे कर्त्तव्ये स्थानिवद्भावे निषिद्धे समानाश्रयस्याणो लोपस्याभीयत्वेनासिद्धतायां यलोपः सिद्ध्यतीति यलोपे न स्थानिवदित्यस्यैव 'सौरी' इत्युदाहरणम्। उपधात्वं तत्र लोपे उपयोगि न तु प्रत्ययविधाविति स्थितम्।

चङ्परे णौ यो ह्रस्वः स चङ्परनिर्ह्रासस्तत्र न स्थानिवत्। वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन। प्रथमणिचो लोपस्य स्थानिवत्त्वादनुपधाकार इति "णौचङि" (पा०सू०७-४-१) इत्युपधाह्रस्वो न प्राप्नोति। णिसामान्यग्रहणादप्येतात्सिद्धम्। इदं तूदाहरणम्—वारि आख्यत अवीवरत्। न च "नाग्लोपि" (पा०सू०७-४-२) इति निषेधः शङ्क्यः, 'परत्वाद् वृद्धौ सत्यां टिलोपः' इत्युपगमेनाग्लोपित्वाभावात्। अत एव हलकलेत्यदन्तनिपातनं सार्थकम्।

कुत्वे न स्थानिवत्। अर्चयतेरौणादिकः कप्रत्ययः, अर्कः। पाचयतेः क्विप्, पाक्तिः "चोः कुः" (पा०सू०८-२-३०) इति कुत्वे णिलोपो न स्थानिवत्। इह सूत्रे "जश्चर्षु"इत्येव सिद्धे विधिग्रहणं द्वन्द्वाश्रयेण विध्यन्तरोपसंग्रहार्थम्। तद्व्युत्पादनार्थं च "क्विलुग्"इत्यादि वार्त्तिकमिति निष्कर्षः। तत्रापि क्विचङ्परनिर्ह्रासोपधानां ग्रहणमावश्य-

कम् । लुक ईकारप्रश्लेषेण गतार्थत्वात्कुत्वस्य पूर्वत्रासिद्धीयत्वाच्चेत्य· वधेयम् । "चजोः" (पा०सू०७-३-५२) इति कुत्वे वोदाहरणमन्वे· षणीयम् ।

पूर्वत्रासिद्धे च न स्थानिवत् । पाचयतेः क्तिच्, पापक्तिः । या- यज्यतेर्यायिष्टिः । पाचयतेः पाक्तिः । याजयतेर्याष्टिः । इहाल्लोपणिलोपौ कुत्वषत्वयोर्न स्थानिवत् । एवं लेहयतेर्लेढिः । दोहयतेर्दोग्धिः । वेशा· यतेर्वेष्टिः । दाशयतेर्दाष्टिरित्याद्यूह्यम् ।

न्यायसिद्धं चेदम् "अचः परस्मिन्"(पा०सू०१-१-५७) इत्यतिदेशं प्रति त्रिपादीस्थस्यासिद्धतया तस्मिन् कर्तव्येऽतिदेशाप्राप्तेः । न चैवं स्थानिवत्सूत्रस्याप्यप्रवृत्तौ 'राम' इति विसर्गो न स्यादिति वाच्यम् "प्रत्ययः" "परश्च" (पा०सू०३-१-१,२) इत्यादिनिर्देशैः "भो भगो अघो" (पा०सू०३-१-२) इति सूत्रेऽशग्रहणेन च तत्प्रवृत्तेर्ज्ञापितत्वा· दित्यवधेयम् ।

एवं स्थिते द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः सूत्रे न पाठ्याः । किं तु नपदान्तवरेयलोपस्वरेष्वित्येव पाठ्यमिति भाष्यवार्तिकयोः स्थितम् ।

स्यादेतत् । यदि दीर्घग्रहणं त्यज्यते तर्हि साप्तमिके दीर्घविधौ स्थानिवद्भावः प्रसज्येत । तथा च "चिण्णमुलोः" (पा०सू०६-४-९३) इति सूत्रे यङन्ताण्णिजन्ताद्वा णिचि ततश्चिणि 'अशंशामि', 'अशामि' इति यदुदाह्रियते, तन्न सिध्येत् । न च दीर्घग्रहणसामर्थ्यात्स्थानिवद्भा· वबाधः, कर्मणिङ्सूत्रे हरदत्ताद्युक्तरीत्या "चिण्णमुलोर्दीर्घ" (पा०सू० ६-४-९३) इत्यत्र कैयटाद्युक्तरीत्या च 'अहिडि' 'अहीडि' इत्येतत्सि· द्ध्या 'अहेडि' इत्यस्य निवृत्त्या तस्य चरितार्थत्वात् ।

उच्यते । णित्वजात्यैक्यं गृहीत्वा 'अशामि' इति सिद्धम् । 'अशं· शामि' इति तु यङ्लुगन्ताण्णिचि भविष्यति । न हि यङ्यङ्लुकोः स्व· रेऽर्थे वा कश्चिद्विशेषोऽस्ति । येन यङ्येव साधयितुं क्लिश्येत । एव· ञ्च 'ग्राहितम्' इत्याद्यपि सिद्धम्, पूर्वस्मादपि विधौ स्थानिवद्भावेन णिचा व्यवधाने सति "ग्रहो लिटि" (पा०सू०७-२-३७) इति दीर्घ· स्याप्रवृत्तेः । सूत्रमते तु विहितविशेषणाश्रयणाद् 'ग्राहितम्' इत्यादौ· न दीर्घः । अत एव यङन्तात्तृचि'जरीगृहिता' इत्यत्र न दीर्घः, स्थानि· वद्भावात्, सूत्रमते विहितविशेषणाच्चेति स्थितम् । यङ्लुगन्तात्तु तृजादाविटो दीर्घो भवत्येवेति माधवः "द्विः प्रयोगो द्विर्वचनं षाष्ठम्" इति सिद्धान्तात् ग्रहेर्विहितत्वानपायात् । यङ्लुकोऽनैमित्तिकतया·

ऽज्झलादेशतया लुका लुप्तत्वाच्च स्थानिवद्भावोऽपि नास्तीति माधवस्याशयः। वस्तुतस्तु यङ्लुक्यपि इटो दीर्घोऽनिष्ट एव "एकाचो द्वे प्रथमस्य" (पा० सू० ६-१-१) इति सूत्रे भाष्यकैयटादिपर्यालोचनया तथैव निर्णयात्। तथा च तत्र "ग्रहेरङ्गाद्" इति भाष्यमुपादाय कैयट आह–तृचो हि जरिगृहित्यङ्गं न तु ग्रहिः। विशेषणसामर्थ्याद्धि यथाश्रुतरूपाश्रयणमिति। यद्यपि तत्र यङन्तं प्रकृत्येदमुक्तं तथापि युक्तिसाम्याद्यङ्लुगन्तेऽपि न दीर्घ इति लक्ष्यते। अत एव "एकाचो द्वे" (पा०सू०६-१-१) इति सूत्रे हरदत्तोऽपि यङन्ते दीर्घमाशङ्क्याह—"एकाच उपदेशे" (पा०सू०७-२-१०)इत्यतो दीर्घविधावेकाज्ग्रहणमनुवर्त्तते इति। न ह्यत्र पक्षे यङ्लुकि दीर्घस्योक्तिसम्भवोऽप्यस्ति। नन्वेवं "ग्रहोऽलिटि" (पा०सू०७-२-३७) इति सूत्रे "यङ्लोपे चोक्तम्" इति वार्तिकव्याख्यावसरे स्थानिवद्भावाद्विहितविशेषणाश्रयणाद्वा यङन्ते दीर्घं परिहरन् कैयटो विरुध्येत यङ्लुगर्थं यथाश्रुतरूपाश्रयणस्यैकाज्ग्रहणानुवर्तनस्य वा आवश्यकतया तेनैव गतार्थत्वादिति चेत्? न, "ग्रहोऽलिटि" (पा०सू०७-२-३७) इत्यत्रत्यकैयटग्रन्थस्योपायस्योपायान्तरादूषकत्वादिति न्यायेन यङन्ते उपायान्तराभिधानपरत्वात्। अत एव तत्र कैयट आह–"अन्यत्रास्य दोषस्य सम्यगुद्धृतत्वात्" इति। एवं हि वदन् तत्रत्यपरिहारस्याव्यापकतामेकाच्सूत्रोक्तस्यैवावश्यादर्तव्यतां चाभिप्रैति। न च यथाश्रुतरूपपक्षे 'गृहीतम्' इत्याद्यसिद्धिः, अङ्गसंज्ञाप्रवृत्तिवेलायां यथाश्रुतरूपस्यैव तत्र सत्त्वात्। ग्राहितादौ तु नैवम्। 'एकाचः' इति समाधानं तु णिज्भिन्नविषयकमेव। तस्मात्।

यङ्लुगन्ताण्णिजन्ताच्च यङन्ताच्च ग्रहेरिटः।
द्विधा त्रिधा चतुर्द्धा च दीर्घो नेति व्यवस्थितम्॥

माधवग्रन्थस्तु विहितविशेषणपक्षस्य मुख्यतां पक्षान्तराणामभ्युच्चयतां च परिकल्प्य कथञ्चिन्नेय इति प्रतिभातीति दिक्।

तस्य दोष इत्यादेरयमर्थः–तस्य "पूर्वत्रासिद्धे च" (भा० इ०) इत्यस्य स्थलत्रये दोषः अतिप्रसक्तिः, तस्मात्तत्र स्थानिवद्भावस्य प्रतिप्रसवः कर्त्तव्य इत्यर्थः। तेन 'वाक्यर्थं' 'वास्यर्थम्' इत्यत्र "स्कोः" (पा०सू०८-२-२९) इति लोपो न। निगार्यते, निगाल्यते। "अचि विभाषा" (पा०सू०८-२-२१) इति लत्वं सिद्ध्यति। तथा 'माषवपनी' इत्यत्र णत्वं न भवति, अल्लोपस्य स्थानिवत्त्वेन नकारस्य समासान्तत्वाभावात्। न चासत्यपि स्थानिवद्भावे ङीबेव समासान्तो न तु न-

कार इति वाच्यम्, ङीबुत्पत्तेः प्रागेव समास इति द्वितीये वक्ष्यमाणत्वात्। एवं स्थिते तक्षयतेः क्विपि 'तक्' रक्षयतेस्तु 'रक्' इत्यादि बोध्यम्। अत्र हि संयोगादिलोपे कर्त्तव्ये णिलोपस्य स्थानिवद्भावान्न तत्प्रवृत्तिः। संयोगान्तलोपे तु स्थानिवद्भावनिषेधाद्भवत्येवासौ। 'गोरट्' इति तु शु(१)द्धात्क्विपि बोध्यम्। यत्तु "अचः परस्मिन्" (पा० सू०१-१-५७) इति सूत्रे 'दध्यत्र' इति भाष्यमुपादाय कैयटेनोक्तम्—"पूर्वत्रासिद्धे चेत्येतदत्र नास्ति, तस्य दोष इत्येव संयोगादिलोपस्य संयोगोपलक्षितलोपोपलक्षणत्वात्" इति। तन्न वास्तवम्। किन्तु तत्रत्यपूर्वपक्षिणोऽभिप्रायवर्णनमात्रम्। अत एव "नपदान्त" (पा०सू० १-१-५८) इति सूत्रशेषे तेनैवोक्तम्—"स्कन्दयतेः 'स्कन्' तक्षयतेः तक्" इति। यत्तु "सिद्धकाण्डे श्चुत्वं धुट्त्वे" इति वार्त्तिकव्याख्यावसरे कैयटेनोक्तम्—"मधुगितीष्यते, मधुडिति प्राप्नोति" इति। तत्तु सकारोपदेशसामर्थ्यादिति बोध्यम्। 'सन् श्चोतति' इत्यत्र "शि तुक्" (पा०सू०८-३-३१) इत्यस्याप्रवृत्त्या सकारश्चरितार्थ इति चेत्तर्हि "कौलुतम्" इति समाधेयम्। "कुस्मनाम्नोवा" (ग०सू०) इत्यत्र 'कूः' इति माधवोदाहृतं सम्यगेव तत्र सामर्थ्यविरहेण संयोगादिलोपाप्रवृत्तेरिति दिक्।

स्यादेतत्। इह संयोगादिग्रहणं मास्तु। न चैवं 'वाक्यर्थम्' इत्यादौ "स्कोः" (पा०सू०८-२-२९) इति लोपापत्तिः। "स्कोः संयोग" (पा०सू०८-२-२९) इत्यत्र "झलो झलि" (पा०सू०८-२-२६) इत्यतो झल इत्यनुवर्तते। तच्चोपसर्जनस्यापि संयोगेत्यस्य विशेषणम्, न तु प्रधानयोरपि स्कोः, अव्यभिचारात्। ततश्च झलन्तो यः संयोगस्तदाद्योः स्कोर्लोपः स्यादिति सूत्रार्थात्, बहिरङ्गतया यणोऽसिद्धत्वाच्च। अत एव हि 'दध्यत्र' इत्यादौ संयोगान्तलोपो न प्रवर्तते। तथा चाष्टमे वार्तिकम्—न वा झलो लोपाद्बहिरङ्गलक्षणत्वाच्चेति। न चैवमपि 'काष्ठतक्' 'राष्ट्रक्' इत्यादि न सिध्येदेवेति वाच्यम्, अनभिधानात्तत्र क्विप एव दुर्लभत्वात्। अनभिधानं च "काष्ठशगेव नास्ति" इत्याष्टमिकभाष्यबलेन न्यायसाम्यान्निर्णीयते इति।

अत्रोच्यते। कुस्मयतेः 'कूः' इत्यादिसिद्धये संयोगादीति वाच्यमेव। किञ्च 'तक्' 'रक्' इत्याद्यर्थमपि वक्तव्यम्। न चानभिधानम्, प्रमाणाभावात् कैयटादिभिरुदाहृतत्वाच्च। न च काष्ठशगेव नास्तीति

---

(१) णिजूरहिताद् केवलादित्यर्थः।

भाष्यं तत्र प्रमाणम्, न्यायवैषम्यात्। तथाहि, 'काष्ठशक् स्थाता' इत्यत्र झलपरो यः संयोगस्तदादेः ककारस्य लोपमाशङ्क्य तदुक्तम्। तेन यत्र कलोपप्रसक्तिस्तदभिप्रायकमनभिधानम्। अत एव कान्तेभ्यः क्विप् नेत्येवम्परतया तद्व्याख्यातम्। न च णिजन्तेभ्यः क्विपि कलोपप्रसक्तिरस्ति, णिलोपस्य स्थानिवद्भावात्। न च "पूर्वत्रासिद्धे च" इति तन्निषेधः संयोगादिलोपे प्रतिप्रसवस्य जागरूकत्वात्। तस्मात्संयोगादिलोपग्रहणं कर्त्तव्यमेवेति स्थितम्।

इदं त्ववधेयम् । "संयोगान्तस्य लोपः" (पा०सू०८-२-२३) इत्यत्र "न वा झलो लोपाद्बहिरङ्गलक्षणत्वाद्वा" इति द्विधा सिद्धान्तव्यवस्थापनात् 'कू' इति संयोगान्तलोपोऽपि दुर्लभः। तेन 'कुस्म्' इत्येव भवति प्रथमपक्षे। द्वितीयपक्षाभिप्रायेण तु माधवः।

नन्वेवमपि लत्वग्रहणं व्यर्थम्, 'निगाल्यते' इत्यत्र सत्यपि णिलोपे प्रत्ययलक्षणेन लत्वसिद्धेः। न च वर्णाश्रयत्वम्, धातोः स्वरूपे तत्प्रत्यये कार्यविज्ञानात्। इदं च दाण्डिनायनादिसूत्रे 'भ्रौणहत्या' इति तत्वनिपातनेन ज्ञापयिष्यते। किञ्चान्तरङ्गत्वादपि लत्वं सुवचमिति।

अत्रोच्यते, "तृणह इम्" (पा०सू०७-३-९२) इत्यत्राचि नेत्यनुवर्तते। हलीति निवृत्तम्। तथा च 'अतृणेट्' इत्यादिसिद्धये प्रत्ययलक्षणं नारम्भणीयम्, किन्तु नियमार्थं तदारम्भ इति भाष्ये स्थितम्। इतरव्यावृत्तिमात्रफलकं प्रत्ययलक्षणसूत्रम्। तत्तत्कार्याणि तु स्थानिवत्सूत्रेण निर्वाह्याणि। तत्र च 'प्रदीव्य' इतीण्निवृत्तये अप्राधान्येनाप्यलाश्रयणे निषेधः स्थितः। तथाचाचि प्रत्यये विधीयमानं लत्वं स्थानिवद्भावं विना दुर्लभमेव। यदप्यन्तरङ्गत्वाल्लत्वमित्युक्तं, तदपि न; अकृतव्यूहपरिभाषया लत्वाप्रवृत्तेः। किञ्च "उपसर्गस्यायतौ" (पा०सू०८-२-१९) इति सूत्रे पक्षद्वयं वक्ष्यते—अयतिपरत्वमुपसर्गस्य विशेषणं रेफस्य वेति। तत्राद्ये पक्षे 'पल्ययते' इति सिध्यति, 'प्लायते' इति तु न सिध्येत् एकादेशे कृते व्यपवर्गाभावात्, उभयत आश्रये अन्तादिवद्भावायोगाच्च। तस्मात्तत्र स्थानिवद्भावेनैव व्यपवर्गो वक्तव्यः। स च "पूर्वत्रासिद्धे च" इति निषिद्ध इति लत्वे प्रतिप्रसवः सार्थक एव। द्वितीयपक्षे तु 'पल्ययते' इति न स्यात्, यकारेण व्यवधानात्। 'प्लायते' इत्यत्रैव परं लत्वं स्यात्, "पूर्वत्रासिद्धे च" इति स्थानिवत्त्वनिषेधेन तत्र रेफस्यायतिपरत्वाविघातात्। कृते त्विह लत्वग्रहणे येन नाव्यवधानन्यायेन 'पल्ययते' इत्यत्रापि लत्वं सिध्यति। स्फुटं चेदमष्टमे

भाष्ये एव। तस्मादिह लत्वग्रहणं कर्त्तव्यमेवेति स्थितम्।

णत्वग्रहणं तु व्यर्थम्। तथाहि, 'माषवपनी' इति तावद्बहिरङ्गपरिभाषयाऽपि सिद्धम्। न च 'प्रहिणोति' 'प्रमीणीते' इत्यादिसिद्धये तदिति वाच्यम् "अचः परस्मिन्" (पा०सू०१-१-५७) इति सूत्रस्य प्रवृत्तिं विनाप्येकदेशविकृतस्यानन्यतया "हिनुमीना" (पा०सू०८-४-१५) इत्यस्य प्रवृत्तिसम्भवात्। न च "ष्णान्ता षट्" (पा०सू०१-१-२४) इति सूत्रे वर्णितरीत्या 'प्रियाष्ट्नः' इत्यादिसिद्धये णत्वग्रहणमिति वाच्यम्, कार्यकालपक्षे बहिरङ्गपरिभाषयैव तस्यापि सिद्धेः। यथोद्देशपक्षस्तु न ग्रहीष्यते प्रत्याख्येयेन णत्वेन सह फलसाम्यार्थम्। एतेन 'प्रियाष्टूणः' इति णत्वाभ्युपगमपरः पदमञ्जरीग्रन्थोऽप्यपास्तः। बहिरङ्गपरिभाषाया अनित्यत्वेपीह तदप्रवृत्तौ प्रमाणाभावात्। तस्मादिह णत्वग्रहणं वृथेति स्थितम्। प्रत्युत णत्वे स्थानिवत्त्वाभ्युपगमे बाधकमप्यस्ति। तथाहि-"अनितेरन्तः" (पा०सू०८-४-१९) इति सूत्रे "अन्तः" (पा०सू०८-४-२०) इति योगं विभज्य 'हे प्राण्' इति रूपसिद्धये "पदान्तस्य" (पा०सू०८-४-३७) इति प्रतिषेधं बाधितुम् "अन्तः" (पा०सू०८-४-२०) इति सूत्रेण पदान्तस्यानितेर्णत्वं विधीयते इत्येका व्याख्या। अन्तशब्दं समीपपर्यायमाश्रित्य निमित्तसमीपस्थो योऽनितेर्नकारस्तस्य णत्वं, निमित्तसमीपस्थस्यानितेर्यो नकारस्तस्य णत्वमिति च योगविभागं विनापि व्याख्यानद्वयं भाष्ये स्थितम्। तत्र प्रथमपक्षे "प्राणिति" इत्यादावेकेनाऽऽकारेण व्यवधानेऽपि वचनसामर्थ्याण्णत्वं प्रवर्त्तते। द्वितीयपक्षे त्वेकादेशस्यादिवद्भावाद्रेफादव्यवहितस्यानितेः सम्भवात्प्रवर्त्तते। 'पर्यनिति' इत्यत्र तु वर्णद्वयेनैकेन च व्यवायात्पक्षद्वयेऽपि णत्वं न प्रवर्त्तते इति स्पष्टमष्टमे। यदि चेह णत्वग्रहणं क्रियते तर्हि 'पर्यनिति' इतिवत् 'प्राणिति' इत्यत्रापि द्वयेनैकेन वा वर्णेन यथासम्भवं व्यवधानाण्णत्वं न स्यात्। न च वचनसामर्थ्यात्स्थानिवद्भावकृतं व्यवधानमाश्रयिष्यते 'वृत्रघ्नः' इति कुत्व इवेति वाच्यम् 'निरणिति' 'दुरणिति' इत्यत्र चरितार्थत्वात्। न चैवं "निर्दुरोरनितेः" इत्येव ब्रूयात, न तु "अनितेरन्तः" इति सामान्यलक्षणं प्रणयेदिति वाच्यम्, आवृत्तिमाश्रित्य 'हे प्राण्' इत्यत्र णत्वस्य प्रतिप्रसवार्थं निर्दुरोरित्यपेक्षया 'अन्तः' इत्युक्तावक्षरलाघवानुरोधाच्च सामान्यलक्षणप्रणयनसम्भवात्। तस्मादाष्टमिकभाष्यपर्यालोचनेनेह णत्वग्रहणं न कर्त्तव्यमिति निर्णीयते। अत एव 'व्यूढोरस्केन' इत्यत्र, णत्वं न। अन्यथा विसर्गस्यादूत्वेन तदादेशस्य सस्य स्थानिवद्भावाण्णत्वं स्यात्। इह णत्वग्रह-

णस्य प्रयोजनाभावस्तूक्त एव । ततश्च "तस्य दोषः संयोगादिलोपल-त्वयोः" इत्येव वाच्यम् ।

वस्तुतस्तु तदपि न वाच्यम् "पूर्वत्रासिद्धे च" इति ह्यसिद्धत्वादेव न्यायसिद्धमित्युक्तम् । तच्चासिद्धत्वमनित्यम्, "अधुना" (पा० सू०५-३-१७) इतिवद् "अमुना" इति वाच्ये "नमुने" (पा०सू०८-२-३) इत्युक्तेनेति योगविभागात्, नुटीति वाच्ये "नामि" (पा०सू०६-४-३) इतिलिङ्गाच्च । 'अनश्वः' इत्यादेरङ्गस्येत्यनेन व्यावृत्तौ सत्यामपि 'अ-(१)क्षण्वन्तः' इत्यादौ हि दीर्घं वारयितुं हि "नामि" (पा०सू०६-४-३) इत्युक्तम् । "रुधादिभ्यः श्नम्" (पा०सू०३-१-७८) "श्नान्नलोपः" (पा० सू०६-४-२३) इति सूत्रद्वये भाष्यकैयटाद्यालोचनेनारम्भसामर्थ्यात्सन्निपातपरिभाषाया इवासिद्धत्वस्याप्यविशेषाद्बाधे प्राप्ते "नामि" इत्युक्तिरिति चेत् ? न, क्वति तुग्ग्रहणादिना सन्निपातपरिभाषाया अनित्यत्वज्ञापनात्सामर्थ्याद्बाध इति पक्षेऽप्यक्षण्वन्त इत्यादावुभयबाधे गौरवाच्च । तस्मादनित्यताज्ञापनार्थमेव तत् । तेन सिद्धकाण्डमपि संगृहीतं भवति । एतेन 'रामः' 'रामेभ्यः' इत्यादौ रुत्वस्यासिद्धत्वाद्रोरुकारस्येत्संज्ञालोपौ कथं स्यातामित्येतदपि समाहितम् । "प्रत्ययः" (पा०सू०३-१-१) "परश्च" (पा०सू०३-१-२) इत्यादिलिङ्गाच्च । यत्त्वनुनासिकनिर्देशसामर्थ्यादित्संज्ञालोपौ प्रत्यसिद्धत्वं नेति । तन्न, 'तरुमूलम्' इत्यादौ "हशि च" (पा०सू०६-१-११४) इत्यस्य व्यावृत्तये "अतोरोः" (पा०सू०६-१-१) इत्यत्र सानुनासिकस्यैव निर्देशाभ्युपगमेन चारितार्थ्यात् । 'रामः' इत्यादावपि सानुनासिकश्रवणस्यापाद्यमानतया चारितार्थ्यस्य स्पष्टत्वादिति दिक् । तेन संयोगादिलोपलत्वयोरसिद्धताविरहात्स्थानिवत्त्वं भविष्यतीति सकलेष्टसिद्धिः ।

द्विर्वचनेऽचि (पा०सू०१-१-५९) । रूपातिदेशोऽयम् । द्वित्वनिमित्तेऽचि योऽजादेशः स स्थानिवद्रूपं लभते द्वित्वे कर्त्तव्ये । चक्रतुः, चक्रुः । द्वित्वनिमित्तत्वेनाज्विशेषणादिह न—दुद्यूषति, सुस्यूषति । न ह्यूट् द्वित्वनिमित्तम् । नन्वेवं 'चक्रतुः' इति यणोऽपि स्थानिवद्भावो न स्यात, अतुसो द्वित्वनिमित्तत्वेऽप्यकारस्यातथात्वात् । सूत्रं तु चक्रे इत्यादौ सावकाशमिति ? सत्यम्, इह निमित्तशब्देन साक्षाद्वा समुदायघटक-

(१) अक्षिशब्दान्मतुप् । "अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" (पा०सू०७-१-७५) "छन्दस्यपि दृश्यते" (पा०सू०७-१-७६) इत्यनङादेशः । नुटोऽसिद्धत्वात्पूर्वं नलोपे भूतपूर्वगत्या ऽन्नन्तत्वमादाय "अनो नुट्"(पा०सू०८-२-१६)इति नुटि णत्वे तत् सिध्यतीति बोध्यम् ।

तया वा द्वित्वप्रयोजकत्वमाश्रीयते न तु साक्षादेवेत्याग्रहः, लक्ष्यानुरोधात् । किञ्च सूत्रे निमित्तशब्दो नास्त्येव । किन्तु लक्षणया वा द्विरुच्यतेऽस्मिन्निति द्विर्वचनमिति व्युत्पत्त्या वा द्विर्वचनमस्त्यस्मिन्निति अर्शआद्यचा वा द्विर्वचननिमित्तं लब्धव्यम् । तच्च प्रकारत्रयं साक्षात्परम्परासाधारणे प्रयोजकेऽपि सुवचम् । एतच्च "ठस्येकः"(पा०सू० ७-३-५०) इति सूत्रे कैयटे स्पष्टम् । अत एव ऊर्णोतेः सनि "सनीवन्त" (पा०सू०७-२-४९)इतीट्पक्षे "विभाषोर्णोः"(पा०सू०१-२-३) इति ङित्त्वविरहे 'ऊर्णुनविषति' इति सिद्धम्, सन्नन्तस्य द्वित्वविधानेऽपि सनो द्वित्वप्रयोजकत्वेन तस्मिन् गुणावदेशयोर्द्वित्वे कर्त्तव्ये स्थानिवद्भावात् । तदुक्तम्—तद्भावभावितामात्रेणेह निमित्तत्वमिति । वस्तुतस्तु द्विर्वचनाक्षिप्तः प्रत्ययोऽचीत्यनेन विशेष्यते । परस्मिन्नित्यनुवर्त्तते । 'अमीषां मध्ये देवदत्तात्परमानय' इत्युक्ते यथा सजातीयेन मनुष्यान्तरेणाव्यवहितः पर आनीयते, तथेहापि प्रत्ययान्तरेणाव्यवहितः परो गृह्यते । तेन द्वित्वनिमित्ते अजादौ प्रत्यये प्रत्ययान्तरेणाव्यवहिते परे सति योऽजादेशः स स्थानिवत्स्यादिति सूत्रार्थः । एवञ्च 'चक्रतुः' इत्यादौ न काऽप्यनुपपत्तिः । वक्ष्यमाणज्ञापकबलेन णिचा व्यवहिते प्रवृत्तावपि 'दिदेवनीयिषति' इत्यादावनेकप्रत्ययव्यवधानादप्रवृत्तिः । 'अपीप्यत्' इत्यत्र वर्णव्यवधानेऽपि प्रत्ययान्तराभावात्प्रवृत्तिः । अनुवादे परिभाषानुपस्थानेऽपि निर्दिष्टपरिभाषाकर्त्तव्यस्य निर्वाहश्चेति बोध्यम् । अत एवेह परस्मिन्नित्यनुवर्तते इति न्यासकारः । तथा द्विर्वचनेनेह प्रत्ययाक्षेपं वदन् णिज्भिन्नेन व्यवहिते ज्ञापकस्याप्रवृत्तिं ब्रुवन्कैयटोऽप्येतदभिप्रैति । 'ऊर्णुनविषति' इत्यादिसिद्धये तु तद्भावभावितामात्रेण निमित्ततेति स्वीक्रियते एवेत्यवधेयम् ।

नन्वेवम् 'अरिरिषति' इति न सिध्येत्, ऋधातोः सनि "स्मिपूङ्रञ्ज्वशां सनि"(पा०सू०७-२-७४)इतीटि कृते इस्शब्दनिमित्तकस्य गुणस्य स्थानिवद्भावे "अजादेर्द्वितीयस्य"(पा०सू०६-१-२)इतीसो द्वित्वप्रसङ्गात् । इष्यते तु रिस्शब्दस्य द्वित्वम् । अत्रोच्यते । न हि कार्यी निमित्ततयाऽऽश्रीयते इति "दीधीवेवीटाम्" (पा०सू०१-१-६)इत्यत्रोपपादितत्वान्नेह इस् शब्दो निमित्तम् । अतो न स्थानिवद्भावः । न चैवं सन्नन्तस्य कार्यित्वाद् 'ऊर्णुनविषति' इत्यपि न स्यादिति वाच्यम्, मत्वर्थीयेनेनिना कार्यमनुभवत एव कार्यित्वलाभात् । तत्र तु द्वितीय एकाच् द्वित्वरूपं कार्यमनुभवति न तु सन् । 'अरिरिषति' इत्यत्र तु रिस्शब्दस्यैव कार्यभाक्त्वमिति वैषम्यात् । नन्वेवमचीत्यस्य 'जेघ्रीयते, देध्मी-

यते' इति व्यावर्त्यं न सङ्गच्छते, ध्रीय् ध्मीय् इति द्वितीयाजवधिकस्यैकाचः कार्यितया यङोऽपि द्वित्वनिमित्तत्वाभावादिति चेत्? सत्यम्, 'अधिजगे' इत्येवाज्ग्रहणव्यावर्त्यमस्तु। तत्र हि "गाङ् लिटि"(पा०सू०२-४-४९)" इति द्विलकारकनिर्देशमाश्रित्य लावस्थायामेव गाङादेश इति भाष्ये एव स्पष्टम्। इदञ्च वार्त्तिकमतमनुसृत्योक्तम्, तत्र लिटि लिङीत्यादीनां परसप्तमीत्वाभ्युपगमात्। भाष्यमते त्वार्द्धधातुकीयाः सामान्येन भवन्तीत्यभ्युपगमाल्लिटीत्यादयोपि विषयसप्तम्येवेत्युक्तं स्थानिवत्सूत्रे। तन्मते त्वचीत्यस्य 'जग्ले' इत्यादि व्यावर्त्यं बोध्यम्। तथाहि, "आदेच"(पा०सू०६-१-४५)इति सूत्रेऽशितीति परसप्तमीति पक्षे श(१) इत् इति कर्मधारयाश्रयणाद् "यस्मिन्विधिस्तदादावल्ग्रहणे"(प०भा०) इत्यस्य प्रवृत्त्या आदिशितोऽन्यस्मिन्परे विधीयमानमात्वं लावस्थायां क्रियते। अतो न स्थानिवत्। न चान्तरङ्गत्वात्तिवादिष्वेशि च कृते आत्वं स्यात्तथा च स्थानिवत्त्वं दुर्वारमिति वाच्यम्, "न सम्प्रसारणे सम्प्रसारणंल्लिटि वयो यः" (पा०सू०६-१-३७।३८) इति द्विलकारकनिर्देशमाश्रित्य तं च तत्रानुपयुक्तत्वादिहानुवर्त्य लिटि तु लावस्थायामेवेत्यात्वविधौ व्याख्यानात्। कथं तर्हि 'जेघ्रीयते' 'देध्मीयते' इति भाष्यवृत्त्यादिषु प्रत्युदाहृतमिति चेत्? प्रातिशाख्यरीत्येत्यवेहि। तथाहि,"अनुस्वारो व्यञ्जनं चाक्षराङ्गम्"(ऋ०प्रा०१-५)इत्युक्त्वा"स्वरान्तरे व्यञ्जनान्युत्तरस्य"(ऋ०प्रा०१-५)इति सूत्रितम्। एवञ्च 'नेनिजति' 'अनेनिजुः' इत्यादावेकाच्कस्य धातोः सम्पूर्णस्य द्विर्वचनादभ्यस्ताश्रयम् अड्भावजुसादि सिध्यतु। द्व्यच्के तु मध्यवर्तिनां हलामुत्तराङ्गत्वात्प्रथमाजन्तमेव द्विरुच्यताम्। यथा दरिद्रातौ द इति, जागर्तौ जा इति। न चैतावता क्वचिद्रूपेऽनिष्टमापद्यते, येन प्रातिशाख्यपरिभाषामुपेक्ष्य 'नटभार्यावद्व्यञ्जनानि' इति चाश्रित्य 'दर्' 'जाग्' इत्यादि द्विरुच्यते। अत एव "चतुरश्छयतावाद्यक्षरलोपश्च"(का०वा०) इति सङ्गच्छते इति दिक्। यदा तु षाष्ठभाष्यवार्त्तिकरीत्या द्वितीयाजवधिक एकाच् गृह्यते, "गाङ् लिटि" (पा०सू०२-४-४९) इति च विषयसप्तम्याश्रीयते, अनैमित्तिकमात्वं, ष्यिति तु प्रतिषेध इति वा, अशितीति विषयसप्तमी वा आश्रीयते, तदा 'जेघ्रीयते' 'अधिजगे' 'जग्ले' इति त्रिविधस्यापि व्यावर्त्यस्यासम्भवादचीत्यस्य फलं किमिति विभावनीयं सूरिभिः।

स्यादेतत्। भसेः कसौ "घसिभसोर्हलि"(पा०सू०६-४-१००) इत्युपधालोपे कृते द्वित्वं मा भूदित्येतदर्थमज्ग्रहणं भविष्यतीति चेत्? सत्यसति वा द्वित्वे प्सातिरिति श्रुतौ विशेषाभावात्। ननु दुर्लक्ष्योऽपि

विशेषः सूक्ष्मदृशं प्रति दुर्वार इति चेत् ? न, 'दाति प्रियाणि' 'वीरवद्धातु' इत्यादाविव द्वित्वाभावसम्भवात् । वक्ष्यति हि षष्ठे "लिटि धातोः" (पा०सू०६-१-८) इति सूत्रे, "अनभ्यासग्रहणानर्थक्यं च, छन्दसि वावचनात्" इति । न चैवमपि पाक्षिकं द्वित्वं स्यादेवेति वाच्यम्, दृष्टानुविधानस्यैव छन्दसि कर्त्तव्यत्वात् । अत एव हि "उर्ऋत्" (पा०सू०७-४-७) इत्येव सिद्धे "नित्यं छन्दसि" (पा०सू०७-४-८) इति सूत्रं निष्फलमित्यभियुक्ताः । लोके तु भाष्यमते क्सुर्दुर्लभः । उपधालोपश्च छान्दस एव ।

तदेवं 'जेघ्रीयते' 'अधिजगे' 'जग्ले' इत्येतत्सिद्धये क्रियमाणमज्ग्रहणमेवेह रूपातिदेशत्वे प्रमाणम् । कार्यातिदेशपक्षे हि घ्रीगाग्लाइत्येषामेव भाव्यं द्विर्वेनेति किं तेन ? तथा च वार्त्तिकम्—अज्ग्रहणं तु ज्ञापकं रूपस्थानिवद्भावस्येति । 'देध्मीयते' 'शाशय्यते' इत्यपि 'जेघ्रीयते' इत्यनेन समानयोगक्षेममुदाहरणम् । "ई घ्राध्मोः" (पा०सू०७-४-३१) इति ईकारः, "अयङ् यि क्ङिति" (पा०सू०७-४-२२) इति शीङोऽयङादेशः । अचीत्यस्य प्रत्याख्यानपक्षे तु लक्ष्यानुरोधादेव शब्दाधिकारमाश्रित्येह रूपातिदेशो व्याख्येयः । पूर्वसूत्रादच इति षष्ठ्यन्तस्यानुवृत्तिरिह किमर्थेति चेत् ? 'शुशुवतुः' इत्यादिसिद्धये इति गृहाण । तथाहि, "विभाषा श्वेः" (पा०सू०६-१-३०) इति सूत्रं यद्यपि 'शुशाव' इत्यादौ पित्सु सावकाशं, तथापि 'शूनः' इत्यादौ चरितार्थस्य "वचिस्वपि" (पा०सू०६-१-१५) इत्यस्य बाधकमेव, परत्वात् । "लिट्यभ्यासस्योभयेषाम्" (पा०सू०६-१-१७) इत्यस्य तु न बाधकम् श्वयत्यभ्यासविषयकस्य विधेर्निरवकाशत्वात् । अत एव "विभाषा श्वेः" (पा०सू०६-१-३०) इति सूत्रे "श्वेर्लिट्यभ्यासलक्षणप्रतिषेधः" इति वार्त्तिकमारब्धम् । "लिट्यभ्यासस्य" (पा०सू०(६-१-१७) इति सूत्रे अश्वयतीनामिति पूरणीयमिति तदाशयः । अन्यथा हि विहितप्रतिषिद्धतया विकल्पात् 'शुश्वाय' 'शुश्वियतुः' इत्यनिष्टमपि पक्षे प्रसज्येत । एवं स्थिते "द्विर्वचनेऽचि" (पा०सू०१-१-५९) इत्यत्राच इत्यस्याननुवृत्तौ 'शुशाव' इत्यत्र वृद्ध्यावादेशयोरिव सम्प्रसारणस्यापि स्थानिवद्भावः स्यात् । तथा च 'शिशाव' 'शिशुवतुः' इत्याद्यनिष्टमापद्येत । न च "सम्प्रसारणं तदाश्रयं च कार्यं बलवत्" (प०भा०१२८) इति तिबाद्यवस्थायामेव सम्प्रसारणप्रवृत्तेरचीति नास्तीति वाच्यम्, एवमपि 'व्यतिशुशुवाते' इत्यादौ दोषध्रौव्यात् । न च "विभाषा श्वेः" (पा०सू०६-१-३०) इति लावस्थायामेव प्रवर्त्तते इति वाच्यम्, एवमपि 'ईजाते' 'ईजाथे' इत्यादौ दो-

षतादवस्थ्यात्, लावस्थायां कित्त्वाभावेन तत्र सम्प्रसारणाप्रवृत्तेः। न च कित्त्वमपि प्रवर्त्ततामिति वाच्यम्, अन्तरङ्गैस्तिबादिभिर्बाधितत्वात्। किञ्च "स्वापेश्चङि"(पा०सू०६-१-१८)इति सम्प्रसारणे 'असूषुपत्'इतीष्यते। स्थानिवद्भावे तु सति "न सम्प्रसारणे" (पा०सू०६-१-३७) इति निषेधादभ्यासे उवर्णो न श्रूयेतेति दिक्।

तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणादिह कालावधारणमपि क्रियते। तथा च व्याख्यातम्—द्वित्वे कर्त्तव्ये इति। तेन 'चक्रतुः' इत्यादावुत्तरदले पुनर्यथायथं यणादयो भवन्त्येव। अन्यथा प्रकृतिभाव एव स्यात्। 'निन्यतुः' इत्यत्र तु प्रथमप्रवृत्तस्याप्यपीयङो द्वित्वकालेऽपहारात्पुनः प्राप्तोऽप्ययम् "एरनेकाचः" (पा०सू०६-४-८२) इति यणा बाध्यते। यद्वा, पूर्वमपीयङ् न प्रवर्तते "प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते" इति न्यायात्। यद्वा, आभीयत्वेनेयङोऽसिद्धत्वाद् यण् भविष्यति।

स्यादेतत्। स्थानिवद्ग्रहणं निवर्त्य नञं चानुवर्त्य द्वित्वनिमित्तेऽचि अच आदेशो न स्याद् द्वित्वे कार्ये इत्येव व्याख्यायताम्। एवं हि सति स्थानिवदिति शब्दाधिकारक्लेशोऽपि न भवतीति? सत्यम्, अस्मिन्नपि पक्षे नञः स्वरितत्वं प्रतिज्ञातव्यम्। स्थानिवच्छब्दस्य तु क्लृप्तमेव तदिति लाघवम्। अस्तु वा व्याख्यानद्वयमपि फले विशेषाभावादिति दिक्।

नन्वेवमपि "णौ स्थानिवद्वचनं कर्त्तव्यम् 'नुनावयिषति' 'चुक्षावयिषति' 'तुष्टावयिषति' इत्याद्यर्थम्। अत्राहुः—ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्येति। अस्यार्थः—यौतेः पूङश्च "सनीवन्त" (पा०सू०७-२-४९) इति "स्मिपूङ्रञ्ज्वशाम्" (पा०सू०७-२-७४) इति सूत्राभ्यामिटि कृते 'यियविषति' 'पिपविषते' इत्यत्र "द्विर्वचनेऽचि" (पा०१-१-५९) इति स्थानिवद्भावाद्यकारपकारयोरवर्णपरयोः परतो यद्यप्यभ्यासे उकारो लभ्यते। तस्य चेकारादेशविधानेन ओः पुयण्सूत्रे पकारयकारग्रहणं चरितार्थम्। तथाऽपि वर्गग्रहणं प्रत्याहारग्रहणं जग्रहणं च ज्ञापकं द्वित्वनिमित्तस्याचो णिचा व्यवधानेऽपि स्थानिवद्भावः प्रवर्त्तते इति। तं विना अवर्णपरेषु पुयण्जिषु परेषु उवर्णान्तस्याभ्यासस्य दुर्लभत्वात्। येन नाव्यवधानाच्च क्षिचैवैकेन द्वित्वनिमित्तस्याचो व्यवधानमाश्रीयते। तेन 'निनवनीयिषति' इत्यादौ न स्थानिवत् ल्युट्क्यच्भ्यां व्यवधानात्। एवं णिजन्ताल्ल्युट्क्यच्सन्स्वपि न स्थानिवत्, 'निनावनीयिषति' इत्यादि। न हि णौ कृतं स्थानिवदिति वचनमस्ति

किन्तु ज्ञाप्यमानः स्थानिवद्भावो लाघवादेकेनैव व्यवधाने इत्युक्तम् । इह त्वनेकेन व्यवधानं स्पष्टमेव । यद्यप्यनूद्यमानादेशविशेषणत्वान्निर्दिष्टपरिभाषा नोपतिष्ठत, तथाप्यचीत्यौपश्लेषिकसप्तमीबलादेव तदर्थः पर्यवस्यति । ईषद्विप्रकृष्टलाभे च नात्यन्तविप्रकृष्टस्य ग्रहणमिति बोध्यम् । वस्तुतस्तु 'परस्मिन्' इत्यनु(१)वर्तते इति सूत्रोपक्रमे; एवोक्तम् । एवं च 'अबीभवत्' 'अमीमवत्' 'अरीरवत्' 'अलीलवत्' इत्यादिषु 'बिभावयिषति' इत्यादिषु च "ओः पुयण्" (पा०सू०७-४-८०) इतीत्वं प्रवर्त्तते । ज्ञापनफलन्तु यत्र "ओः पुयण्" (पा०सू०७-४-८०) इत्यस्याप्राप्तिस्तत्र बोध्यम् । तद्यथा—चुक्षावयिषति । उडुरिवाचरति उडवति । उडवतेर्णौ सन् । उडुडावयिषति । चङि—औडुडवत् । तुतावयिषति । अतूतवत् । सौत्रोऽयं "तुरुस्तुशमि" (पा०सू०७-३-९५) इत्यत्र निर्दिष्टः । ऊर्णुनावयिषति । और्णूनवत् । "चिस्फुरोर्णौ" (पा०सू० ६-१-५४) इत्यात्वस्य स्थानिवद्भावात् 'पुस्फारयिषति, अपुस्फरत्' इत्यादि बोध्यम् । तुल्यजातीयापेक्षं च ज्ञापकम् । तेनावर्णपरे हल्येव स्थानिवत्त्वम् । तेन 'अचिकीर्त्तत्' इत्यादौ नातिप्रसङ्ग इति भाष्ये स्थितम् । यत्तु काशिकायां "पूर्वत्रासिद्धम्" (पा०सू०८-२-१) इति सूत्रे वहेर्निष्ठान्तान्णिचि चङि 'औजढत्' इत्युदाहृत्यं क्तिन्नन्तस्य तु 'औजिढत्' इत्युक्तम्' तत्रैव न्यासेऽपि णौ कृतस्य टिलोपस्य स्थानिवद्भाव इति व्याख्यातं; तदुभयं भाष्यविरुद्धत्वादुपेक्ष्यम् । 'अचिकीर्त्तत्' इत्यस्य सिद्धयेऽवर्णपरधात्वक्षरविषयकमेव ज्ञापकमिति स्पष्टं भाष्ये । प्रकृतसूत्रप्रत्याख्यानपरे वार्त्तिके अव्याप्तिरूपदोषोद्भावनपरेण "ओदौदादेशस्य चुटुतुशरादेः" इत्यादिभाष्येणाप्ययमर्थो लभ्यते इत्यनुपदमेव स्फुटीकरिष्यते । अत एव—

'शुष्किका शुष्कजङ्घा च क्षामिमानौजिढत्तथा' ।

इति वैयाघ्रपद्यवार्त्तिके जिशब्द एव पठ्यते । जशब्दपाठस्तु काचित्कः प्रामादिक एवेति बोपदेवो दुर्गसिंहादिसम्मतिप्रदर्शनपूर्वकं कामधेनौ स्थापितवान् । वैयाघ्रपद्यवार्त्तिकं तु "पूर्वत्रासिद्धम्" (पा० सू०८-२-१) इति सूत्रस्य प्रयोजनसङ्ग्रहपरं, तच्च तस्मिन्नेव सूत्रे व्याख्यास्यामः । एवञ्च "अङ्कपदे लक्षणे च" (चु०उ०३९४) इत्यस्य चङि सणिच्कस्य द्वित्वेन 'आञ्चिकुत' इत्येव रूपं न तु 'आञ्चकत' इति । न चैवमदन्तपाठवैयर्थ्यं स्यादिति वाच्यम् । तत्सामर्थ्यादल्लोपस्याप्रवृत्तौ सत्यां वृद्धिपुकोश्च सतोः 'अङ्कापयति' इति रूपाभ्युपगमात् । न चैवं

(१) "अचः परस्मिन् पूर्वविधौ" (पा०सू०१-१-५७) इति सूत्रादित्यर्थः ।

सति 'अङ्कयति' रूपं न स्यादिति वाच्यम् "सूचिसूत्रि"(का०वा०) इत्यादिवार्त्तिके 'सोसूच्यते' 'सोसूत्र्यते' इत्यादिभाष्योदाहरणेन पक्षेऽल्लोपस्याभ्युपगमात् । सूचिसूत्र्यादयो ह्यदन्ताः । अत एवानेकाच्त्वेन षोपदेशत्वाभावान्न षत्वम् । षोपदेशलक्षणे ह्येकाच्त्वं विवक्षितमिति माधवीये स्पष्टम् । एतच्च सेगादिपर्युदासात् ष्वष्कास्विदादिसाहचर्यात् 'सोसूच्यते' इत्यादिभाष्योदाहरणाच्च निर्णीयते' इति वक्ष्यते । एवं वाक्यशेषं समर्थयिष्यामहे । "प्रार्थनाध्यवसायैः" "सम्प्रश्नप्रार्थनेषु लिङ्" इत्यादिप्रयोगाश्चेह मानम् । तदेतत्सकलमभिसन्धायाऽदन्तत्वसाध्र्यक्याय वाऽल्लोप इत्याहुः । उक्तञ्च कामधेनौ—

अग्लोपित्वं स्थानिवत्त्वं चादन्तत्वप्रयोजनम् ।
यत्र त्वेते न विद्येते तत्राल्लोपविकल्पनम् ॥ इति ।

कथयत्याद्यभिप्रायेण पूर्वार्द्धम्, अङ्कयत्याद्यभिप्रायं तूत्तरार्द्धमिति विवेकः । ननु 'आञ्चकत्' इत्यत्र "दीर्घो लघोः"(पा०सू०७-४-९४) इति प्राप्ते'अनग्लोप"(पा०सू०प०७-४-९३) इति निषेधेनाकारश्चरितार्थ इति चेत् ? न, चङ्परे णौ यदङ्गं तस्य योऽभ्यास इति सूत्रार्थव्यवस्थापनात् । इह त्वङ्गावयवस्याभ्यासो न त्वङ्गस्य । एतच्चोर्णुधातौ माधवग्रन्थे स्पष्टम् । अत एव 'आटिटत्'इत्यादौ न दीर्घः । यत्तु दीर्घविधौ हलादिरिति विशेषणं कौमुद्यां दत्तं, तन्निर्मूलम् । 'और्णुनवत्'इत्यादेः सिद्धावपि "सन्वल्लघुनि"(पा०सू०७-४-९३) इत्यत्र चङ्परे इत्यङ्गस्य विशेषणं लघोर्वेति मतभेदेनेष्यमाणे 'अचिचकासत्' 'अचचकासत्' इति रूपद्वयेऽप्यतिप्रसक्तं च । दीर्घविधौ 'चङ्परे'इत्यस्य लघुविशेषणतामाश्रित्यार्थसिद्धकथनं तदिति वा समाधेयम् । सिद्धान्ते तु माधवोक्तरीत्या ऊर्णवयतेरिव चकासयतेरपि दीर्घाभावः स्पष्ट एवेति दिक् ।

एतच्च सूत्रं वार्त्तिककारः प्रत्याचख्यौ । तथाहि, षष्ठे द्वित्वप्रकरणान्ते विप्रतिषेधः पठ्यते—"द्विर्वचनं यणयवायावादेशाऽल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्यः" इति । तथाच 'दध्यत्र'इत्यादौ सावकाशो यण्' 'चयनं''चायकः' 'लवनं 'लावकः' इत्यादौ चायवायावः 'गोदः' 'कम्बलदः' इत्यादावाल्लोपः, 'श्लक्ष्मघ्नः' इत्यादावुपधालोपः, 'कारणा' 'हारणा' इत्यादौ णिलोपः, 'निपूर्त्ता' इत्यादावुत्वं चेत्येतानि नव 'बिभिदतुः' इत्यादौ सावकाशेन द्वित्वेन पूर्वविप्रतिषेधाद्बाध्यन्ते । तेन 'चक्रतुः' 'चिच्राय' 'लुलाव' 'चिचयिथ' 'लुलविथ' 'पपतुः' 'तस्थतुः' 'जग्मतुः, 'जघ्नतुः' 'आटिटत्' 'ततुरिः, 'जगुरिः'इत्यादि सिद्धम् । नन्वेवं 'निन्यतुः' इति न स्यात्, इयङ इष्टापरिगणितत्वादिति चेत् ?

न, "एरनेकाचः" (पा०सू०६-४-८२) इति यणेह भाव्यमिति प्रागपि-यङोऽप्रवृत्तेः "प्रकल्प्य च" इति न्यायात्। तस्माद् "द्विर्वचनेऽचि" (पा०सू० १-१-५९) इति सूत्रं विनाऽपि सर्वं सिद्धमिति।

भाष्यकारास्तु सूत्रं समर्थयन्ते। तथाहि, विप्रतिषेधस्तावदयुक्तः, आल्लोपादीनां नित्यत्वात् द्वित्वस्यानित्यत्वेनातुल्यबलत्वात्। किं च पूर्वविप्रतिषेधे सर्वत्र वचनस्यारम्भणीयत्वादिह तु सुतरां तथेति क्व लाघवम्? अपिच, क्रियमाणमपि वचनं यद्यन्तरङ्गाणामपि बाधकं तर्हि 'निनवनीयिषति' 'दिदवनीयिषति' इत्यादावप्यभ्यासे उकारः श्रूयेत। अथात्रान्तरङ्गत्वादवादेशः, वचनं तु नान्तरङ्गाणां बाधकं किन्तु नित्यानामेवेति ब्रूयाः, एवमपि 'चुक्षावयिषति' इत्यादौ वृद्ध्यावादेशयोः प्रवर्तनादभ्यासे इत्वं स्यात्। तथाच तद्बाधनाय उत्वं विधेयम्। तथात्र त्वया इत्थं न्यासः कर्त्तव्यः "उत्परस्यातः" (पा०सू०७-४-८८) "तिच" (पा० सू०७-४-८९) "ओदौदादेशस्य चुटुतुशरादेः" इति। अभ्यासस्येति वर्त्तते। ओदौतोरादेशो यस्मिन्नङ्गे तस्य योऽभ्यासश्चुटुतुशरादिस्तस्य योऽकारस्तस्य उत्स्यादित्यर्थः। यथा—चुक्षावयिषति, उडुडावयिषति, तुतावयिषति, ऊर्णुनावयिषति, शुशावयिषति, पुस्फारायिषतीति। अत्र "चिस्फुरोर्णौ" (पा०सू०६-१-५४) इत्यात्वम्। यद्यपीह खयः शेषे कृते शरादित्वं नास्ति तथाप्यभ्याससंज्ञाप्रवृत्तिकालेऽस्त्येवेत्यवधेयम्। ओदौदादेशस्येति किम्? "चायृ पूजायां" (भ्वा०उ०९०५) चिचायिषति। "खद स्थैर्ये" (भ्वा०प०५०) चिखादिषति। चुटुतुशरादेः किम्? बिभावयिषति। अत इति किम्? ऋजुम् अणुम् ऋतुम् अंशुं चाख्यत् आर्जिजत्, आणिणत्, आर्चितत्, आंशिशत्' इत्यत्र परत्वाद् वृद्धौ सत्यां टिलोपे सणिचकस्य द्वित्वे कृते मा भूत। अभ्यासस्येति किम्? चुटुत्वित्यादि तर्ह्यङ्गस्यातो वा विशेषणं स्यात्। उभयथापि दोषः-शीतं लुनाति शीतलुः सूर्यः, तमाख्यातुमिच्छति 'शिशीतलयिषति' इत्यत्र तकारादुत्तरस्यात उत्प्रसङ्गात्। नन्वेवमपि "औजढत्" "आञ्जकत्" इत्यादावभ्यासेऽकारश्रवणार्थं यत्नान्तरमास्थेयमेवेति गौरवान्तरं वार्त्तिककारं प्रति कुतो नापादितमिति चेत्? न, तत्रेकार एवेष्ट इत्युक्तत्वात्। सजातीयापेक्षं हि सिद्धान्तेऽपि ज्ञापकम्। अन्यथा 'अचिकीर्त्तत्' इत्यत्राभ्यासेऽकारश्रवणापत्तेः। तस्माद्वार्तिककृता वचनद्वयमपि कर्त्तव्यं स्यादिति स्थितम्। तथा 'जग्लौ' इत्यादिसिद्धये विप्रतिषेधवार्त्तिके वृद्धिरपि पाठ्या। तथा "ओः पुयण्जि"(पा०सू० ७-४-८०) इति तृतीयमपि कर्त्तव्यमेव। 'पिपविषते' 'यियविषति', जि-

जावयिषति' इत्यत्र इत्वं यथा स्यात्। तथाहि। पु यु इत्यनयोः सनि इटि परत्वाद् गुणे कृते पूर्वविप्रतिषेधेनावादेशात्पूर्वं द्वित्वमितीत्वं वक्तव्यमेव। तथा "जुचङ्क्रम्य"(पा०सू०३-२-१५०) इत्यत्र निर्दिष्टात्सौत्राज्जुधातोर्ण्यन्तात्सनि जिजावयिषतीत्यत्र "चुटुतुशरादेः" इत्युत्वे प्राप्ते तद्बाधनायेत्वं वक्तव्यम्। न च तत्र चकारमेव पठिष्यामि न तु जुशब्दमिति वाच्यम् "गुङ् घुङ् ध्वनौ"(भ्वा०आ०९७९) आभ्यां णिजन्ताभ्यां चङि सति च अजूगवत्, अजूघवत, जुगावयिषति, जुघावयिषति इत्याद्यसिद्धिप्रसङ्गात्। किञ्च 'दिदवनीयिषति' 'निनवनीयिषति इत्यत्र "चुटुतुशरादेः" इत्युत्वं स्यादिति तद्वारणाय वचनान्तरमास्थेयम्। अथ वा "सन्यतः"(पा०सू०७-४-७९) इति सूत्राद् गुणो यङ्लुकोः'(पा०सू०७-४-८२) इत्याद्यष्टसूत्र्या विच्छिन्नमपि सन्ग्रहणं मण्डूकप्लुत्या(१)नुवर्त्य सूत्रमतोक्तरीत्या 'येन नाव्यवधान'न्यायेन णिज्भिन्नैर्व्यवधाने उत्वं नेति समाधेयम्। एवमपि तनुशब्दादाचारक्विबन्ताद्धेतुमण्णौ सत्यसति वा यदा सन् तत्र 'तितनविषति' 'तितनावयिषति' इत्यत्राप्युत्वं स्यात्' तद्वारणाय ओदौदादेशस्येति वार्तिकमन्यथैव व्याख्येयम्, तद्यथा, अभ्यासस्येत्यवयवषष्ठी। ओदौदित्यादिस्तु सम्बन्धसामान्ये षष्ठी। उभयमप्यतो विशेषणम्। तदयमर्थः—अभ्यासस्यावयवभूतस्तथा ओदौदादेशस्य यथायथमवयव आदेशो वा योऽत्तस्योद्भवति। 'चुक्षावयिषति' इत्यवयवः। 'पुस्फारयिषति' इत्यादेशः। तथाचाद्ग्रहणमपि सार्थकम्। अन्यथा 'आटिटत्' इत्यादिसिद्धये चङ्परे णौ यदङ्गं तदवयवे लघौ सन्वदतिदेशाद्'आर्जिजत्'इत्यादावतिप्रसङ्गविरहादत इति व्यर्थं स्यादिति दिक्। तथाच सूत्रमतापेक्षया वार्तिकमते महदेव गौरवमिति।

स्यादेतत्। माऽस्तु प्रकृतसूत्रं मा च वार्त्तिकम्। "ओः पुयण्" (पा०सू०७-४-८०) इत्येतदेव ज्ञापयिष्यति अन्तरङ्गं नित्यं च बाधित्वा द्विर्वचनं स्यादिति। ततो द्वित्वे कृते यथाप्राप्तं यणादि करिष्यते। मैवम्, 'निनवनीयिषति' 'दिदवनीयिषति' इत्याद्यसिद्धेः। किञ्च सामान्यापेक्षं ज्ञापकं विशेषापेक्षं वा? आद्ये 'अचिकीर्त्तत्' इति न सिध्येत्। अन्त्ये 'चक्रतुः' इत्यादि न सिध्येत्। तस्मात्सूत्रं कर्त्तव्यमेव। 'चुक्षावयिषति' इत्यादिसिद्धये तु "ओः पुयण्" (पा०सू०७-४-८०) इति ज्ञापकमाश्रयणीयम्। तच्च तुल्यजातीयापेक्षमिति स्थितम्। अत एव वामनोदाहृतम् 'औजढत्' इत्येतद्भाष्यविरुद्धमिति बोपदेवोपद्य-

(१) प्रकृतन्याससूत्रे ओदौदादेशस्य' "चुटुतुशरादेः" इत्यत्रेत्यर्थः।

स्मेन प्रपञ्चितं प्राक् । वस्तुतस्तु वामनोक्तं सम्यगेव । यतः—

बोपदेवमहाग्राहग्रस्तो वामनदिग्गजः ।
कीर्त्तेरेव प्रसङ्गेन माधवेन विमोचितः ॥

तथाहि, किं वामनोक्तौ वार्त्तिकदूषणपरभाष्यविरोधः, किं वा सजातीयविषयज्ञापकतावर्णनभाष्यविरोधः ? नाद्यः, नित्यानित्ययोर्विप्रतिषेधानुपपत्तिरिति, 'दिदवनीयिषति, इत्याद्यसिद्धिरिति च दूषणयोर्भाष्येऽनुक्ततया भाष्यं दूषणान्तराणामप्युपलक्षणमिति स्थिते 'औजढत्' इत्यभ्यासेऽकारादेशोपि विधेयः स्यादिति वार्त्तिके दूषणान्तरस्यापि देयत्वात् । तदेवं वार्त्तिकं रचनीयम्—ओदौदादद्येस्य चुटुतुशरादेरभ्यासस्यैत्सनि । ततोऽल्लोपवतो णिचोऽत् । अल्लोपवतोऽङ्गस्याभ्यासस्य णिचोऽत्स्यात् । औजढत्, आञ्चकदिति । न द्वितीयः, यत्र द्विरुक्तावभ्यासस्योत्तरखण्डस्याद्योऽजवर्णस्तत्र स्थानिवदिति हि भाष्यस्य फलितोऽर्थः । अस्ति च हृतशब्दस्य द्विरुक्तौ प्रक्रियादशायामुत्तरत्रावर्णः । ननु पुनः प्रवृत्तेन टिलोपेनापहारान्नासौ प्रयोगे समवैतीति चेत् ? किं ततः ? नहि प्रयोगसमवायित्वं विशेषणं भाष्ये दत्तम् । एवञ्च 'नुनावयिषति' इत्यादौ द्वित्वप्रवृत्तिवेलायामवर्णाभावेऽपि पश्चाद्भाविनं तमाश्रित्य यथा स्थानिवद्भावस्तथा हृतशब्दस्य पश्चात्तद्विरहेऽपि 'अभ्यजीगपत्' इत्यत्र तु स्थानिवद्भावे सत्यजादितया णिच एव द्वित्वं स्यात् तथाच न द्वित्वप्रवृत्तिवेलायां नापि पश्चादवर्णपरतेति 'अचिकीर्त्तत्' इत्यादाविव न स्थानिवद्भावः । एवञ्चोवर्णस्थानिकस्यैव स्थानिवद्भाव इति दुराग्रहो निर्मूल एव । अत एव "लोपः पिबतेः" (पा०सू०७-४-४) इति सूत्रे 'अपीप्यत्' इत्यत्र पिबतेर्णौ युकि चाङि उपधालोपे च तस्य स्थानिवत्त्वात्पायशब्दस्य द्विरुक्तिरिति वृत्तिग्रन्थोऽपि सङ्गच्छते । एवञ्च 'अञ्चकत्' इत्येव साधु, नतु 'अञ्चिकत्' इति । 'अङ्कापयति' 'आञ्चिकपत्' इत्यादि तु दुरापास्तम्, अल्लोपस्य दुर्वारत्वात् । अकारोच्चारणं त्वभ्यासेऽकारश्रुत्यादिना चरितार्थम् । यदप्यग्लोपित्वं स्थानिवत्त्वं चेत्याद्युक्तम् । तदपि न, चिन्तोरिदित्करणेन "घुषिरविशब्दने" (पा०सू०७-२-२३) इत्येतत्सूत्रस्थभाष्येण च णिज्विकल्पस्य सुस्थतया अल्लोपविकल्पस्य निर्मूलत्वात् । णिजभावपक्षे हि "अनेकाचः" (भो०इ०) इत्याम्प्रवृत्त्या धातोरन्तोदात्तप्रवृत्त्या चाकारः कृतार्थः । 'अङ्क्यात्' इत्यादौ नलोपप्रतिबन्धोऽपि फलमिति दिक् ।

न चैवमपि 'औजढत्' इत्यभ्यासे डकारः श्रूयेत 'पूर्वत्रा-

सिद्धीयमद्विर्वचने' (प०भा०१२६) इत्युक्तेरिति वाच्यम् "उभौ साभ्यासस्य" (पा०सू०८-४-२१) इति तदनित्यताज्ञापनात् । यत्तु पदद्विर्वचनविषयं तदिति बोपदेवः । तन्न, "सुविनिर्दुर्भ्यः" (पा० सू० ८-३-८८) इति सूत्रे "सुपिभूतो द्विरुच्यते" इति वार्त्तिकेन तद्भाष्येण च सह विरोधात् । अत एवाभ्यासे डकारं दुर्गगुप्तादय आहुः । एवञ्च वैयाघ्रपद्यवार्त्तिके 'औजढत्' इति पाठस्य प्रामादिकत्वकल्पनमेव प्रामादिकम् । जिशब्दपाठस्तु क्विना निर्वाह्यः । यत्त्वदन्तेषूनधातौ 'मा भवानुनिनत्' इत्यभ्यासे इकारश्रवणं, तदपि लिपिप्रमादप्रयुक्तम्, अन्यथा "कृत संशब्दने" (चु०उ०१२०) इत्यत्र सुधाधातौ च स्वोक्तेन समं विरोधापत्तेः । तस्माद् 'ऊननत्' इत्येव धातुवृत्तौ साम्प्रदायिकः पाठः । "नोनयतिध्वनयति" (पा०सू० ३-१-५१) इति सूत्रे काशिकापदमञ्जर्योरप्येवमेवेत्यवधेयम् । एवञ्चेह भाष्यकाशिकयोरविरोध एवेति स्थिते सरस्वतीकण्ठाभरणादिग्रन्था अपि निर्बाधा एवेत्यवधेयम् । यत्तु "स्तौतिण्योः" (पा०सू०८-३-६१) इति सूत्रे 'सिषचयिषति' इत्यत्र सिचेर्हेतुमण्णौ गुणे सनि इटि गुणायादेशयोः कृतयोर्गुणस्य स्थानिवद्भावात्सिच्छब्दस्य द्वित्वमिति न्यासकारेणोक्तम् । तत्तूत्तरखण्डऽकाराभावाद्भाष्यविरुद्धं, स्थानिवद्भावं विनाऽप्याभिमतरूपासिद्धेर्निष्फलं चेत्युपेक्ष्यम् । एतेन 'औजढत्' 'आपीप्यत्' इत्यादसिद्धये सामान्यापेक्षतां वदन् 'अचिकीर्त्तत्' इत्यादिसिद्धये चानित्यतां शरणीकुर्वन् सीरदेवोऽप्यपास्तः ॥

इति श्रीशब्दकौस्तुभे प्रथमस्याध्यायस्य प्रथमे
पादे अष्टमाह्निकं समाप्तम् ॥

---

अदर्शनं लोपः (पा०सू० १-१-६०) ॥ स्थाने इत्यनुवर्त्तते । तदर्थश्च प्रसङ्गः इति । प्रसक्तस्यानुच्चारणं लोपसंज्ञं स्यात् । संज्ञाप्रदेशा "लोपो व्योर्वलि" (पा०सू०६-१-६६) इत्यादयः । अर्थस्यैषा संज्ञा न तु शब्दस्य महासंज्ञाकरणसामर्थ्यात् । नन्वेवं प्रदेशेष्वेव लोप इति लौकिकोऽर्थो ग्रहीष्यते, पशुरपत्यं देवतेतिवत् । तत्किं संज्ञयेति चेत् ? न, प्रसक्तस्येत्येवंरूपविशेषलाभाय सूत्रारम्भात् । अन्यथा 'दधि, मधु' इत्यादौ तुगागमप्रसङ्गात् । अस्ति हि तत्र क्विपोऽदर्शनम्, तच्च लोप इति प्रत्ययलक्षणापत्तेः । नन्वेवं वार्तिकमते, भाष्यमते तु प्रत्ययलक्षणसूत्रं नियमार्थम् । तत्कथं दध्यादौ तुक्प्रसङ्गः ? स्थानिवत्सूत्रं तु न तुकं प्रति प्रवर्तयति, षष्ठीग्रहणस्य तत्रानुवर्त्तितत्वात् । अत एव 'ग्रा-

मणीः' इत्यादावण्कार्यं न भवति । तथाच भाष्यरीत्या 'संहितावसानयोर्लोकसिद्धत्वात्' इति वक्ष्यमाणन्यायेनेदं सूत्रं मास्त्विति चेत् ? न, 'घटङ्करोति' 'ग्रामे तिष्ठति' इत्यादौ "ल्यब्लोपे" (का०वा०) इति पञ्चम्यापत्तेः' "अग्निमीळे" (ऋ०सं०१-१-१-१) इत्यादौ "चादिलोपे" इति निघातप्रतिषेधापत्तेश्च । आरब्धे तु सूत्रे तत्र शास्त्रतो लोकतो वा ल्यपञ्चम्यादीनां चाप्रसक्तत्वान्नोक्तदोषः । ननु वार्त्तिकमते प्रसक्तस्येत्युक्तेऽपि 'ग्रामणीः' इत्यत्र वृद्धिः स्यात्, कर्मण्यणः प्रसङ्गसत्त्वादिति चेत् ? न, वासरूपन्यायेन पक्षेऽणः सम्भवेऽपि क्विप्पक्षे तेनाणप्रसङ्गस्य बाधितत्वात् । वैकल्पिकयोरेकानुष्ठाने तस्मिन्प्रयोगे इतरानुष्ठापकशास्त्राप्रामाण्यस्य शास्त्रसिद्धत्वात् ।

प्रत्ययस्य लुक्श्लुलुपः (पा०सू०१-१-६१) ॥ अनेकसंज्ञाकरणसामर्थ्यात्तन्त्रावृत्त्याद्याश्रित्य तद्भावितसंज्ञा इह विज्ञायन्ते । लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमादेतत्संज्ञं स्यात् । संज्ञाप्रदेशा "लुक् तद्धितलुकि" (पा०सू०१-२-४९) "जुहोत्यादिभ्यः श्लुः" (पा०सू०२-४-७५) "जनपदे लुप्"(पा०सू०४-२-८१)इति । विधिप्रदेशेषु भाविसंज्ञाविज्ञानान्नान्योन्याश्रयः । विशेषविहिता अप्येताः संज्ञा लोपसंज्ञां न बाधन्ते । एकसंज्ञाधिकारादन्यत्र सञ्ज्ञानां बाध्यबाधकभावो नास्तीति 'आकडार'सूत्रे वक्ष्यमाणत्वात् । प्रत्ययस्येति शक्यमकर्त्तुम् । न चैवं "लुक् तद्धितलुकि"(पा०सू०१-२-४९) इति विधीयमानमदर्शनं "गोस्त्रियोः" (पा० सू०१-२-४६) इत्यनुवृत्तेर्गोशब्दस्यापि स्यादिति वाच्यम्, "गोरुपसर्जनस्य" इति योगं विभज्य "स्त्रियाः" "लुक् तद्धितलुकि" (पा०सू०१-२-४९) इति सूत्रे स्त्रीग्रहणस्यैवानुवर्तनसंभवात् । अन्यथा प्रत्ययग्रहणे कृतेऽपि गमेर्डोर्लुक् स्यात् । "कंसीयपरशव्ययोर्यञञौ लुक् च" (पा०सू०४-३-१६८)इति लुगपि प्रकृतेर्न भविष्यति "ङ्याप्प्रातिपदिकात्"(पा०सू०४-१-१) इत्यधिकारात्प्रातिपदिकात्परस्य लुग्विधानात् । कृतेऽपि हि प्रत्ययग्रहणे कमेः सः कंसः, परान् शृणाति परशुरिति उकारसकारयोर्लुक् प्राप्त एवमेव परिहार्यः । न चैवं यञञोरेव लुगस्तु विधानसामर्थ्याच्च यञञ्लुकां विकल्पः । वेत्यनुक्तिस्तु यञञ्भ्यां मुक्त औत्सर्गिकस्य श्रवणं माभूदित्येवमर्थमिति वाच्यम्, यञञ्लुकामेककालप्रतीतानामुद्देश्यविधेयभावासम्भवात् । "ट्युट्युलौ तुट् च"(पा०सू०प०४-३-२३) इत्यत्र तु "घकालतनेषु"(पा०सू०६-३-१७)इति "अनद्यतने लङ्" (पा०सू०३-२-१११) इति च ज्ञापकाद्वाक्यभेदमाश्रित्य ट्युट्युलोस्तुड् विधीयते । तस्मादप्रत्ययनिवृत्तये तावत् प्रत्ययग्रहणं न कर्त्तव्यम् ।

स्थानिविशेषसमर्पणार्थमपि न। तथाहि, "अत्रिभृगुकुत्स" (पा०सू०२-४-६५) इत्यत्र तावत् "यस्कादिभ्यो गोत्रे" (पा०सू०२-४-६३) इत्यतो 'गोत्रे' इत्यनुवर्त्तते। तेनाऽत्र्यादिभ्यो यो विहितस्तस्य लुक् सिद्धः। "जनपदे लुप्" (पा०सू०४-२-८१) इत्यत्र तु "ङ्याप्प्रातिपदिकात्" (पा० सू०४-१-१) "प्रत्ययः" (पा०सू०३-१-१) इत्यनुवृत्तेः जनपदे विहितस्य चातुरर्थिकप्रत्ययस्य लुप्। "लवणाल्लुक्" (पा०सू०४-४-२४) इत्यत्र प्रकृतत्वाट्ठक एव। सर्वत्रापि इह 'प्रत्ययः' इत्यस्य षष्ठी कल्पयिष्यते "तस्मादित्युत्तरस्य" (पा०सू०१-१-६७) इति।

स्यादेतत्। सर्वादेशार्थं प्रत्ययग्रहणम्। तेन "यञञोश्च" (पा०सू० २-४-६४) "सुपो धातुप्रातिपदिकयोः" (पा०सू०२-४-७१) इत्यादिषु यत्रानेकाल् प्रत्ययस्तत्र "अलोऽन्त्यस्य" (पा०सू०१-१-५२) इति न भवति। तथा "लवणाल्लुक्" (पा०सू०४-४-२४) इत्यादौ "आदेः परस्य" (पा०सू०१-१-५४) इति न भवतीति। मैवम्, ज्ञापकादेव सर्वादेशत्वसिद्धेः। "घोर्लोपो लेटि वा" (पा०सू०७-२-७) इति हि लोपे प्रकृते "लुग्वा दुह" (पा०सू०७-३-७३) इति लुग्ग्रहणं ज्ञापयति लुगादयः सर्वादेशा इति। अलोऽन्त्यस्य ह्यदर्शनं प्रकृतेन लोपेनापि सिद्धम्। न च वैपरीत्यापत्तिः, असञ्जातविरोधित्वेन लोपेऽलोन्त्यपरिभाषायाः प्रवृत्तेः। सामान्येन लुमद्विषयं ज्ञापकं न तु लुङ्मात्रविषयमिति सर्वं सिद्धम्।

स्यादेतत्। "आगस्त्यकौण्डिन्ययोः" (पा०सू०२-४-७०) इत्यत्र "लुगणिञोः" (पा०सू०५०२-४-५८) इत्यतो लुग्ग्रहणमनुवर्त्तते न वा? आद्ये स्थानिनौ द्वौ आदेशास्तु लुका सह त्रयः, इति वैषम्याद्यथासङ्ख्याभावे एकैकस्य त्रय आदशाः पर्यायेण स्युः। ततश्चागस्तयोऽपि कुण्डिनाः स्युः, कुण्डिनाश्चागस्तयस्स्युः। लुक्च क्रियमाणो ज्ञापकात्सर्वादेश इति उभयत्रापि विभक्तिमात्रं श्रूयेत। अथ निवृत्तं ततोऽगस्तयः कुण्डिना इत्यत्र न कश्चिद्दोषः। किन्तु अगस्तीनां छात्राः 'आगस्तीयाः' इत्यत्र प्राग्दीव्यतीये, अजादौ प्रत्यये विवक्षितेऽप्यगस्त्यादेशस्य निषेधाभावादनिवृत्तावृद्धत्वाच्छो न स्यात्। प्रत्ययग्रहणे सतिं तु लुग्ग्रहणानुवृत्त्या आगस्त्यकौण्डिन्ययोः प्रत्ययांशस्य लुग्भवति, अवशिष्टभागयोर्यथासंख्यमगस्तिकुण्डिनचौ। तेन 'अगस्तयः' 'कुण्डिनाः' इति सिद्धम। प्राग्दीव्यतीये विवक्षिते तु "गोत्रे लुगचि" (पा०सू०४-१-८९) इति लुकि प्रतिषिद्धे तत्सन्नियोगशिष्टत्वादगस्त्यादेशोऽपि निवृत्ते आगस्त्यशब्दाद्वृद्धाच्छे कृते "सूर्यतिष्य" (पा०सू०६-४-१४९) इति यलोपे च आगस्तीयाः' इति सिद्ध्यति। कौण्डिन्ये तु नास्ति विशेषः। निवृत्तेऽपि,

कुण्डिनजादेशे कौण्डिन्यशब्दादपि "कण्वादिभ्यो गोत्रे" (पा०सू०४-२-१११) इत्यणि कृते, "आपत्यस्य" (पा०सू०६-४-१५१) इति यलोपे 'कौण्डिनाः' इत्येव भवितव्यम् । तस्माद् "आगस्त्यकौण्डिन्ययोः"(पा० सू०२-४-७०) इत्यत्रावश्यमनुवर्त्यं लुग्ग्रहणम् । ततश्चेह प्रत्ययग्रहणमपि कर्त्तव्यमेवेति । मैवम्, "आगस्त्यकौण्डिन्ययोः" (पा०सू०२-४-७०) इत्यत्र "यस्कादिभ्यो गोत्रे" (पा०सू०२-४-६३) इति गोत्रग्रहणमनुवर्त्य गोत्रे यो विहितस्तस्य लुगिति व्याख्यानेनापीष्टसिद्धेः । तस्मादत्र प्रत्ययग्रहणं माऽस्त्विति स्थितम् ।

स्यादेतत् । एवं सति लोपसंज्ञया सह लुगादिसंज्ञानां तुल्यव्यक्तिकत्वं स्यात् । तद्भावितस्य संज्ञेति चेत् ? अविशेषाल्लोपेऽपि तथा स्यात् । उच्यते । असञ्जातविरोधित्वाल्लोपसंज्ञा तावददर्शनमात्रस्य भवति । लुगादिसंज्ञासु परमनेकसंज्ञाप्रणयनसामर्थ्यात्तद्भावितग्रहः । तेन संज्ञासङ्करो नेत्युक्तम् । सति तु सङ्करे 'हन्ति' इति शब्लुकि "श्लौ" (पा०सू०६-१-१०) इति द्वित्वं स्यात् । 'जुहोति' इत्यत्र श्लौ सति "उतो वृद्धिर्लुकि हलि" (पा०सू०७-३-८९) इति वृद्धिः स्यात् । न च तत्राभ्यस्तस्य न(१)इत्यनुवृत्तेः'योयोति' 'नोनोति' इत्यादाविव वृद्धिर्न भविष्यतीति वाच्यम्, संज्ञासंकरपक्षे तदनुवृत्त्यसम्भवात् । अन्यथा सूत्रस्य निर्विषयतापत्तेः । न च यौतिरौतीत्यादिरवकाशः, संज्ञासङ्करे तत्रापि द्वित्वस्य दुर्वारत्वात् । लोपसंज्ञा तु लुगादिसंज्ञानां व्यापिकेत्युक्तम् । तेन 'पञ्च' इत्यादौ प्रत्ययलक्षणं सिध्यतीति दिक् ।

भाष्यमते तु यद्यपि स्थानिवत्सूत्रेण 'पञ्च' इत्यादि सिद्धम्, तथापि 'सुदृषद् ब्राह्मणः' इत्यत्र वक्ष्यमाणरीत्योत्तरपदाद्युदात्तत्वस्योपधादीर्घस्य च वारणाय लोपे सति प्रत्ययलक्षणमेवेति नियमोऽवश्यं प्रवर्तनीयः । तथाच तत्र लुकः प्रत्ययसंज्ञाऽप्यादर्त्तव्येत्यवधेयम् ।

प्रत्ययलोपे प्रत्ययलक्षणम् (पा०सू०१-१-६२)॥ प्रत्यये लुप्तेऽपि तदाश्रयं कार्यं स्यात् । "अल्विध्यर्थमिदम्" इति वार्त्तिकमतम् । तथाहि, 'अतृणेट्' इत्यत्र तिपो हल्ङ्यादिलोपे कृते "तृणह इम्" (पा०सू० ७-३-९२) इति सूत्रेण विधीयमानो हलादिपित्सार्वधातुकनिमित्त इमागमोऽस्माद्वचनाद्भवति । स्थानिवत्सूत्रेण तु न सिध्यति, अल्विधि-

(१) "नाभ्यस्तस्याचि पिति सार्वधातुके" (पा०सू०७-३-८७) इति सूत्रादिति शेषः ।

त्वात्। नन्वेवं प्रत्ययलक्षणमपि न स्यात्, "वर्णाश्रये नास्ति प्रत्यय-लक्षणम्" (प०भा०२१) इति निषेधादिति चेत्? न, नह्येवंरूपं वचनम-स्ति, किन्तु प्रकृतसूत्रे प्रत्ययलोपे तल्लक्षणमित्येवास्तु, यद्वा तल्लक्ष-णमित्यपि मास्तु, स्थानिवदित्यनुवृत्त्यैवेष्टसिद्धेः। एवं सति प्रत्ययल-क्षणमित्युक्तेः फलं तत्पठ्यते। पुनः प्रत्ययग्रहणसामर्थ्याद्धि यत्कार्यं प्रति प्रत्ययस्यासाधारणं रूपं निमित्ततयाऽऽश्रीयते सुप्त्वतिङ्त्वादि, तदेव भवतीति लभ्यते। तेन 'गवे हितं गोहितम्' इत्यवादेशो न भव-ति, तद्विधावच्त्वमात्राश्रयणात्, तस्य च प्रत्ययाप्रत्ययसाधारण्यात्। अथात्र "न लुमता" (पा० सू०१-१-६३) इति निषेधः। तर्हि 'सुयशाः' इत्यत्र "विसर्जनीयस्य सः" (पा०सू०८-३-३४) स्यात, 'सुवृड्' इत्यादौ "खरि च" (पा०सू०८-४-५४) इति चर्त्वं स्यादिति दिक्।

इमागमे तु हलादौ सार्वधातुके इति प्रत्यय एव प्राधान्येनाश्रीयते इति वैषम्यम्। तस्माद्वर्णप्राधान्ये प्रत्ययलक्षणं नास्ति प्रत्ययप्राधान्ये त्वस्तीति विवेकः। अनेनैव न्यायेन "न धातुलोप" (पा०सू०१-१-४) इ-त्यत्र धातुलोप इति बहुव्रीहिणैव सिद्धे आर्द्धधातुकग्रहणसामर्थ्यात्त-स्वेन निमित्तता लभ्यते। तेन 'धिन्विकृण्व्योर्विचि' "लोपो व्योः" (पा०सू०६-१-६६)इति वलोपस्य वलिनिमित्तत्वात्तत्रार्द्धधातुकतया विचो निमित्तत्वाभावाद् गुणो भवत्येव। तेन, सुधे, सुधेनौ, सुधेनः' 'सुकः, सुकर्णौ, सुकर्णः' इत्यादि भवति। पठन्ति च—

सुधे सुधेवारिवधात्सुराणां सुकारणे लाघवतश्च रामः।
विशेषणे द्वे य इहादिकर्त्तुर्वेदेदधीती स हि कैयटीयः॥ इति।

न च 'तोतोर्त्ति' इत्यादिव्यावृत्त्या आर्द्धधातुकग्रहणस्य सार्थकया-त्कथं सामर्थ्यमिति वाच्यम्, यङ्लुकश्छान्दसत्वात्। भाषाविषयत्व-पक्षे त्वार्द्धधातुकग्रहणमावर्त्य सामर्थ्यमुपपादनीयम्। नन्वेतत् "क्ङिति च" (पा०सू०१-१-५) इत्येतत्सूत्रस्थभाष्येण सह विरुद्धम्। पूर्वस्मि-न्योगे यदार्द्धधातुकग्रहणं तदनवकाशमिति तत्रोक्तत्वादिति चेत्? न, अनास्थया तथोक्तत्वादित्याहुः।

तदुपष्टम्भेनात्र विजेवानभिमत इत्येव किं न स्यादिति चिन्त्यम्।

क्विपि तु ऊठ्। तेन 'धिनूः' 'धिन्वौ' 'धिन्वः' 'कृणूः' 'कृण्वौ' 'कृण्वः' इति भवति। 'सुधी' 'सुधिनौ, सुधिनः' 'सुकीः, सुकृणौ, सुकृणः' इत्या-दि तु न भवत्येवेत्याहुः।

यङ्लुको भाषाविषयत्वे आर्द्धधातुकग्रहणस्य 'तोतोर्त्ति' इत्यत्र चा-रितार्थ्यादावृत्तौ च मानाभावाद् गुणनिषेधप्रवृत्त्या 'सुधी, 'सुधिनौ'

इत्येवास्तु । कृणोतेस्तु दीर्घे 'सुकीः, सुकीर्णौ, सुकीर्णः' इत्यादि भवत्वित्यपि चिन्त्यम् ।

नन्वेवं 'परिवीः' इत्यत्र तुग्दीर्घौ पर्यायेण स्याताम् । अनेनैवोभयविधाने पौर्वापर्याभावेन "विप्रतिषेधे परम्" (पा०सू०१-४-२) इत्यस्याप्रवृत्तेः । सत्यम्, शास्त्रातिदेशस्य व्यपदेशातिदेशस्य वाश्रयणाददोषः । यद्वा, सति प्रत्यये यत्कार्यं भवितुमर्हति तदेवातिदिश्यते इति 'परिवीय' इत्यादाविव 'परिवीः' इत्यत्रापि दीर्घ एव भवति न तु तुगिति कार्यातिदेशेऽप्यदोषः ।

भाष्यकारास्त्वाहुः—तृणहइमर्थं तावन्नेदं सूत्रम्, स्थानिवत्सूत्रेणैव गतार्थत्वात् । न चाल्विधिरयम्, हलीत्यस्य निवर्त्तनात् । न चैवं 'तृणहानि' इत्यत्रापीम् स्यादिति वाच्यम् "नाभ्यस्तस्याचि" (पा०सू० ७-३-८७) इत्यतोऽचि नेत्यनुवर्त्तनात् । नापि 'आशीः' इत्यत्र "शास इदङ्हलोः" (पा०सू०६-४-३४) इतीत्वार्थमिदम्, आशासः क्वावुपसंख्यानेनैव सिद्धेः । तद्धि त्वयाऽपि वाच्यम् । "शास इदङ्हलोः" (पा०सू०६-४-३४) इत्यत्र शासिमात्रग्रहणमिति पक्षे नियमार्थम्—आशासः क्वावेव यथा स्यात् 'आशास्ते' इत्यादौ मा भूदिति । यस्माच्छासेरङ् विहितस्तस्यैवाङ्साहचर्यादित्वविधौ ग्रहणमिति पक्षे यथा 'आशास्ते' इत्यादौ न भवति, तथा क्विप्यपि न स्यादिति विध्यर्थम् । तस्मात्प्रत्ययलोपे सति प्रत्ययलक्षणमेवेति नियमार्थमिदं सूत्रम् । प्रत्ययाप्रत्ययसाधारणं रूपमाश्रित्य यत्कार्यं विधीयते तन्निवृत्तिः फलम् । तेन शोभना दृषदोऽस्य प्रासादस्य सुदृषत् । अत्र "सौमनसीअलोमोषसी" (पा०सू०६-२-११७) इति सूत्रेण सुशब्दात्परस्य मन्नन्तस्यासन्तस्य चोत्तरपदस्य बहुव्रीहौ विधीयमानमाद्युदात्तत्वं न भवति । अत्र हि लुप्तेऽपि जसि स्थानिवद्भावेनासन्तमुत्तरपदमस्त्येव । किन्त्वस् इति रूपं प्रत्ययाप्रत्ययसाधारणम्, "अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति" (प०भा०१६) इति वक्ष्यमाणत्वात् । अतो नियमेनाद्युदात्तव्यावृत्तिः सिद्धा । तथाच "नञ्सुभ्याम्" (पा०सू०६-२-१७२) इत्यन्तोदात्तं पदं भवति ।

इदन्त्ववधेयम् । न केवलं स्वरार्थमेवेदं सूत्रम् । किन्तूक्तोदाहरणे एव प्राप्नुवन् "अत्वसन्तस्य" (पा०सू०६-४-१४) इत्युपधादीर्घोऽपि उक्तनियमेनैव व्यावर्त्यः । वार्त्तिकमते तु उक्तस्वरस्य दीर्घव्यावृत्तेश्च सिद्धये उपायान्तरमन्वेषणीयमिति ।

ननु यदि नियमार्थं सूत्रं तर्हि 'पञ्च' इत्यत्र प्रत्ययलक्षणेन पदत्व-

मितिवृत्तिः कथं योज्या ? एवं "समासत्वात्प्रातिपदिकत्वम्" "स्नुक्रमोः" (पा०सू०७-२-३६) इतीट्" "उभयप्राप्तौ कर्मणि" (पा०सू०२-३-६६) इतिकर्मणि षष्ठी इत्यादयोऽपि तत्रतत्राऽभियुक्तग्रन्थाः कथं योज्या इति ? अत्रोच्यते, योऽस्माकं नियमविधिः स मीमांसकरीत्या परिसङ्ख्याविधिरिति तावत्स्पष्टं विवरणादौ। तत्र दोषत्रयं—स्वार्थहानिः, परार्थपरिकल्पना, प्राप्तबाधश्चेति। तच्च यद्यगत्या सह्यते, इति पक्षस्तदा नियमविधेर्निषेध एवार्थः। प्रत्ययलक्षणशब्देन तद्भिन्नं लक्ष्यते, भवतीत्यनेन तु न भवतीति। तथाच स्थानेऽन्तरतमसूत्रे भाष्यम्—"नानेनान्तरतमा निवर्त्यन्ते" 'अपि तु' 'अनन्तरतमा निवर्त्यन्ते" इति। अत एव वार्त्तिककारोपि वक्ष्यति—"उभयप्राप्तौ कर्मणीति प्रतिषेधेऽकादिप्रयोगेऽप्रतिषेधः"(का०वा०) इति। अस्मिन्पक्षे"उभयप्राप्तौ"(पा०सू०२-३-६६) इति परिशेषिता षष्ठीत्यादिक्रमेण व्याख्येयं, नतु विहितेति। यदि तु दोषत्रयगौरवपरिहारार्थं प्रत्ययलक्षणसूत्रं यथाश्रुतं व्याख्याय अतएव ज्ञापकात स्थानिवत्सूत्रस्य प्रत्ययलोपेतराविषयकता कल्प्यते सामान्यपुरस्कारप्रवृत्तस्य शास्त्रस्य विशेषतात्पर्यं हि त्वयाऽपि कल्प्यमेव। अन्यथा विकल्पापत्तेः। भाट्टमते "न तौ पशौ करोति" इत्यत्र यथा। "पदे जुहोति" इत्यादिभिराहवनीयविधेरिव विशेषविधिना सामान्यविधेः सङ्कोचसम्भवाच्च। न चैवं सामान्यस्य विशेषे उपसंहारापत्तिः, सामान्यशास्त्रप्रणयनवैयर्थ्यापत्तेः। वेदे तु न कश्चित्प्रणेता येनैवं पर्यनुयुज्येतेति चतुर्द्धाकरणस्याग्नेये उपसंहारो मीमांसायामभ्युपेतः। कल्पसूत्रकारास्तु तत्रापि व्युत्था एव। तथाच भगवता कात्यायनेन सूत्रितम् "अविशेषादुभौ वा" (का०श्रौ०सू०) इति। एवञ्च सामान्यशास्त्रस्य विशेषलक्षणाया उभयवाचत्वात्तथैवोपपत्तौ दोषत्रयं न सोढव्यमिति पक्षस्तदोदाहृतग्रन्थाः सम्यगेव। नैयायिकमते तु तात्पर्यसङ्कोचस्थले लक्षणा नास्त्येवेति निर्विवादम्, विशेषधर्मप्रकारकबोधस्योद्देश्यतायामेव तदभ्युपगमात्। सामान्यप्रकारकस्य विशेषविशेष्यकस्यापि लक्षणां विना निर्वाहादिति सुधीभिराकलनीयम्।

न लुमताङ्गस्य (पा०सू०१-१-६३) ॥ लुमता शब्देन प्रत्ययलोपे सति प्रत्ययलक्षणमङ्गस्य कार्यं न स्यात्? वार्त्तिकमते पूर्वसूत्रप्राप्तस्यायं निषेधः। भाष्यमते तु स्थानिवत्सूत्रप्राप्तस्य। नियमविधानां तात्पर्यसङ्कोचकत्वमात्रं न तु निषेधकतेति प्रागुक्तरीत्या तु भाष्यमतेऽपि पूर्वसूत्रेण प्राप्तस्यायं निषेध इत्यवधेयम्। एवमग्रेपि। 'गर्गाः'।

'मृष्टः' 'जुहुतः' । इह यञ्‌शपोर्लुमता लुप्तयोरङ्गस्य गुणवृद्धी न भवतः । लुमतेति किम् ? कार्यते, हार्यते । "णेरनिटि" (पा०सू०६-४-५१) इति णिलोपे कृते णिजपेक्षा वृद्धिर्भवत्येव । अमार्ट् । हल्ङ्यादिलोपे नित्यत्वात्कृतेऽपि वृद्धिः । अङ्गस्येति किम् ? 'पञ्च' 'सप्त' अत्राङ्गस्येति स्वर्यते । तेनाङ्गाधिकारो गृह्यते "स्वरितेनाधिकारः" (पा०सू०१-३-११) इति वचनादिति वार्तिककाराः । भाष्ये तु इदं दूषितम् । तथाहि, एवं सति 'उत्क्राम' इत्यत्र "अतो हेः" (पा०सू०६-४-१०५) इति हेर्लुकि कृते "क्रमः परस्मैपदेषु" (पा०सू०७-३-७६) इति दीर्घो न स्यात् । तथा 'जिगमिष' इत्यत्र "गमेरिट् परस्मैपदेषु" (पा०सू०७-२-५८) इतीण् न स्यात् । तथा 'विवृत्स' इत्यत्र "न वृद्भ्यश्चतुर्भ्यः" (पा०सू०७-२-५९) इतीण्निषेधो न स्यात् । तस्मात् "न लुमता"(पा०सू०१-१-६३) इत्यत्र नाङ्गाधिकारः प्रतिनिर्दिश्यते, किन्तु लुमता लुप्ते प्रत्यये यदङ्गं तस्याङ्गमनाङ्गं च सर्वं प्रतिषिध्यते इति । न चैवमुक्तदोषतादवस्थ्यमिति वाच्यम्, 'उत्क्राम' इत्यत्र लुप्तं परस्मैपदम् । तदपेक्षया यदङ्गं शबन्तं न तस्य दीर्घो विधीयते, किन्तु क्रमेः । स तु शपं प्रत्यङ्गं न तु लुप्तं प्रतीति निषेधाप्रवृत्तौ प्रत्ययलक्षणेन दीर्घप्रवृत्तेः । एवं 'जिगमिष' 'विवृत्स' इत्यत्रापि इटो विधिप्रतिषेधौ भवत एव । तौ हि लुमता लुप्ते परस्मैपदे यदङ्गं सन्नन्तं तस्य न क्रियते, किन्तु सकारादेः प्रत्ययस्य । स चाङ्गं नेति स्पष्टमेव ।

स्यादेतत् । पक्षद्वयेऽपि "ञ्नित्यादिर्नित्यम्" (पा०सू०६-१-१९७) "कितः" (पा०सू०६-१-१६५) "पथिमथोः सर्वनामस्थाने" (पा०सू०६-१-११९) इति त्रिसूत्र्या विधीयमानाः स्वरा लुकि कृतेऽपि प्राप्नुवन्ति । तथाहि, गर्गाः, बिदाः, । यञञोर्लुक् । उष्ट्रग्रीवाः । "इवे प्रतिकृतौ" (पा०सू०५-३-९६) इति कनो "देवपथादिभ्यश्च" (पा०सू०५-३-१००) इति लुप् । ततो "ञ्नित्यादिः" (पा०सू०६-१-१९७) इत्याद्युदात्तता प्राप्नोति । तथा अत्रेरपत्यानि अत्रयः । "इतश्चानिञः" (पा०सू०४-१-१२२) इति ढकः "अत्रिभृगुकुत्स" ( पा०सू०२-४-६५) इत्यादिना लुक् । ततः कितस्तद्धितस्यान्त उदात्तो भवतीत्यन्तोदात्तता प्राप्नोति । सा हि प्रत्ययग्रहणे तदन्तग्रहणात्तद्धितान्तस्य विधीयते । न च सिद्धान्तेऽपि फिट्स्वरेणान्तोदात्ततया भाव्यमेवेति वाच्यम् "राशादिभ्यां त्रिप्" (उ०सू०५१६) "अदेस्त्रिनिश्च" (उ०सू०५१७) इत्युणादिसूत्रेण ह्यदेश्चकारानुकृष्टे त्रिप्प्रत्यये तस्य पित्त्वेनानुदात्तत्वादाद्युदात्तोऽत्रिशब्दः । तथाच प्रयुज्यते "अत्रेरिव शृणुतं पूर्वस्तुतिम्"

यथा "शृणोरत्रेः कर्माणि कृण्वतः" इति । तथा ढको लुक्यप्याद्युदात्त एव प्रयुज्यते, 'अत्रीणां सोममद्रिवः" इति, "अत्रीणां शृणुतं हवम्' इति च। त्रिन्प्रत्ययान्तस्त्वन्तोदात्तो नकारान्तश्चेत्यन्यदेतत्। सोऽपि प्रयुज्यते "दूरे वा ये अन्ति वा के चिदत्रिणः" इति। तथा, पन्थाः प्रियो यस्य पथिप्रियः। "सुपो धातु" (पा०सू०२-४-७१) इति सोर्लुकि "पथिमथोः सर्वनामस्थाने" (पा०सू०६-१-११९) इत्याद्युदात्तता प्राप्नोति। न ह्येषा त्रिसूत्री, अङ्गाधिकारस्था, येन "न लुमता" (पा०सू० १-१-१६३) इति निषेधः प्रवर्त्तते। नाप्येतद्वस्तुतोऽङ्गस्य कार्यम् "सुप्तिङन्तम" (पा०सू०१-४-१४) इति पदसंज्ञावदुक्तस्वराणां प्रत्ययान्त कार्यत्वात्। नन्वस्तु "क्तितः" (पा०सू०६-१-१६५) इति तथा, इतरत्तु द्वयं 'ञ्निति' 'सर्वनामस्थाने' इति सप्तमीनिर्देशाद्वस्तुतोऽङ्गस्य कार्यम्भवत्येवेति चेत्? न, ञ्निदन्तस्यादेरित्यादिक्रमेण प्रत्ययान्तस्यैव तद्विधानात्, "सौवर्येः सप्तम्यस्तदन्तसप्तम्यः" इति सिद्धान्तात्। एतच्च "भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति" इति पूर्वग्रहणेन ज्ञाप्यते, इति तत्रैव भाष्ये स्पष्टम्। अत एव "उपोत्तमं रिति" (पा०सू०६-१-२१७) इत्याद्युदात्तत्वम्, 'आहवनीयः' इत्यादौ रिदन्तस्योपोत्तमे नीशब्दस्येकारे प्रवर्त्तते "चङ्यन्यतरस्याम्" (पा०सू०६-१-२१८) इति चङन्तस्य। न चैवं "चतुरश्शसि"(पा०सू०६-१-१६७) इत्युदात्तत्वं शसन्तस्य स्यात्तथाच 'षट्त्रिंशांश्च चतुरः कल्पयन्तः' इत्यादौ चतुर इति पदं मध्योदात्तमिष्यमाणं न सिद्ध्येदिति वाच्यम्, तत्र शस्ग्रहणसामर्थ्यात्तदन्तसप्तमीत्वबाधात्। इतरथा हि "ऊडिदम्पदाद्यप्पुम्रैद्युभ्यश्चतुर्भ्यः" इत्येव ब्रूयात्। तत्र ह्यसर्वनामस्थानग्रहणानुवृत्तेः शस एव भविष्यति, "षट्त्रिचतुर्भ्यो हलादिः" (पा०सू०६-१-१७९) इति हलादेः सिद्धान्तेप्युदात्तविधानात्। न चैवं स्वरविधिषु षष्ठ्येव निर्दिश्यतामिति वाच्यम्, रितश्चङ इत्याद्यपेक्षया रिति चङीत्युक्तावर्द्धमात्रालाघवसम्भवेन सप्तमीप्रयोगादिति।

अत्रोच्यते। अङ्गाधिकारनिर्देशपक्षे तावदुक्तदोषरिहाराय वार्त्तिकमारभ्यते"लुमति प्रतिषेधे एकपदस्वरस्योपसंख्यानम्"(का०वा०)। "सर्वामन्त्रितसिज्लुक्स्वरवर्जम्'(का०वा०)। प्रयोजनं ञ्निति किल्लुक्स्वराः "पथिमथोः सर्वनामस्थाने लुकि" इति। अस्यार्थः लुमति लुमत्संज्ञया प्रतिपादितेऽदर्शने यः प्रतिषेधः तस्मिन्नेकपदाश्रयो यः स्वरस्तस्योपसंख्यानम्। प्रत्ययलक्षणेन प्राप्तोऽप्येकपदस्वरो न भवतीत्यर्थः। पदद्वयाश्रयस्तु स्यादेव। यथा 'दधि तिष्ठति' इत्यत्र "पदस्य" (पा०सू०८-१-१६) "पदात्"

(८-१-१७)इत्याधिकृत्य विहितः"तिङ्ङतिङः"(पा०सू०८-१-२८)इति निघातः। अत्र हि दधि इत्यस्य पदसंज्ञार्थं प्रत्ययलक्षणमपेक्ष्यते। तथा 'इह तिष्ठ' इत्यादौ तिङन्तत्वलाभायापि। नन्वेवं 'सर्वस्तोमोऽतिरात्रः' इत्यत्र "सर्वस्य सुपि" (पा०सू०६-१-१९१) इत्याद्युदात्तत्वं न स्यात्। तथा 'सर्पिरागच्छ' 'सप्तागच्छत' इत्यत्र "आमन्त्रितस्य च" (पा०सू०६-१-१९८) इति षाष्ठमाद्युदात्तत्वं न स्यात्। तथा 'मा हि दातां, मा हि धाताम्' इत्यत्र "आदिः सिचोऽन्यतरस्याम्" (पा०सू०६-१-१८७)इत्याद्युदात्तत्वं न स्यादित्यत आह सर्वेत्यादि। इदं स्वरत्रयं विहाय स्वरान्तरे प्रतिषेध इत्यर्थः। न च 'सर्वस्तोमः' इत्यत्र "बहुव्रीहौ प्रकृत्या पूर्वपदम्"(पा०सू०६-२-१) इति पदद्वयस्वरोऽयमिति वाच्यम् "सर्वस्य सुपि" (पा०सू०६-१-१९१) इति यदाद्युदात्तत्वं तस्यैव ह्यनेन प्रकृतिभावमात्रं कर्त्तव्यम्, तथा च तत्प्राप्तिरवश्योपपादयितव्येति भावात्। न च सर्पिश्शब्दस्यामन्त्रितस्वरं विनाऽप्याद्युदात्तता लब्धुं शक्या "अर्चिशुचिहुसृपिछादिछर्दिभ्यः" (उ०सू०२७३)इत्यौणादिके इसि प्रत्यये कृतेऽन्तोदात्तत्वात्। अव्युत्पत्तिपक्षेऽपि फिट्स्वरेण तथात्वात्। न च "नब्विषयस्य" (फि०सू०२६) इत्याद्युदात्तः 'अनिसन्तस्य' इति पर्युदासात। कैयटेन तु सर्पिःशब्दस्य घृतादित्वं किमर्थं कल्पितमिति चिन्त्यम्। ननु सप्तशब्दः "सप्यशूभ्यां तुट् च" (उ०सू०१६३) इति कनिनन्तो व्युत्पादितः। तथाच नित्त्वात् आद्युदात्तः, अव्युत्पत्तिपक्षेऽपि तथैव "त्रः संख्यायाः" (फि०सू०२८) इति वचनादिति चेत ? न, उभयथाऽपि घृतादित्वेनान्तोदात्तत्वात्। तथा च प्रयुज्यते "सप्त युञ्जन्ति रथमेकचक्रम्" इति। इह सिज्लुग्ग्रहणं माऽस्तु। "गातिस्था" (पा०सू०२-४-७७) इत्यत्र सिज्ग्रहणसामर्थ्याल्लुकि स्वरः सिद्धः। अन्यथा हि लाघवार्थं च्लेरेव लुकं विदध्यात्। एवं हि 'अभूत' 'अपात्' इत्यादिसिद्धये "अस्तिसिचोऽपृक्ते" (पा०सू०७-३-९६) इत्यत्र सकारान्तरप्रश्लेषक्लेशोऽपि नाश्रयणीय इति। न चैवं च्लेर्लुकि "आतः" (पा०सू०३-४-११०) इति सूत्रं विध्यर्थमेव स्यान्न तु नियमार्थम्, तथाच तत्र लङ्निवृत्तये सिलुकीति वक्तव्यं स्यादिति विपरीतगौरवापत्तिरिति वाच्यम् ? ङित इत्यनुवृत्त्यैव लटो व्युदस्तत्वात्। तस्मात्सर्वामन्त्रितस्वरवर्जमित्येवावश्यकम्। वार्त्तिकारम्भस्य प्रयोजनमाह—प्रयोजनमिति। ञिनिशब्दयोरिकार उच्चारणार्थः "लुट्तिथोः" (पा०सू०३-४-१०७) इतिवत्। एते स्वरा निवर्त्यमानतया प्रयोजनमित्यर्थः। प्रयोजनान्तरमाह—पथिमथोरिति। तदेवं वचनबलेन त्रिसूत्र्या अतिव्याप्तिरुद्धर्त्तव्येतीह सूत्रे स्थितम्।

३४

वस्तुतस्तु नैतदर्थं वचनं क्रियते ज्ञापकबलेनैव 'बिदाः' 'गर्गाः'इत्यादेः सिद्धत्वात्। तथाच "संज्ञायामुपमानम्" (पा०सू०६-१-२०४) इति सूत्रे वार्त्तिकम्—"उपमानस्याद्युदात्तत्ववचनं ज्ञापकमनुबन्धलक्षणे स्वरे प्रत्ययलक्षणप्रतिषेधस्य" इति। अस्मिंश्च पक्षे "पथिमथोः सर्वनामस्थाने लुमता लुप्ते प्रत्ययलक्षणं न भवति" इति वचनमेव कर्त्तव्यम्। न ह्ययमनुबन्धलक्षणः स्वरः, येनोक्तज्ञापकबलेन वार्येत। न च स्वरमात्रविषयकं ज्ञापकमिति वाच्यम्, आमन्त्रितस्वरसिज्लुक्स्वरयोरसिद्धिप्रसङ्गात्। न चैवमपि सप्तमीनिर्दिष्टे स्वरे प्रत्ययलक्षणं न भवतीति ज्ञाप्यतामिति वाच्यं, 'सर्वस्तोमः' इत्यत्राद्युदात्ताऽसिद्धिप्रसङ्गात्। यद्वा, अस्तु सप्तमीनिर्दिष्टस्वरविषयकमेव ज्ञापकम्।"सर्वस्य सुपि" (पा०सू०६-१-१९१) इति सप्तमीमपनीय सुप इति षष्ठी पाठ्या। तथाच पथिस्वरार्थं वचनं नारम्भणीयम्। ञ्नित्कित्स्वरार्थं तूभयथाऽपि नारम्भणीयमिति सर्वं सुस्थम्। पक्षद्वयमपीदं "संज्ञायामुपमानम्" (पा०सू०६-१-२०४) इति सूत्रे भाष्यकारैः स्पष्टमुक्तम्। तदयं निर्गलितोर्थः—त्रिसूत्र्यां शङ्कितस्यातिव्याप्तिदोषस्य वचनेनोद्धारमापातत उक्त्वा ज्ञापकेनैवेष्टसिद्धिरिति निष्कर्षोऽग्रे कृत इति। एतच्च समाधानमङ्गाधिकारो निर्दिश्यत इति पक्ष इव वस्तुतोऽङ्गस्य यत्कार्यमिति निष्कृष्टपक्षेऽपि तुल्यम्। अत एव "संज्ञायामुपमानम्" (पा०सू०६-१-२०४) इति सूत्रे भाष्यकारैः पक्षद्वयसाधारण्येनैवोक्तज्ञापनवार्तिकं योजितम्। प्रकृतसूत्रस्थभाष्यकैयटयोस्तु निष्कृष्टपक्षे उक्तदोषप्रसङ्ग एव नास्तीति लभ्यते। तत्रेत्थमाशयमभियुक्ता वर्णयन्ति—ज्ञापकं द्विविधं सामान्यापेक्षं विशेषापेक्षं च। तत्र यदा "भीह्री"(पा०सू०६-१-१९२)इत्यत्र पूर्वग्रहणेन यत्र सप्तम्यर्थपक्षे तदन्तग्रहणपक्षे च फलभेदः तत्रैव सौवर्यः सप्तम्यस्तदन्तसप्तम्य इति ज्ञाप्यते। यथा "भीह्री"(पा०सू०६-१-१९२)इत्यत्रैव पूर्वग्रहणाभावे तदन्तस्य कार्यित्वे प्रत्ययान्तानां श्यादीनामुदात्त इत्यलोऽन्त्यपरिभाषया प्रत्ययान्त एवोदात्तः स्यात्, सप्तम्यर्थाश्रयणे तु पितमपहाय श्यादीनामेवोदात्तः स्यादिति स्पष्टः फलभेदः। तथा "उपोत्तमं रिति" (पा०सू०६-१-२१७) "चङ्यन्यतरस्याम्" (पा०सू०६-१-२१८) इत्यत्रापि। "ञ्नित्यादिर्नित्यम्" (पा०सू०६-१-१९७) "पथिमथोः सर्वनामस्थाने" (पा०सू०६-१-१९९) इत्यादौ तु नास्ति फलभेदः। तदन्तस्य हि कार्यित्वे प्रकृत्यादेरेवोदात्तत्वं, ञ्नदादिपूर्वस्यापि कार्यित्वे तथैवेति। तथाच तत्र सौवर्य इत्यस्याप्रवृत्त्या तदन्ताकार्यित्वादुक्तदोषस्याप्रसङ्ग एवेति। "संज्ञायामुपमानम्" (पा०सू०६-१-२०४) इत्यत्र भाष्य-

कैयटादिग्रन्थास्तु सामान्यापेक्षं ज्ञापकमाश्रित्य योजयितव्या इति। 'अत्रयः' इत्यत्र तु स्वरो न भवति, लुकि कृते कार्यिणोऽभावात्। प्रत्ययलक्षणं हि यदन्यस्य कार्यं तत्प्रत्ययलोपेऽपि भवति, न तु प्रत्ययस्यैव यत्कार्यं तदपि। न च प्र(१)त्ययग्रहणपरिभाषया तदन्तग्रहणं स्यादिति वाच्यम्। "येन विधिः" (पा०सू०१-१-७२) इतिसूत्रेणैव तल्लाभस्य वक्ष्यमाणत्वात्। विशेषणविशेष्यभावे च कामचारात्। नन्वेवमपि स्थानिवत्सूत्रेण स्यादेवोदात्ततेति चेत्? न, लोपस्याभावरूपतया तदीयान्तस्य तदुदात्ततायाश्च बाधात्। अत एव हि 'अभूत्' इत्यादौ लुप्तस्य सिचो नेट्। न ह्यभावस्य भावोऽवयवः सम्भवति। भाष्यमते "अनल्विधौ" (पा०सू०प०१-१-५६) इति निषेधाच्च। क्विब्विजादीनां तु "नेड्वशि" (पा०सू०७-२-८) इतीण्निषेधोऽप्यस्ति। न चैवं नखनिर्भिन्ने पेरुप्रसङ्गः, तस्यापि लुकापहारादिति दिक्। वस्तुतो यदङ्गमिति व्याख्यानाद् 'राजपुरुषः' इत्याद्यपि निर्बाधम्, भसंज्ञाया निषेधेनाल्लोपाभावात्, सुबन्तत्वप्रयुक्तपदसंज्ञया नलोपाच्च। तथा 'अहर्ददाति' इत्यत्र रेफोऽपि सिद्धः। असुपीति निषेधो हि वस्तुतोऽङ्गस्य कार्यमिति नेह प्रवर्त्तते। अङ्गाधिकारनिर्देशे तु प्रवर्त्तेतासौ। अत एव "अह्नो रविधौ" इति वचनमारभ्यते। न चासुपीति वचनसामर्थ्यात्प्रत्ययलक्षणेनासुपीति निषेधो नेति वाच्यम्, 'दीर्घाहो निदाघः' इत्यादौ हल्ङ्यादिलोपेऽपि रेफापत्तेः। एतेन 'असुपि' इति पर्युदासमाश्रित्य 'अहर्ददाति' इत्यत्र दाधातोः सुब्भिन्नस्य सत्वाद्रेफ इत्यपि कल्पनमपास्तम्, 'दीर्घाहो निदाघः' इत्यतिप्रसङ्गात्। यद्यपि रुत्वरत्वयोरसिद्धतया पूर्वं नलोपे कृतेऽकारस्यैव रुत्वरत्वे प्राप्नुतस्तथापि रुत्वरत्वयोर्विषये नलोपो नेष्यते, रुत्वरत्वोभयारम्भसामर्थ्यात्। नह्यकारस्य रौ रे वा विशेषोऽस्ति। न च सम्बुद्धौ नलोपनिषेधाद् 'हे अहर्गच्छ' 'हे दीर्घाहो निदाघ' इत्यत्र चरितार्थता, एवमपि "रूपरात्रि" (का०वा०) इति रुत्वस्य वैयर्थ्यापत्तेः। नन्वेतदपि सम्बोधने चरितार्थमिति चेत्? सत्यम्, "अहन्" (पा०सू०८-२-६८) इत्यावर्त्यैकेन नलोपाभावनिपातनात्सिद्धमिति दिक्।

स्यादेतत्। परमवाचा, परमगोदुहा, परमलिहा, परमदण्डिना, परमदिवा, 'परमकुमार्यौ' इत्यत्रान्तर्वर्त्तिनीं विभक्तिमाश्रित्योत्तरखण्डस्य पदसंज्ञा स्यात्। ततश्च "चोः कुः" (पा०सू०८-२-३०) "दादेर्धातोर्घः" (पा०सू०८-२-३२) "हो ढः" (पा०सू०८-२-३१) "नलोपः प्रातिपदिकान्तस्य" (पा०

(१) "प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्" इत्यनयेत्यर्थः।

सू०८-२-७) "दिव उत्" (पा०सू०६-१-१३१) "इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च" (पा०सू०६-१-१२७) इत्येते विधयः प्रसज्येरन्। न च भसंज्ञया पदसंज्ञाया बाधः, भिन्नावधिकत्वात्। भसंज्ञा हि समस्तस्य प्राप्ता पदसंज्ञा तूत्तरखण्डस्य। अत्र भाष्यम्। भसंज्ञासूत्रे "सुप्तिङन्तम्" (पा० सू०१-४-१४) इति सूत्रात्सुबन्तमित्यनुवर्त्तनीयम्। तदयं सूत्रार्थः यजादौ असर्वनामस्थाने परे यस्मात्प्रत्ययविधिस्तथाभूतः पूर्वः समुदायो भसंज्ञो भवति, तदवयवभूतं सुबन्तं यद्यस्ति तर्हि तदपि भसंज्ञं स्यात् यजादावनन्तरे इति। इह च समुदायस्य भसंज्ञा प्रधानशिष्टा, अवयवस्य त्वन्वाचयशिष्टा "कर्त्तुः क्यङ् सलोपश्च" (पा०सू०३-१-११) इतिवत्। तेन 'राज्ञः' इत्यादौ सुबन्तावयवाभावेऽपि भवति, सुबन्तावयवसत्त्वे तु तस्य समुदायस्य चेत्युभयोरपि भवतीति विवेकः। नन्वेवमपि 'परमवाचौ' 'परमवाचः' इत्यादौ भत्वाभावात्पदकार्यं स्यादेवेति चेत्? न, तत्र भत्वाभावेपि "असर्वनामस्थाने" इति पदसंज्ञानिषेधात्। "स्वादिष्वसर्वनामस्थाने" (पा०सू०१-४-१७) इत्यत्रापि हि सुबन्तमित्यनुवर्तते। प्रसज्यप्रतिषेधश्चायम्। तत्सामर्थ्यादनन्तरस्य विधिर्वेति न्यायो नाश्रीयते। तदयमर्थः—सर्वनामस्थाने परतः पूर्वः समुदायः पदं न स्यात्, तदवयवभूतं सुबन्तं च पदं न स्यादिति। तत्र समुदायस्य "स्वादिषु" (पा०सू०१-४-१७) इति प्राप्ता, अवयवस्य तु सु(१)बन्तमिति प्राप्ता पदसंज्ञाऽनेन निषिद्धेति 'परमवाचौ' इत्यादि सिद्धम्। नन्वेवं 'सुवाक् सुराजा' इत्यादौ कुत्वादि न स्यात्, सावपि समुदायस्यावयवस्य च प्राप्तयोर्द्वयोरपि पदसंज्ञयोर्निषेधादिति चेत्? न, असर्वनामस्थान इत्यत्रोत्तरसूत्राद्यचीत्यपकृष्य यजादौ सर्वनामस्थाने उभयविधपदसंज्ञानिषेधात्। सौ तु द्विविधापि पदसंज्ञा भवत्येव। नन्वेवं श्रूयमाणे सौ पूर्वस्य पदसंज्ञा स्यादिति चेत्? इष्टापत्तेः। नन्वेवम् "प्लुतोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्यादुत्तरस्येदुतौ" (पा०सू०८-२-१०७) इति सूत्रे 'भद्रङ्करोषि गौः' इत्यत्रातिप्रसङ्गं वारयितुं पदान्तग्रहणं कर्त्तव्यमिति वार्त्तिककृता वक्ष्यमाणं विरुध्येत, क्रियमाणेऽपि पदान्तग्रहणे दोषतादवस्थ्यादिति चेत्? न, तत्रान्तग्रहणमात्रं कृत्वा "वाक्यस्य टेः" (पा० सू०८-२-८२) इत्यतो वाक्यग्रहणमनुवर्त्य वाक्यान्तस्येति व्याख्यानसम्भवात्। तदेवं समासे चरमभागस्य पदसंज्ञा यजादौ क्वापि नास्तीति स्थितम्। क्वचिन्निषेधात्क्वचित्तु भत्वेन बाधादिति विशेषः। नन्वेवं 'दूरान्मुकम्' इत्यादावलुङ् न स्यात्, 'होतापोतारौ' इत्यत्राऽऽनङ् न स्यात्,

(१) "सुप्तिङन्तं पदम्" (पा०सू०१-४-१४) इत्यनेनेत्यर्थः।

उत्तरपदे तद्विधानादिति चेत् ? न, उत्तरपदशब्दस्य समासोत्तरावयवे रूढतया पदसंज्ञाविरहेऽपि तत्प्रवृत्तेः । सर्वान्त एव चेयं रूढिः । तेन 'होतृपोतृनेष्टोद्गातारः' इत्यत्र मध्यमानामुत्तरपदत्वाभावात्ततः पूर्वस्याऽऽनङ् नेति दिक् । नन्वेवं 'दधिसेचौ, 'दधिसेचः' इत्यत्र "सात्पदाद्योः" (पा०सू०८-३-१११) इति षत्वनिषेधो न स्यादिति चेत् ? न, पदादादिः पदादिस्तस्य षत्वं नेति व्याख्यानात् । न चैवं 'रामेषु' 'हरिषु' इत्यत्रापि निषेधः स्यादिति वाच्यम् स्वादाविति या पदसंज्ञा तामुपजीव्य पदादेर्नेति निषेधाप्रवृत्तेः । एतच्च सात्प्रतिषेधेन ज्ञाप्यते । उक्तञ्च–पदादादेर्नेत्येव व्याख्यानं न तु पदस्यादेरिति । तथा सति "गतिकारकोपपदानाम्" (प०भा०७६) इति सुबुत्पत्तेः प्रागेव समासे 'दधिसेक' इत्यादौ षत्वस्य दुर्वारतापत्तेः । नन्वेवमपि 'बहुसेचौ, 'बहुसेचः' इत्यत्र षत्वं स्यादेव बहुचोऽपदत्वेन षत्वप्रतिषेधाप्राप्तेरिति चेत् ? सत्यम्, वचनमेवेह कर्त्तव्यम्—"बहुच्पूर्वस्य न" इति । अत्रायं सूत्रन्यासः—"सातेः" सः षत्वं न स्यात् । ततः "बहुच्पदाभ्याम्" आभ्यामुत्तरस्य सस्य षत्वं न स्यात् । आदिग्रहणं न कर्त्तव्यम् "तस्मादित्युत्तरस्य" (पा०सू०१-१-६७) इत्येव सिद्धेः । तदिदं बहुज्ग्रहणमादिग्रहणेन निमातव्यमिति । वार्त्तिके तु "उत्तरपदत्वे चापदादिविधौ" इति वचनेनैव 'परमवाचः' इत्यादि साधितम् । उत्तरस्य समासोत्तरभागस्य पदत्वे कर्त्तव्ये लुमता लुप्ते प्रत्ययलक्षणं न स्यात् । अतो न कुत्वादि । पदादिविधौ तु प्रत्ययलक्षणं स्यादेव । तेन षत्वनिषेधाद् 'दधिसेचा' इत्यादिसिद्धिः । अस्मिंश्च पक्षे प्राक् सुबुत्पत्तेः समासोऽत्र नाभ्युपगन्तव्यः 'धनक्रीता' इत्यादिसिद्धये तस्यानित्यताया वक्ष्यमाणत्वात् । कैयटस्त्वाह—'दध्नः सेचौ' इति विग्रहे "षष्ठी" (पा०सू०२-२-८) इति समासः न त्वयमुपपदसमासः । सोपपदात्तु विज् नास्ति, अनभिधानात् । अतः 'दधिषेचौ' इत्यादि न भवत्येव । अस्मिन्नपि पक्षे "बहुच्पूर्वस्य च" इति वचनं कर्त्तव्यमेव । कृते हि बहुचि विशिष्टस्यार्थवत्त्वेन प्रातिपदिकत्वे सुपो लुकि च कृते पुनर्विशिष्टात्सुबन्तरमुत्पद्यते इत्यर्थवत्सूत्रे वक्ष्यते । तत्रान्तर्वर्त्तिनीं विभक्तिमाश्रित्य प्राप्तं पदत्वं, तत्कुत्वादौ कर्त्तव्ये मा भूत्, षत्वनिषेध एव यथा स्यादिति । अत्रायं निष्कर्षः—पूर्व(१) सूत्रे एव स्थित्वा "उत्तरपदत्वे च पदादिविधौ" "बहुच्पूर्वस्य च" इति पाठ्यम् । पदादिविधावेव प्रत्ययलक्षणं भवति न तु पदान्तविधाविति नियमार्थं चेदं वचनद्वयमिति व्याख्येयम् । एवञ्च नञ् न कर्त्तव्य इति

(१) "प्रत्ययलोपे प्रत्ययलक्षणम्" (पा०सू०१-१-६२) इत्यत्रेत्यर्थः ।

लाघवम् । अस्मिन्पक्षे सौ पदत्वं नास्ति प्रागुक्तकुसृष्टेरभावात् । तदेतत्पक्षद्वयमभिप्रेत्य हल्ङ्यादिसूत्रे भाष्यकारैरुक्तम्—"अथ सावपि पदं भवति । एवमप्युभयतस्पाशा रज्जुः" इति । नन्वङ्गाधिकारग्रहणपक्षे वस्तुतोऽङ्गस्येति पक्षे च 'अभूवन्' इत्यत्र जुस् प्राप्नोतीति चेत् ? सत्यम्, "आतः" (पा०सू०३-४-११०) इति नियमान्न भवति । ननु 'देवदत्तं याजयाञ्चकार' इत्यत्र लुकं बाधित्वा परत्वात्तिबादिषु कृतेषु "आमः" (पा०सू०२-४-८१) इति तेषां लुकि प्रत्ययलक्षणेन तिङन्तत्वादामन्तस्य निघातः स्यात्ततः परस्य च न स्यादिति चेत् ? न, लावस्थायामेव येननाप्राप्तिन्यायेन तिबादीन्बाधित्वा लुक्प्रवृत्तेः । तदुक्तम्—आमि लिलोपात्तस्य चानिघातस्तस्माच्च निघात इति । ननु 'देवदत्तो युष्मत्पुत्रः' इत्यादौ षष्ठ्यन्तस्य विधीयमाना युष्मदस्मदोरादेशाः प्राप्नुवन्तीति चेत् ? सत्यम्, स्थग्रहणान्न भवन्ति । न च विभक्तौ परतः पूर्वभागमात्रस्य मा भूत्किन्तु विभक्तिविशिष्टस्येत्येतदर्थं स्थग्रहणं स्यादिति वाच्यम्, षष्ठीचतुर्थीद्वितीयानामिति निर्देशेनापि गतार्थत्वात् सर्वस्य पदस्येत्यनुवृत्तेश्च । तस्माद्विभक्तिलोपे कृते मा भूदित्येतदर्थमेव स्थग्रहणम् । अवस्थानं हि श्रूयमाणास्वेव संभवति यद्वा, तिष्ठतिरहानौ वर्त्तते । यथा "समये तिष्ठ सुग्रीव" इति । समयं मा हासीरित्यर्थः । तथा चापरित्यक्तविभक्तिकयोरित्युक्त्या श्रूयमाणविभक्तिकत्वं स्पष्टमेव लभ्यते । इदन्त्ववशिष्यते । वस्तुतोऽङ्गस्येति सिद्धान्ते "चिणो लुक्" (पा०सू०६-४-१०४) इति तलोपे कृते हनि णिङादेशा न स्युः—'अवधि भवता दस्युः' 'अगायि भवता ग्रामः' 'अध्यगायि भवतानुवाकः' इति, लुङि परतो ह्येते विधीयन्ते, इति चेत् ? मैवम् लुङि यदार्द्धधातुकं तत्र हनि णिङादेशाविधानात् । तस्माद्वस्तुतोऽङ्गस्येति पक्षो निर्दुष्ट इति स्थितम् ।

अचोऽन्त्यादि टि (पा०सू०१-१-६४) ॥ अच इति निर्द्धारणे षष्ठी । जातौ एकवचनम् । अचां मध्ये योऽन्त्यस्तदादिशब्दरूपं टिसंज्ञं स्यात् । टिप्रदेशाः—"टित आत्मनेपदानां टेः" (पा०सू०३-४-७९) इत्यादयः । पचते, पचेते इत्यादि । अन्ते भवोऽन्त्यः । दिगादित्वाद्यत् । अन्त्य आदिर्यस्येति बहुव्रीहिः । नित्यसापेक्षत्वात्समासः ।

अलोऽन्त्यात्पूर्व उपधा (पा०सू०१-१-६५) ॥ अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात् । उपधागुणः—चेतति, च्योतति, वर्द्धते इत्यादि । ननु पूर्वस्याविशेषितत्वाच्छासिधातौ शा इति समुदायस्य संज्ञा स्यादिति चेत् ? अस्तु । नचैवं "शास इदङ्हलोः" (पा०सू०६-४-३४) इतीत्वं शा इति समुदायस्य स्यादिति वाच्यम्, अलोऽन्त्यपरिभाषयेष्टसिद्धेः । स्या·

देतत् । "नानर्थकेऽलोन्त्यविधिरनभ्यासविकारेषु" (प०भा०१२९) इति निषेधः प्राप्नोति । इह च 'विमार्ष्टि' इत्यत्र "मृजामित्" (पा०सू०७-४-७६) अन्त्यस्य यथा स्यादित्येतदर्थमनभ्यासविकारेष्वित्युक्तम् । विकारो नाम वर्णात्मक आदेशः । अत एव 'देहि' इत्यत्र लोपः सर्वादेश एव भवतीति । अत्रोच्यते । न तावदेषा परिभाषा सूत्रकृतः सम्मता "तस्य लोपः" (पा०सू०१-३-९) इति सूत्रे ञिटुडूनां सर्वलोपार्थं तस्य ग्रहणात् । नापि भाष्यकारस्य सम्मता । एतत्प्रयोजनानामन्यथोपपत्तेर्भाष्ये उक्तत्वात् । तथाहि, "अव्यक्तानुकरणस्य" (पा०सू०६-१-९८) इति तावदन्तादेशो न भवति "नाम्रेडितस्यान्त्यस्य तु वा" (पा०सू०६-१-९९) इति ज्ञापकात् । इतरथा ह्याम्रेडितस्य वेत्येव ब्रूयात् । "घ्वसोरेद्धौ" (पा०सू०६-४-११९) इत्यत्रापि "लोपो यि" (पा०सू०६-४-११८) इति प्रकृते पुनर्लोपग्रहणसामर्थ्यात्सर्वादेशः । तथा चेत्थं सूत्रन्यासः—"घोरभ्यासस्य लोपः" लोपशब्दान्तरस्यानुवृत्त्या सर्वलोपः स्यात् । "अस्तेश्चैत्" अस्तेर्घोश्चेद्भवति हाविति । अथवा, लोपश् इतिच्छेदः संज्ञायां कृतोऽनुबन्धः संज्ञिनि फलति, यथा ङमुटि । भाष्ये तु द्विशकारको निर्देश इत्युक्तम् । तत्र लोपे इति भिन्नं पदम् । श् इत्यस्य चोपदेश एवेत्संज्ञा । तत्फलं तु प्रयोगे, सर्वत्रानुबन्धानां काकादिवद्नवयवीभूयैव व्यावर्त्तकत्वादिति भावः । अस्मिन्नपि पक्षे झलि परे यः संयोगस्तदादित्वात्सो लोपे एकशकारक एव पाठः सुवचः । स्पष्टार्थम् "अन उपधालोपिनः" (पा०सू०४-१-२८) इत्यादावकारस्येवेहापि सकारस्य लोपो माऽस्त्विति तु भाष्याशयः । 'आभ्याम्' इत्यादौ "हलि लोपः" (पा०सू०७-२-११३) इति सूत्रेणाककारस्येदम इदो विधीयमानो लोपोऽपि तर्ह्यन्त्यस्य स्यादिति चेत् ? न, "अनाप्यकः" (पा०सू०७-२-११२) इति सूत्रादानित्यनुवर्त्य तस्य हलीति सप्तम्या षष्ठीं प्रकल्प्य अन एव लोपविधानात् । तथाच तत्रालोन्त्यपरिभाषया नकारलोपे "अतो गुणे" (पा०सू०६-१-९७) इति पररूपे च कृते 'आभ्याम्' 'एषाम्' इत्यादि सिद्धम् । "अत्र लोपोऽभ्यासस्य" (पा०सू०७-४-५८) इति सूत्रेऽपि अत्राभ्यासत्वाश्रये न तु तदेकदेशे इति व्याख्यानादत्रग्रहणसामर्थ्यात्सर्वलोपः । यद्यपि 'सनि' इत्यपेक्षितं 'ददौ, दधौ' इत्यादि वारणाय, 'सादौ' इति च 'जिज्ञपयिषति' इत्येतद्वारणाय, प्रकृतयोऽपि 'पिपक्षति' इत्यादिवारणाय, विषयोऽप्यपेक्षितः "मुचोऽकर्मकस्य गुणो वा" (पा०सू०७-४-५७) इति 'मुमुक्षति गाम्' इत्यादिवारणाय, तथापीदं सर्वमनुवृत्त्यैव सुलभमिति सर्वलोपार्थमेवात्रग्रहणं बोध्यम् । नन्वेवमपि "विभाषा भवद्भगवदघवतामो-

च्चावद्र्य" इति वार्त्तिकेन विधीयमान ओकारोऽन्त्यस्य स्यादिति चेत् ? न, वस्येति सिद्धे अवस्येति गुरुकरणसामर्थ्यात्सर्वादेशसिद्धेः। तस्मा-न्नानर्थक इति परिभाषा निष्फला सूत्रभाष्यासम्मता चेति स्थितम्। एवञ्च शासेः शाशब्दस्योपधात्वेऽपि 'शिष्टः' इत्यादि सिध्यति। 'सं-योगोपधग्रहणं कृञर्थम्' इत्यादिव्यवहाराश्चास्मिन्पक्षे संगच्छन्ते इति दिक्। यद्वा, अवध्यवधिमद्भावः सजातीयानामेवेत्युत्सर्गः। लोके ह्यमी-षां ब्राह्मणानामन्त्यात्पूर्वमानयेत्युक्ते एक एवाऽन्त्यादव्यवहितपूर्व आनी-यते न तु समुदायः। एवञ्चेहाप्यलोऽव्यवहितपूर्वोऽलेव संज्ञी न तु स-मुदायः, न वा व्यवहितोऽल्। संयोगोपधव्यवहारस्तु भाक्तः, अवयवध-र्मस्य समुदाये उपचारात्। एवं स्थितेऽल इति जसन्तमपि सुवचम्। "जात्याख्यायाम्" (पा०सू०१–२–५८) इति बहुवचनम्। पूर्व इत्यपि जसन्तम्। अन्त्योऽप्यलेव साजात्याल्लभ्यते। यद्वा, अल इति निर्धा-रणे षष्ठी। जातौ चैकवचनम्। अलां मध्येऽन्त्यात्पूर्व इत्यर्थः। तथा चे-हाल इति जस्ङसिर्ङस् वेति पक्षत्रयमपि स्थितम्।

तस्मिन्निति निर्दिष्टे पूर्वस्य (पा०सू०१–१–६६)॥ सप्तमीनिर्देशेषु पूर्वस्यैव कार्यं स्यात्तच्च निर्दिष्टेऽव्यवहितोच्चारिते सतीत्यर्थः। निः शा-ब्दो नैरन्तर्ये, दिशिरुच्चारणक्रियः। निरन्तरं दिष्टो निर्दिष्टः। नियमार्थ-मिदं सूत्रम्। तथाहि, "इको यणचि" (पा०सू०६–१–७७) इत्यत्राचीति "यस्य च भावेन भावलक्षणम्" (पा०सू०२–३–३७) इति सप्तमी। अश्रू-यमाणक्रियत्वाच्चान्तरङ्गस्यास्त्यर्थस्य लाभः तेनाचि सति यण् भवतीत्य-र्थः। यद्वा, 'गङ्गायां घोषः' इतिवदौपश्लेषिकेऽधिकरणे सप्तमी। तत्र सत्त्वं परस्येव पूर्वस्यापि सम्भवति। एवमुपश्लेषोऽपि। तत्र युगपदेक-स्य कार्यित्वनिमित्तत्वयोरसंभवाद् 'दध्युदकं' 'मध्विदम्' इत्यादावि-कारोकारयोः पर्यायेण यण् प्राप्तः पूर्वस्यैवेति नियम्यते। तथा 'अग्निचि-दत्र' इति व्यवहितस्यापि यण् प्राप्तः अनन्तरस्यैवेति नियम्यते। ननु'ग-वित्ययमाह' इत्यादौ स्वरूपपदार्थकतामितिशब्दः करोति, यथेहापि। ए-वञ्च "तस्मिन्नणि" (पा०सू०४–३–२)इत्यत्रैवेयं परिभाषा प्रवर्त्तेत। अस्ति हि तत्र व्यवच्छेद्यम्,'हे यौष्माकीण अस्मभ्यं देहि' 'हे आस्माकीन युष्म-भ्यं ददामि'इत्यादौ खञणभ्यां परस्याप्यादेशप्रसङ्गसत्त्वात्। सत्यम्, इति-करणः पदार्थविपर्यासकृत्। लोकेऽर्थपरतायाः औत्सर्गिकत्वात्तत्र शब्द-परतां करोति। शास्त्रे तु विपरीतम्। किञ्च यदि "तस्मिन्नणि" (पा० सू०४–३–२) इत्यत्रैवेयं प्रवर्त्तेत तर्हि तत्रैव पूर्वग्रहणं कुर्यात् तस्मान्नेदं तस्मिन्नित्यनुकरणम्। किन्त्वचि हलीत्यादिसकलविशेषसंग्रहार्थं स्व-

तन्त्रस्य सर्वनाम्नोऽयं निर्देशः। "तस्यापत्यम्" (पा०सू०४-१-९२) तत्र भवः" (पा०सू०४-३-५३) इत्यादिवत्।

तस्मादित्युत्तरस्य (पा०सू०१-१-६७)॥ पञ्चमीनिर्देशेपूत्तरस्यैव कार्यं स्यात्तच्चाव्यवहितोच्चारिते। "तिङ्ङतिङः" (पा०सू०८-१-२८) अग्निमीळे। इह न भवति—ईळेऽग्निम्। इह कारकविभक्तेरसम्भवाद्दिग्योगलक्षणा पञ्चमी। तत्र दिक्शब्दोऽध्याह्रियमाणोत्तरशब्दवत्पूर्वशब्दोऽप्यविशेषादध्याह्रियेत, व्यवहितोऽपि च गृह्येत। तथा च 'उत्तंस्थाता' इत्यत्रापि "उदः स्थास्तम्भोः" (पा०सू० ८-४-६१) इत्यस्य प्रसङ्गः। तदेवं पूर्वसूत्रमेतत्सूत्रं चेति द्वयमपि नियमार्थमिति स्थितम्। तथा च वार्त्तिकम्—तस्मिंस्तस्मादिति पूर्वोत्तरयोर्योगाविशेषान्नियमार्थं वचनं दध्युदकं पचत्योदनमिति। इहापि तस्मादिति स्वतन्त्रस्य सर्वनाम्नो निर्देशः प्राग्वत्। न त्वनुकरणम्। तथाहि सति यद्यपि "तस्मान्नुड्द्विहलः" (पा०सू० ७-४-७१) इत्यत्र "अत आदेः" (पा०सू० ७-४-७०) इति दीर्घात्पूर्वस्याङ्गस्यासम्भवात्प्रयोजनाभावान्नैतत्परिभाषोपस्थितिस्तथापि "तस्माच्छसो नः पुंसि" (पा०सू० ६-१-१०३) "तस्मान्नुडचि" (पा०सू० ६-३-७४) इति योगद्वये स्यात्, 'उच्चरत आनुपलभते' 'गौरनश्वः' इत्यादेर्व्यावर्त्यस्य तत्र सम्भवादिति दिक्।

स्यादेतत्। एतत्सूत्रं नियमार्थमस्तु। पूर्वसूत्रमप्यौपश्लेषिकसप्तमीपक्षे नियामकमस्तु। सत्सप्तमीपक्षे तु नियामकत्वमयुक्तम्, षाष्ठभाष्यकैयटाविरोधात्। तथाहि, "श्नान्नलोपः" (पा०सू० ६-४-२३) इत्यत्र भाष्यम्—'नैषा परसप्तमी। का तर्हि? सत्सप्तमी, क्ङिति सति' इति। तथा तत्रैव कैयटः—कथं पुनः सम्भवत्यां परसप्तम्यां सत्सप्तम्याश्रयितुं युक्ता? यथेष्टं वाक्याध्याहाराददोषः। क्ङिति सतीत्येव हि विज्ञायमाने पौर्वापर्यानाश्रयणान्नास्ति "तस्मिन्" (पा०सू० १-१-६६) इत्यस्याः परिभाषाया उपस्थानम्। यदा ह्यौपश्लेषिकेऽधिकरणे सप्तमी, तदा किं पूर्वस्य कार्यमथ परस्येत्यनियमे नियमाय परिभाषोपस्थानमिति।

अत्रोच्यते, षाष्ठग्रन्थस्य प्रकृतमात्रपरत्वादविरोधः। तथाहि, "श्नान्नलोपः" (पा०सू० ६-४-२३) इति सूत्रे शकारवतो ग्रहणं माऽस्तु नादित्येवास्त्विति प्रश्ने नन्दनादावति प्रसङ्ग इत्युत्तरितम्। 'अनिदितम्' इत्यस्यानुकर्षणे तु 'हिनस्ति' इत्यत्र न स्यात्। ततः क्ङितीत्यनुवर्त्य श्नममेव क्ङितमाश्रित्य 'हिनस्ति' इत्यत्र लोपोऽस्त्विति शङ्क्य-

ते। यदि चास्यामवस्थायां "तस्मिन्" (पा०सू० १-१-६६) इति परिभाषोपतिष्ठेत तदा नन्दमानादौ चानशो ङित्त्वाल्लोपः प्रवर्त्तेत। श्नमः शित्करणं चानर्थकं स्यात्। तद्धि शित्त्वात्सार्वधातुकतया ङित्तमिममेवाश्रित्य 'हिनस्ति' इत्यत्र नलोपे क्रियमाणे सार्थकं न त्वन्यथा। नन्वार्द्धधातुकसंज्ञानिवृत्त्या शित्त्वं सार्थकम्। तस्यां हि सत्याम् 'अनक्ति' 'भनक्ति' इत्यत्रातो लोपः स्यात्, 'रुणद्धि' 'भिनत्ति' इत्यत्र गुणः स्यात्, 'तृणेढि' इतीडागमः स्यात्, "नेड् वशि" (पा०सू०७-२-८) इति तु न प्रवर्त्तते अकृत्त्वादिति चेत्? न, श्नमः पूर्वभागस्यानङ्गतयोक्तविधीनामप्राप्तेः। कथमनङ्गतेति चेत्? इत्थम्, प्रत्ययविधौ यत्पञ्चमीनिर्दिष्टं धातोः प्रातिपदिकादित्यादि, तदादि, तस्मिन्प्रत्यये परतोऽङ्गमिति हि सूत्रार्थः। इह तु यत्पञ्चमीनिर्दिष्टं 'रुधादिभ्यः' इति, नास्मात्प्रत्ययः परः। यस्माच्च परः पूर्वभागान्नासौ तस्मिन्विधीयमाने पञ्चमीनिर्दिष्टः। अत एव 'भनक्ति' इत्यादौ "अतो दीर्घो यञि" (पा० सू० ७-३-१०१) इति न प्रवर्त्तते। न च "श्नसोरल्लोपः" (पा०सू० ६-४-१११) इत्यत्र विशेषणार्थं शित्करणं स्यादिति वाच्यम्, 'नसोरल्लोपः' इत्युक्तेऽपि दोषाभावात्। नन्वेवं नान्तास्त्योर्ग्रहणं स्यात्। तथाच कनेर्यङ्लुकि 'चङ्कान्तः' इत्यत्रापि स्यादिति चेत्? न, सिद्धान्तेपि श्नप्रत्ययसान्तयोर्ग्रहणापत्तौ 'वस्तः' इत्यादावतिप्रसङ्गसाम्यात। साहचर्यात्प्रत्ययधात्वोर्ग्रहणमिति तु तुल्यम्। ननु "नसोरल्लोपः" इत्युच्यमाने यत्र नप्रत्ययस्य क्ङित्यानन्तर्यं तत्रैव भविष्यति 'यत्न इवाचरतः यत्नतः, पामनतः' इति? मैवम्, अनुवर्तमानेन सार्वधातुकग्रहणेन प्रत्ययो विशेष्यते। तथाच विध्यसंस्पर्शान्निर्दिष्टपरिभाषानुपस्थितौ निमित्तसप्तमी। सार्वधातुकानिमित्तस्य नप्रत्ययस्यास्तेश्चाल्लोपः क्ङित्यनन्तरे इति। ननु च "अत उत्सार्वधातुके" (पा०सू०६-४-११०) इति सूत्रे सार्वधातुकग्रहणं प्रत्याख्यातमिति चेत्? न, सति शित्त्वे प्रत्याख्यानात्। तदेवं श्नमः शित्त्वकरणसामर्थ्यात् क्ङितीति सत्सप्तम्यामपि परिभाषा नोपतिष्ठते इति स्थितम्। पूर्वपक्षत्वादनादृत्यया तथोक्तमिति वा वर्णनीयम्।

इह सूत्रद्वये षष्ठीप्रकल्प्तिपक्षोऽपि भाष्ये स्थितः। तथाहि "षष्ठी स्थानेयोगा" (पा०सू०. १-१-४९) इति सूत्रात्षष्ठीत्यनुवर्त्तते। सप्तम्यर्थनिर्देशे पूर्वस्याव्यवहितस्य षष्ठी स्यात्, पञ्चम्यर्थनिर्देशे उत्तरस्याव्यवहितस्य षष्ठी स्यादिति। तत्र "इको यणचि" (पा०सू० ६-१-७७) इत्यादौ सूत्रे एव षष्ठीश्रवणात्तां षष्ठीमनूद्य पूर्वस्यानन्तरस्यैषा न

तूत्तरस्य न वा पूर्वस्यापि व्यवहितस्येत्येतावन्मात्रमुच्यते । "आने मुक्" (पा०सू० ७-२-८२) इत्यादौ तु षष्ठ्या अश्रवणात्साऽपि प्रकल्प्यते इति विशेषः। सा चानियतयोगत्वात्स्थानषष्ठी । यस्य च स्थानषष्ठी तस्यैव कार्यनियम इति सोऽप्यर्थात्सिद्ध्यति । यत्र तूभयनिर्देशस्तत्रो भयं तावन्न प्रकल्पकं कार्यित्वनिमित्तत्वयोरेकत्र युगपदसम्भवाज्ज्ञापकाच्च । तथाच "एकः पूर्वपरयोः" (पा०सू०६-१-८४) इति सूत्रे कैयटः-"सूत्रद्वयप्रमाणत्वाद् द्वे भवेतां प्रकल्पिके षष्ठ्यौ विभक्ती। तेनात्र ज्ञापनार्थत्वमाश्रितम्" इति । न च पर्यायेणोभयकल्पनम्, अतुल्यबलत्वात्। तथाहि, "आने मुक्" (पा०सू०७-२-८२) इत्यत्र सप्तमी निरवकाशा। सा पूर्वत्र चरितार्थाया "अतो येयः" (पा०सू० ७-२-८०) इति पञ्चम्याः षष्ठीं कल्पयति । एवम् "ईदासः" (पा०सू० ७-२-८३) इति पञ्चमी 'आने' इति सप्तम्याः । तथा तास्यनुदात्तेत्सूत्रे अभ्यस्तसिजर्थं 'सार्वधातुके' इति सप्तमी निर्देशं वक्ष्यति । सा च सप्तम्युत्तरत्र चरितार्थेति तस्या एव षष्ठी कल्प्यते । तथा "बहोर्लोपः" (पा०सू० ६-४-१०८) इत्यत्र बहोरिति पञ्चमी अकृतार्थाया 'इष्ठेमेयःसु' इति सप्तम्याः षष्ठीं कल्पयति। अत एव 'भू च बहोः' इति पृथक् षष्ठीनिर्देशः। तथा "गोतो णित्" (पा०सू० ७-१-९०) इति पञ्चमी 'सर्वनामस्थाने' इति सप्तम्याः षष्ठीं कल्पयति, गोशब्दस्य णित्वे प्रयोजनाभावाच्च। न च 'तिष्ठति गौः' इत्यादौ पूर्वस्य वृद्धिः फलमिति वाच्यम्, गोशब्दं प्रति तिष्ठतेरनङ्गत्वात्। एवं प्रायेण पञ्चम्या अकृतार्थतेति भाष्ये स्पष्टम् । "आमि सर्वनाम्नः सुट्" (पा०सू० ७-१-५२) इत्यत्रापि पञ्चम्यनवकाशा, आमीति सप्तमी तूत्तरार्थतया सावकाशा । यदि त्विह आदित्यनुवृत्त्या पञ्चम्या सामानाधिकरण्यं सम्पाद्य सर्वनाम्न इति पञ्चम्यपि कृतार्थेति ब्रूयात्तर्हि यथोद्देशपक्षाश्रयणेन परत्वात् "तस्मादित्युत्तरस्य" (पा०सू० १-१-६७) इति भविष्यति । तदुक्तम्—उभयनिर्देशे विप्रतिषेधात्पञ्चमीनिर्देश इति। वस्तुतस्तु नेह सामानाधिकरण्यम्, 'वर्णाश्रमेतराणाम्' इत्यस्य सिद्धये सर्वनाम्नो विहितस्येति व्याख्यानात्, 'येषां, तेषाम्' इत्याद्यर्थमकारात्परस्येति व्याख्यानाच्च। दीर्घाच्छे तुग् भवतीत्यत्र तु षष्ठ्याः स्थाने पञ्चमी। तेन दीर्घस्यैव तुग् भवति न तु छकारस्य। 'सुराच्छाया' इति निर्देशश्चेह लिङ्गम्। अन्यथा हि "खरि च" (पा०सू०८-४-५५) इति चर्त्वेन सुराच्छायेति चकारद्वयं निर्दिशेत्। प्रत्ययविधौ तु पञ्चम्यो न प्रकल्पिकाः, षष्ठ्या अनुवादविभक्तित्वात् । अप्रसिद्धस्य चानुवादासम्भवात्, त-

त्रानियमाप्रसङ्गेन नियमकारिण्याः परिभाषाया अप्रवृत्तेश्चेति दिक् ॥

स्वं रूपं शब्दस्याशब्दसंज्ञा (पा०सू०१–१–६८)। शब्दस्य स्वं रूपं संज्ञि शब्दशास्त्रे या संज्ञा, तां विना। "अग्नेर्ढक्" (पा०सू० ४–२ ३३) आग्नेयम्। "आङो यमहनः" (पा०सू० १–३–२८) आयच्छते, आहते। इह अग्नि आङ् यम् हन् एषामेतत्सूत्रोपात्तानां प्रयोगसमवायिनस्त एव संज्ञिनः। अशब्दसंज्ञेति किम्? "उपसर्गे घोः किः" (पा०सू० ३–३–९२) दाधाभ्यो यथा स्यात्, घुघातोः शब्दार्थान्मा भूत्। शब्दः शब्दशास्त्रं, तत्र संज्ञेति सप्तमीसमासः, न तु शब्दस्य संज्ञेति; 'कर्म' 'करणम्' इत्यादिष्वर्थसंज्ञासु स्वरूपग्रहणापत्तेः।

स्यादेतत्। रूपग्रहणं विनापि स्वशब्देन तदेव ग्रहीष्यते, प्रतीतावुपदेशानपेक्षत्वादसाधारणत्वादन्तरङ्गत्वान्नियतोपस्थितिकत्वाच्च। अर्थो हि प्रतीतौ सम्बन्धग्रहणमपेक्षते, साधारणश्च, पर्यायैरपि प्रत्यायनात्। बहिरङ्गश्च पदज्ञानजन्यबोधविषयत्वात्। अनियतोपस्थितिकश्चानुकरणदशायामप्रतीतेः। तत्किं रूपग्रहणेनेति चेत्?

अत्राहुः। इह शास्त्रे अर्थोऽपि विवक्षितो रूपवदिति ज्ञापनार्थं रूपग्रहणम्। तेन "अर्थवद्ग्रहणे नानर्थकस्य" (प० भा०) इत्युपपन्नं भवति। तत्रोक्तज्ञापकादर्थो ग्राह्यः, 'स्वं रूपम्' इति वचनाद्रूपं चेति सामर्थ्यादर्थवतो रूपस्य ग्रहणम्। तेन 'काशे, कुशे' इत्यत्र "ए" (पा० सू०–१–१–१३) इति प्रगृह्यसंज्ञा न भवति।

एतत्सूत्रं भाष्ये प्रत्याख्यातम्। तथाहि। आरभ्यमाणेऽपि सूत्रे पशुः, अपत्यं, देवता, प्राञ्चः, उदञ्चः, भर्ताः, इत्यादयस्तावल्लोकवदर्था एव गृह्यन्ते। "अग्नेर्ढक्" (पा०सू० ४–२–३३) इत्यादौ तु शब्द एव ग्रहीष्यते, अर्थस्य प्रत्ययेन पौर्वापर्यासम्भवात् "ङ्याप्प्रातिपदिकात्" (पा०सू० ४–१–१) इत्यधिकाराच्च। "उपसर्गे घोः किः" (पा०सू०३–३–९२) इत्यादौ तु घुघातुर्न ग्रहीष्यते "दाधा घु" (पा०सू० १–१–२०) इत्यारम्भात्। उक्तं हि—

व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्व चित्। इति।

अर्थवद्ग्रहणपरिभाषाऽपि श्वश्चादिसूत्रे राजि पठित्वा पुनर्भ्राजिपाठात्सिद्धा, न्यायसिद्धा च। "अग्नेर्ढक्" (पा०सू०४–२–३३) इत्यादौ हि शब्दविशिष्टस्यार्थस्योत्सर्गत उपस्थितौ विशेष्ये कार्यबाधाद्विशेषणीभूते शब्दे प्रवर्तमानं कार्यमुपस्थितार्थोपहिते एव, न त्वनर्थकेऽपि, अर्थस्य विशेषणविशेष्यभावव्यत्यासमात्रेणोपपत्तौ सर्वात्मना त्यागायोगात्। गौणमुख्यन्यायोऽप्येतन्मूलः, गौणस्य प्रथमतोऽनुपस्थितेः। एतेन

"अभिव्यक्तपदार्था ये" इत्यपि व्याख्यातम्। तस्मान्न्यायत एव सकलनिर्वाहे सूत्रं नारम्भणीयमिति। ननूत्तरत्र चतुःसूत्र्यामनुवृत्तये "स्वं रूपम्" (पा०सू० १-१-६८) इत्यवश्यं वाच्यमेवेति चेत्? न, अनुवृत्तेरनावश्यकत्वात्। तथाहि, अणुदित्सूत्रे तावत्स्वस्यापि स्वसावर्ण्यादेव सिद्धम्। कथमन्यथा "अवात्ताम्" इत्यत्र "झरो झरि" (पा०सू०८-४-६५) इति लोपः। तत्र व्यक्तिभेदात्सावर्ण्यमिति चेत्? इहापि बोध्यबोधकव्यक्त्योर्भेदात्। तथा "तपरस्तत्कालस्य" (पा०सू० १-१-७०) इत्यत्रापि। "आदिरन्त्येन" (पा०सू० १-१-७१) इत्यत्राप्यादिग्रहणावृत्त्या सिद्धम्। आवृत्तौ लिङ्गं तु "नादिचि" (पा०सू० ६-१-१०४) इत्यादि। "येन विधिः" (पा०सू० १-१-७२) इत्यत्र तु वार्त्तिककारः "तस्य च" इति वक्ष्यत्येव। वस्तुतस्तु तदपि न वाच्यम्, व्यपदेशिवद्भावेनैव सिद्धेः। "अप्रातिपदिकेन" इति तु तत्रैव प्रत्याख्यास्यामः। अत एव "येनविधिस्तदाद्यन्तत्वे प्रयोजनम्" इत्याद्यन्तवत्सूत्रस्थं वार्त्तिकं सङ्गच्छते' इति दिक्।

सित्तद्विशेषाणां वृक्षाद्यर्थम्। अत्र सिदित्युपलक्षणं किञ्चिल्लिङ्गमासज्य इत्थं लिङ्गं विशेषाणां संज्ञेति वक्तव्यम्। तच्च लिङ्गं वृक्षादावासञ्जनीयमित्यर्थः। एवमग्रेऽपि। तेन "विभाषा वृक्षमृग" (पा०सू० २-४-१२) इति सूत्रे विशेषाणामेव ग्रहणात् 'प्लक्षन्यग्रोधं, प्लक्षन्यग्रोधाः' इति सिद्ध्यति।

पित्पर्यायवचनस्य च स्वाद्यर्थम्। चकाराद्विशेषाणां स्वरूपस्य च ग्रहणम्। "स्वे पुषः" (पा०सू० ३-४-४०) रैपोषं पुष्टः, अश्वपोषम्, स्वपोषम्।

जित्पर्यायवचनस्यैव राजाद्यर्थम्। "सभा राजामनुष्यपूर्वा" (पा० सू० २-४-२३) इनसभम्, ईश्वरसभम्। नेह राजसभा, हरिश्चन्द्रसभा। पर्यायेण यो वक्ति स हि पर्यायवचनः। न च स्वस्य स्वेन सह विकल्पः, नापि विशेषेण, सामान्यविशेषयोर्भिन्नप्रकारकबोधजनकतया तुल्यार्थत्वाभावात्। तुल्यार्थास्तु विकल्पेरन्निति न्यायात्। इनशब्दो राजशब्दपर्याय इत्यादिव्यवहारास्तु 'भीमो भीमसेनः' इतिवत्।

झित् तस्य तद्विशेषाणां च मत्स्याद्यर्थम्। "पक्षिमत्स्यमृगान् हन्ति" (पा०सू० ४-४-३५) मात्सिकः, शाफरिकः। पर्यायवचनानां न अनिमिषान् हन्ति। "मीनस्येष्यते" इति भाष्यम्। मैनिकः।

मृगपक्षिणोस्तु पिन्निर्देशः कर्त्तव्यः। तेन स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणमिति व्याख्यातारः।

इह वृक्षादौ राजादौ च न्यायेनैवाभिमतं सिध्यतीति तत्रैव वक्ष्यते। इतरत्तु सर्वं वाचनिकमेवेत्यवधेयम्॥

अणुदित्सवर्णस्य चाप्रत्ययः (पा०सू० १-१-६९)। अत्राण् परेण णकारेणेत्युक्तम्। अणुदिच्च सवर्णस्य संज्ञा स्यात् विधीयमानं विना। चकारात् स्वरूपस्य। "अस्य च्वौ" (पा०सू० ७-४-३२) शुक्लीस्यात्, मालीस्यात्। "एरनेकाचोऽसंयोगपूर्वस्य" (पा०सू० ६-४-८२) चिच्यतुः, निन्यतुः। "ॠदोरप्" (पा०सू० ३-३-५६) यवः, स्तवः, लवः, पवः। "उरण् रपरः" (पा०सू० १-१-५१) कर्त्ता, किरति। न चैवम् ॠदोरप् ह्रस्वान्तेभ्यः कॄञादिभ्योऽपि स्यादिति वाच्यम्, दीर्घोच्चारणवैयर्थ्यापत्तेः। नन्वेवमपि "अष्टन आ विभक्तौ" (पा०सू० ७-२-८४) इत्यत्र सवर्णग्रहो दुर्वारः। न हि तत्रापि सामर्थ्यम्, ह्रस्वोच्चारणे ह्यर्धमात्रिकस्य मात्रिक एव यथा स्यादिति दीर्घग्रहणस्योभयार्थतोपपत्तेरिति चेत्? न, "अप्रत्ययः" (पा०सू०प० ६-१-६९) इति निषेधात्, दीर्घाणामनण्त्वेन सवर्णग्राहकता नास्तीति प्रागेवोक्तत्वाच्च। ननु दीर्घाश्चेदनणस्तर्हि 'कारकः' 'हारकः' इत्यादौ रपरत्वं न लभ्येतेति चेत्? भ्रान्तोऽसि। न हि दीर्घाः क्वाप्यण्ग्रहणेन नोपस्थाप्यन्ते इति ब्रूमः, किन्तु ग्रहणकशास्त्रे तदुपजीव्येषु वर्णोपदेशादिषु च इतरत्र तु वाक्यापरिसमाप्तिन्यायानवतारादस्त्येवाण्ग्रहणेन दीर्घग्रहणमिति तत्त्वम्।

उदित्—"कुहोश्चुः" (पा०सू० ७-४-६२) चकार, जगाद। अप्रत्यय इति निषेधस्तु उगित्सु न प्रवर्त्तते, उगित्करणसामर्थ्यात्। अत एवाहुः—"भाव्यमानोण् सवर्णान्न गृण्हाति" (पा०भा०) इति। तुक्-लुक्-नुक्-तुडादयस्तु नोदितः, "प्रतिज्ञानुनासिक्याः पाणिनीयाः" (भा०इ०) इत्यभ्युपगमात्। अप्रत्यय इति किम्? विधीयमानानां प्रत्ययागमादेशानां सवर्णग्राहकत्वं मा भूत्। "अत इञ्" (पा०सू० ४-१-९५) "इदम इश्" (पा०सू० ५-३-३) "आर्द्धधातुकस्येड्" (पा०सू० ७-२-३५) "भुवो वुक्" (पा०सू० ६-४-८८) "अम् सम्बुद्धौ" (पा०सू० ८-१-९९) इह हि सर्वत्रोपदेश इति वचनात्सूत्रान्तर्गतेष्वेव इञादिशब्देष्वित्संज्ञा प्रवर्त्तते। लोपस्तु तत्रानुपूर्व्याद्बाधितोऽपि पदस्वरूपपर्यालोचनायां प्रवृत्तः। ततः "स्वं रूपम्" (पा०सू० १-१-६८) इति संज्ञाबलात् ज्ञायमाना पदार्थोपस्थितिरनुबन्धविनिर्मुक्तस्यैव भवति। तथा चोपस्थापकस्याण्त्वात्सवर्णग्रहणं प्राप्तं निषिध्यते इत्युचितम्। अत एव चतुर्दशसूत्र्यामुच्चारणार्थस्याकारस्येवेत्संज्ञकानामपि णकारादीनां लण्मध्याकारस्य

च पक्षपर्यालोचनायामेव "लोपश्च बलवत्तरः" इति न्यायेनापहारादितरान्तर्भावेणैव संज्ञा प्रवर्त्तते इति सिद्धान्तः । इदं च "अलोऽन्त्यात्पूर्व उपधा" (पा०सू० १-१-६५) इति सूत्रे "तस्मिन्निति निर्दिष्टे" (पा०सू० १-१-६६) इत्यत्र च कैयटग्रन्थे स्पष्टम् । इट् अक इकोचीत्यादौ सानुबन्धाद्विभक्तिस्तु प्राथमिकबोधे विशिष्टस्य विषयतया तस्यैवार्थवत्त्वमादाय । अन्यो हि पश्चादुपतिष्ठते न तु प्रयुज्यते इति कथं ततो विभक्तिः क्रियताम् ? इत्संज्ञाकार्यं तु आनर्थक्यात्तदङ्गेष्विति न्यायेन प्रत्याय्ये प्रवर्त्तते । विभक्त्यर्थान्वयोऽप्येवम् । दृष्टं हि ङमुडादावुपस्थापके कृतस्य लिङ्गस्य तद्बोध्ये फलप्रवर्त्तकत्वमिति दिक् ।

स्यादेतत् । उक्तरीत्या "उदोष्ठ्यपूर्वस्य" (पा०सू० ७-१-१०२) इति सूत्रे उच्छब्दे प्रवृत्ता इत्संज्ञा लक्ष्ये तित्स्वरं प्रवर्त्तयेदिति चेत् ? सत्यम्, अत एवैतत्समाधानाय पूर्वाचार्यैः पराक्रान्तामिति गृहाण । कथं तर्हि 'एओङ्' सूत्रे तद्दूषणाय प्रवृत्तमिति चेत् ? तत्कालावधारणेन कृतार्थस्य तकारस्यानुबन्धान्तरवैषम्यादिति गृहाण । अत एव 'वैयाकरणः' इत्यत्र ऐचश्चित्स्वरो न भवति । 'पचस्व' इति शपोऽप्येवम् । "न य्वाभ्याम्" (पा०सू० ७-३-३) इति सूत्रे 'अचः परस्य द्वे' इत्यत्र च ऐचोश्चकारस्य प्रत्याहारे उपक्षयात् । यद्वा, इञित्रादिष्वपि माऽस्तु सूत्रान्तर्गतेष्वित्संज्ञा, किन्तु फलप्रत्यासत्तेः पदार्थेष्वेव साऽस्तु । नैते उपदिष्टा इति चेत् ? न ते फलभाज इति तुल्यम् । सामर्थ्यात्परंपरासम्बन्धे फलमिति चेत् ? संज्ञापि तत्रैवास्तु सामर्थ्यादिति तुल्यम् । उपदेशेऽन्त्यत्वं हि प्रायोगिकेष्वसम्भवात्तत्प्रत्यायकनिष्ठमानुपूर्वीसाजात्यादाश्रीयते । न चैतत्तपरेष्वस्ति, प्रत्याय्ये तकाराभावादिति दिक् ।

प्रकृतमनुसरामः । भाव्यमानोऽप्युकारादेशः सवर्णान् गृह्णाति "ऋत उत्" (पा०सू० ६-१-१११) इति तपकरणाल्लिङ्गात् । तेन 'अमुना' 'अमूभ्याम्' इत्यत्र ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घः सिद्ध्यति । न चैवं "सनाशंस" (पा०सू० ३-२-१६८) इत्युप्रत्ययोऽपि सवर्णं गृह्णात्विति वाच्यम् आदेशविषयकं ज्ञापकमित्युक्तत्वात् । यद्वा, "अदसोऽसेः" (पा०सू० ८-२-८०) इति सूत्रे एव उश्च ऊश्चेति समाहारद्वन्द्वोऽस्तु । अत एव सोर्लुका निर्देशः कृतः । अत एव च "ऊदुपधायाः" (पा०सू० ६-४-८९) इति सूत्रे गोह इति विकृतनिर्देशं प्रत्याख्यातुं भाष्यकारैरूकारान्तरप्रश्लेष उक्तः ।

नन्वेवमपि "अकः सवर्णे" (पा०सू० ६-१-१०१) इत्यत्र अकारोऽष्टाद-

शानां ग्राहकोऽस्तु, अण्त्वात्। अस्तु च स एव इकारादीनामपि ग्राहकः, "आदिरन्त्येन"(पा०सू० १-१-७१) इत्युक्तेः, ईकारादयस्तु कथं ग्राह्याः? न हि तद्वाचकः शब्दस्तस्मिन्सूत्रे उपात्तोऽस्ति। नन्वक्शब्देन इकारादयोऽप्युपस्थिता इति चेत्तर्हि वाक्यार्थे ते नयन्तु नाम, पदार्थसंसर्गस्य वाक्यार्थत्वात्। न तु तेऽपि स्वार्थोपस्थापकाः, अनुच्चारितत्वादित्युक्तम्। अत एव 'ऋचं वेत्ति' इत्यादौ शब्दविशेषं वेत्तीत्येवार्थो न तु तदर्थं वेत्तीति। तदुक्तं वार्त्तिककृता—"तत्र प्रत्याहारग्रहणे सवर्णाग्रहणमनुपदेशात्। ह्रस्वसम्प्रत्ययादिति चेदुच्चार्यमाणसम्प्रत्यायकत्वाच्छब्दस्यावचनम्" इति। शब्दस्य प्रतीयमानस्य अवचनम् अर्थाप्रतिपादकत्वमित्यर्थः।

अत्रोच्यते। प्रत्याहारग्रहणे सर्वत्र स्ववाच्यवाच्ये निरूढा लक्षणा "दीर्घाज्जसि च" (पा०सू०६-१-१०५) इति ज्ञापकात्। "प्रथमयोः पूर्वसवर्णः" (पा०सू० ६-१-१०२) इत्यत्र हि अक इत्यनुवर्त्तते। न चाक्शब्दवाच्यो दीर्घोऽस्ति, योऽस्य निषेधस्य विषयः स्यात्। नन्वाकारोऽस्तीति चेत्? न, "नादिचि" (पा०सू० ६-१-१०४) इत्यनेनैव तत्र निषेधसिद्धेः। "प्वादीनाम्" (पा०सू० ७-३-८०) इत्यादिनिर्देशा अपीह लिङ्गम्। नन्वेवम् "इको यणचि" (पा०सू० ६-१-७७)इति सूत्रे ईदातोर्ग्रहणं न स्यात्, युगपद्वृत्तिद्वयविरोधात्। तथा च 'सुध्युपास्यः' 'दध्यानय'इत्यादि न सिध्येदिति चेत्? न, सति तात्पर्ये युगपद्वृत्तिद्वयस्य स्वीकारे बाधकाभावात्। इह च "आण्नद्याः" (पा०सू० ७-३-११२) इत्यादिनिर्देशानां तात्पर्यग्राहकत्वात्। यदि तु प्राचां मते श्रद्धावशाद्युगपद्वृत्तिद्वयं नाभ्युपैषि, तर्हीह ईदातोरपि इगच्छब्दयोर्लक्षणैवास्तु। स्ववाच्यह्रस्ववाच्यत्वाविशेषात्। स्ववाच्यतापि परमस्तीत्यन्यदेतत्।

नन्वेवमपि 'शरीरम्' इत्यादौ शकारस्य स्थानसाम्याद्यकारादेशः प्राप्नोति, इकारवाच्यो हि दीर्घः तत्सवर्णश्च शकार इति तस्यापीग्ग्रहणेन ग्रहणात्। तथा 'शीतलम्' इत्यादावपि यण्प्रसङ्गः, दीर्घः परं न भवति, अक्शब्दवाच्यवाच्यतायाः दीर्घे विश्रान्त्या तत्सम्बन्धग्रहे मानाभावादिति।

अत्रोच्यते। भवेदयं शकारस्य यकारादेशरूपो दोषः। यदि स्ववाच्यसवर्णे लक्षणां वदाम। वयन्तु स्ववाच्यवाच्ये सत्येव ब्रूमः। न च ईकारः शकारस्य वाचकः, दीर्घाणामनण्त्वेन सवर्णग्राहकताया असकृदावेदितत्वात्। भाष्यमते त्वज्झलोः सावर्ण्यमेव नास्तीत्युक्तम्।

तदयमिह निर्गलितोऽर्थः। अकारोऽष्टादशानां संज्ञा। एवमिदुतौ।

ऋ ऌ इत्येतौ तु पर्यायशब्दौ त्रिंशतः संज्ञे, ऋऌवर्णयोः सावर्ण्यस्योपसंख्यातत्वात्, 'ऋऌक्' (मा०सू०२)सूत्रे"ऋत्यकः"(पा०सू०६-१-१२८)इति प्रकृतिभावदर्शनेनैव ज्ञापितत्वाद्वा । न च तुल्यव्यक्तिकसंज्ञाद्वयप्रणयनवैयर्थ्यं, तदर्थमिह सूत्रान्तराप्रणयनात् । एचस्तु द्वादशानां संज्ञाः । यवला द्वयोः । रहौ तु स्वस्यैवेति । यद्यपि हकार आकारस्य सञ्ज्ञेति प्राप्तं तथापि तत्परिहाराय "नाज्झलौ" (पा०सू० १-१-१०) इत्यत्रैव यत्नः कृतो न विस्मर्त्तव्यः ।

वार्त्तिककारास्त्विहाण्ग्रहणं प्रत्याचख्युः । तन्मते "अस्य च्वौ" (पा०सू० ७-४-३२) इत्यादौ जातिनिर्देशात्सिद्धम् । अनुवाद्यविशेषणस्य च ह्रस्वत्वस्य ग्रहकत्ववदविवक्षा । विधिप्रदेशे तु एकत्ववद्विवक्षात सर्वेष्टसिद्धिः । यद्यप्यस्मिन्पक्षे ऋकारेण ऌकारग्रहणं दुःसाध्यं तथापि ऋऌक्सूत्रोक्तरीत्या समाधेयमिति दिक् ।

तपरस्तत्कालस्य (पा०सू० १-१-७०) । तः परो यस्मात्स तपरः । तात्परोऽपि तपरः । द्विविधोऽप्ययं स्वसमानकालस्य ग्राहकः स्यात् । तेन अत् इत् उदिति षण्णां संज्ञाः । ऋदिति द्वादशानाम् । अत एव "उपसर्गादृति धातौ" (पा०सू० ६-१-९१) इत्यत्र सावर्ण्यात् ऌवर्णस्य ग्रहणं तपरत्वाद्दीर्घे नेति सिद्धान्तः । पञ्चमीसमासोदाहरणन्तु "वृद्धिरादैच्" (पा०सू० १-१-१) इति । इह हि संज्ञायां कृतं तात्परत्वं संज्ञिनोः फलति डमुट्परत्वमिवेत्युक्तम् । परम्परासम्बन्धेन लाक्षणिकस्य स्मारकतेति पक्षे तु न कश्चिद्दोषः । "अदेङ् गुणः" (पा०सू० १-१-२) इत्यत्राप्येवं सिद्धम्, तत्र तकारस्योभयार्थतया सामर्थ्यविरहात् । यदि तुकालसूत्रे वक्ष्यमाणरीत्याऽणुदित्सूत्रेऽशब्द संज्ञायामित्यनुवर्त्तते, यदि वा कार्यकालपक्षमाश्रित्य भाव्यमानत्वादेव सवर्णग्रहणं वार्यते, तदा वृद्धिसूत्रे तपरकरणं स्पष्टार्थम् । इह तु पञ्चमीसमासो नाश्रयणीयः । अत एव शास्त्रान्ते "अदत्" इति भाष्यं सङ्गच्छते । 'गुणा भेदकाः' इति पक्षे तु वृद्धिसूत्रे तपरकरणमुभयार्थम्, गुणान्तरयुक्तस्य ग्राहकत्वात् । भेदकत्वे ज्ञापकं त्वणुदित्सूत्रस्थमण्ग्रहणमिति "हल्" (मा०सू०१४) इति सूत्रे एवोपपादितम् । तथैतत्सूत्रस्थं तत्कालस्येति पदमपीह ज्ञापकम् । अन्यथा हि स्वस्य रूपस्येत्यनुवृत्त्यैव सिद्धे किं तेन ? न च सावर्ण्याल्लृवर्णग्रहणार्थं तत् । एवं हि तत्रैव ऌग्रहणं कुर्यात्, "ऋति ऋ वा" ( का०वा० ) इति विहितं रेफद्वयमध्यं वोच्चारयेत् । आ इत्येव सिद्धे "अतो दीर्घो यञि" (पा०सू० ७-३-१०१) इति सूत्रे दीर्घग्रहणमपीह लिङ्गमिति दिक् ।

अत एवैतत्सूत्रं भाष्यादौ द्वेधा व्याख्यातं विध्यर्थं नियमार्थं चेति। तथाहि, अणिति नानुवर्त्तते। तेनाऽऽकारादावनणि तत्कालानां सवर्णानां गुणभेदेऽप्यनेन ग्रहणम्। "अतो भिस ऐस्" (पा०सू० ७-१-९) इत्यादौ तूभयप्रसङ्गे परत्वादस्यैव प्रवृत्तिः। ननु संज्ञानां बाध्यबाधकभावो नेत्युक्तमिति चेत्? सत्यम्, अविरोधे फलभेदे च भवत्येव समावेशः। इह तु विरोध एवास्ति। अष्टादश ग्राह्याः, षड् ग्राह्या इति हि विरुद्धम्, संख्याकृतव्यवहारस्य परस्परपरिहारेणैव दृष्टत्वात्। अत एव "छादेर्घे" (पा०सू० ६-४-९६) इति सूत्रे "अद्विप्रभृत्युपसर्गस्य" इति वक्तव्यमिति वार्त्तिकं सङ्गच्छते इत्याहुः। वस्तुतस्तु नेह संज्ञासूत्रद्वये संख्योपात्ता, येन विरोधः स्यात्, किन्तु "अतो भिस" (पा०सू० ७-१-९) इत्यादौ तपरकरणसामर्थ्याद्बाध्यबाधकभावोऽनुमीयते इति तत्त्वम्। वस्तुतस्तु तकारविशिष्टेयं संज्ञा, न त्वण्मात्रम्। तत्कालस्येति तच्छब्दस्तु विशेष्यमात्रं परामृशति, न तु विशिष्टम्। तदुच्चारणकालसदृशे लक्षणा तु प्राचां मतेऽप्यस्त्येव। सर्वनामपदेपि "एतस्यैव वारवन्तीयं" "तत्त्वमसि" इत्यादौ लक्षणायाः पूर्वोत्तरतन्त्रयोः स्थितत्वात्। तथाच टिघुभाद्यन्तर्गताणवदिह पदैकदेशत्वेनानर्थकयाद्ग्राहकताप्रसङ्ग एव नास्ति। विभक्त्युत्पत्तिरप्येवं सति सङ्गच्छते। वृद्धिसूत्रे "अत्राकारः प्रयोगस्थौकारैकारैरर्थवान्" इति हरदत्तग्रन्थस्तु प्राचां रीत्या नेतव्य इति निष्कर्षः। सोऽयं विध्यर्थतापक्षः।

यदा त्वणित्यनुवर्त्तते, तदा नियमार्थमिदं 'तपरोऽण् तत्कालस्यैव' इति। गुणानामभेदकत्वादनण्सु न कश्चिद्दोषः। अस्मिंश्च पक्षे तत्कालत्वग्रहणं शक्यमकर्त्तुम्, अण्ग्रहणानुवृत्तिश्चानावश्यकी, तपरः स्वरूपस्यैवेति नियमेनापीष्टसिद्धेः। "दिव औत्" (पा०सू०७-१-८४) इत्यत्र तपरकरणं स्वरार्थं न तु कालावधारणार्थं, भाव्यमानतया सवर्णग्रहणाप्रसक्तेः। तथाच स्वरितः प्रयुज्यते—"द्यौः पितः पृथिवि मातर ध्रुक्" इति। "पृथिवी उत द्यौः" इत्युदात्तप्रयोगस्तु द्योशब्दस्य बोध्यः। "औत्" (पा०सू० ७-३-१२८) "अच्च घेः" (पा०सू० ७-३-११९) इत्यत्र तु मुखसुखार्थं तपरकरणं, व्याख्यानात्। तेन "सन्निधाने अग्नौ" इत्यादौ तित्स्वरो नेति वृत्तिकारहरदत्तादयः। यत्तु "न विभक्तौ तुस्माः" (पा०सू० १-३-४) इत्यत्र जयादित्यादिभिरुक्तम्—"इदोऽत्" (पा०सू० ३-४-१०६) इत्यत्रायं निषेधो न भवति "इदमस्थमुः" (पा०सू० ५-३-२४) इत्युकारानुबन्धकरणादनित्यत्वादस्येति। तदभ्युपगमवादमात्रम्, तित्स्वरप्रसङ्गात्। न चेष्टापत्तिः 'भक्षीय तव

राधस' इत्यादावन्तोदात्तश्रवणात्। तस्माद् "इटोत्"(३-४-१०६)"इत्यत्रापि मुखसुखार्थस्तकारः।"एत ईद्बहुवचने"(पा०सू०८-२-८१)"उर्ऋत्" (पा०सू०७-४-६) इत्यादिष्वप्येवमेवेति दिक्। वस्तुतस्तु "दिव औत्" ( पा० सू० ७-१-८४ ) इत्यत्राप्येवमेव, हलः स्रंसनधर्मिणोऽनुदात्ते कृते "उदात्तस्वरितयोर्यणः" (पा० सू० ८-२-४) इत्येव स्वरितासिद्धेः॥ स्यादेतत्। द्रुता मध्यमा विलम्बिता चेति तिस्रो वृत्तयः। तदुक्तम्—

अ(१)भ्यासार्थे द्रुता वृत्तिः प्रयोगार्थे तु मध्यमा।
शिष्याणां तूपदेशार्थं वृत्तिरिष्टा विलम्बिता॥ इति।

ताश्च क्रमेण त्रिभागाधिकाः। तथाहि, द्रुतवृत्त्या यस्याम् ऋचि पठ्यमानायां नव पानीयपलानि स्रवन्ति तस्यामेव ऋचि मध्यमवृत्त्या पठ्यमानायां द्वादश, विलम्बितायान्तु षोडश। एवं स्थिते यदि सूत्रकृद्विलम्बितायां तपरकरणमकार्षीन्मध्यमायां द्रुतायां वा, तर्हि वृत्त्यन्तरेण पाठकाले "अतो भिस ऐस्" (पा० सू० ७-१-९) न स्यात्, कालावधारणेन दीर्घप्लुतयोरिव वृत्त्यन्तरस्यापि वारणादिति। तथा च वार्त्तिकम्-"द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कालभेदात्" इति। अत एव निपातनान्मध्यशब्दे ह्रस्व इति संहितासंज्ञासूत्रे कैयटः। अत्र सिद्धान्तवार्तिककारा एवमाहुः-'सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद् वृत्तयो विशेष्यन्ते' इति। अस्यार्थः-व्यञ्जकीभूतो ध्वनिर्यद्यपि बहुकालानुवर्त्ती, तथापि कश्चिन्मात्रापर्य्यन्तमेवाभिव्यनक्ति, तदुत्तरकालोपहितस्तु स्वयमेवानुवर्त्तते न तु परमभिव्यनक्ति। यद्वा, ह्रस्वस्य व्यञ्जको ध्वनिर्वृत्तित्रयेऽपि मात्राकाल एव। मध्यमाविलम्बितयोः प्रथमगृहीतध्वन्यनुनिष्पादिना ततो न्यूनकालेन ध्वन्यन्तरेणाभिव्यक्त्यन्तरं जन्यते, अभिव्यङ्ग्यस्तु न भिद्यते। एवं दीर्घव्यञ्जकोऽपि सर्वत्राऽऽद्यो ध्वनिर्द्विमात्र एव। अनुनिष्पादी तु ततो न्यून इत्याद्यूह्यम्। व्यङ्ग्यास्तु स्वत एव परस्परविलक्षणाः। एतच्च सर्वं कैयटेन ध्वनितम्—

तस्मादुच्चारणं तेषां मात्राकालं प्रतीयते।
द्विमात्रं वा त्रिमात्रं वा न वर्णो मात्रिकः स्वयम्॥ इति।

शब्दान्तराधिकरणस्थराणककारोक्तिस्तु-कथं नेयेति सूरिभिश्चिन्त्यम्। वर्णास्तु नित्या एव। वर्णोत्पत्तिपक्षे तु तदनुनिष्पादी दूरा-

---

(१) अयमेव श्लोको द्वितीयान्ततया इष्टेत्यस्य स्थाने च 'कुर्याद्' इति पाठान्तरेण पठित ऋक्प्रातिशाख्ये ( पटल १४ सू० ४९ )

दपि ग्राह्यः कश्चिद् ध्वनिरवश्याभ्युपेयः । तस्यैव कालभेदाद् वृत्तित्रैविध्यम् । वर्णास्तु वृत्तिभेदेऽप्येकरूपा एव ।

कैश्चिद्व्यक्तय एवास्य ध्वनित्वेन प्रकल्पिताः । ( वै० भू० का० )

इति पक्षे तु कालरूपोपाधिविशेषावच्छिन्नस्यैव व्यक्तित्वमिति दिक् ।

उक्तं च भाष्ये—

ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते ।
अल्पो महांश्च केषांचिदुभयं तत्स्वभावतः ॥ इति ।

अस्यार्थः—शब्दो द्विधा व्यञ्जको व्यङ्ग्यश्च । शब्दानां व्यङ्ग्यानां व्यञ्जकत्वेन सम्बन्धी यो ध्वनिः स एव महानल्पश्च लक्ष्यते । तदुभयं व्यङ्ग्यं व्यञ्जकरूपं केषांचिदेव ताल्वादिव्यापारजन्यानामेव न तु भेर्यादिजन्यानामपि । कुतः ? स्वभावतः, कारणवैलक्षण्यात् । अत्रोभयमिति भावप्रधानो निर्देशः । उभयरूपतेत्यर्थः ।

आदिरन्त्येन सहेता ( पा० सू० १-१-७१ ) । अन्त्येनेता सहोच्चार्यमाण आदिवर्णो वर्णसङ्घातो वा मध्यगानां संज्ञा स्यादादेः स्वरूपस्य च । वर्णो यथा अल् । सङ्घातस्तु कञ् । इह अभूततद्भावे "कृभ्वस्ति" ( पा० सू० ५-४-५० ) इत्यतः "कृञो द्वितीय" ( पा० सू० ५-४-५८ ) इति ञकारेण प्रत्याहारः । आद्यन्तौ तावदवयवौ । ताभ्यामवयवी समुदाय आक्षिप्यते । तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदवयवेषु संज्ञाऽवतरन्ती मध्यगेषु विश्राम्यति, न त्वाद्यन्तयोः, संज्ञास्वरूपान्तर्भावेण तयोः पारार्थ्यनिर्णयात् । अतः स्वंरूपमित्यनुवर्त्तते । स्वं रूपं चादेरेव गृह्यते, नान्त्यस्य, अप्राधान्यात् । अन्त्येनेति ह्यप्रधाने तृतीया । तेन 'दध्यत्र' इत्यादौ केवल एव यकारः प्रवर्त्तते न णकारसहित इति कैयटादयः ।

अत्रेदं वक्तव्यम्—"प्रत्याहारेष्वाद्या वाचकास्तत्र ग्रहणकशास्त्रं सावकाशम्" इति ग्रहणकशास्त्रस्थभाष्यादिपर्यालोचनया वाचकत्वं तावदाद्यवर्णे विश्रान्तम्, अन्त्यस्तु तात्पर्यग्राहकः । सहग्रहणात्तु विशिष्टाद्विभक्त्युत्पत्तिरिति द्योतकान्तरवैषम्यमिति स्थितम् । तत्रान्त्यस्येत्संज्ञयाऽपहृतस्य कथं संज्ञित्वप्रसक्तिः ? अन्यथाऽजादिसंज्ञानामपि णकारादावतिप्रसक्तेः क उद्धारः ? किञ्च अस्तु विशिष्टस्य यण्संज्ञा, तथापि 'दध्यत्र' इत्यत्र यण्शब्दापादनमसङ्गतमेव, न्यायसाम्येनेक्शब्दस्यैव स्थानित्वप्रसक्तया इकारस्य स्थानित्वासम्भवात् ।

अन्त्येनेति किम् ? सुडिति तृतीयैकवचनावयवेन मा भूदिति वृ-

न्निकाराः । "टाङसिङसाम्" (पा० सू० ७-१-१२) इत्यादिनिर्देशैष्टकारो न पूर्वान्त इति निर्णयादिति भावः । नन्वेवमपि टकारान्तस्य सङ्घस्य टाटकारोऽन्त्यो भवत्येवेति चेत् ? न, ऽयवसितान्त्यताविरहात् । इह हि अन्त्यत्वप्रयुक्ता यस्येत्संज्ञा तेन प्रत्याहार इति "सुडनपुंसकस्य" (पा०सू० १-१-४३) इति सूत्रे हरदत्तः । न चैवं रप्रत्याहारासिद्धिः, लण्सूत्रेऽनुनासिकप्रतिज्ञासामर्थ्यादनन्त्येनापि प्रत्याहारात् ।

इदं तु वक्तव्यम् । औटष्टित्त्वस्यानन्यार्थतया तेनैव सुट्प्रत्याहारः, प्रत्यासत्तेश्च । तथा चान्त्यग्रहणं मास्त्विति ।

अत्रेदं समाधानम्--मध्यमेनेता सहित आदिस्तदुत्तरेषामपि ग्राहको मा भूत् ।

एवमन्त्येन सहितो मध्यमः पूर्वेषां संज्ञा मा भूदित्यादिग्रहणम् ।

इतेति किम् ? रप्रत्याहारो यथा स्यात् । स ह्यनन्त्येनाप्यनुनासिकप्रतिज्ञासामर्थ्याद्भवतीत्युक्तम् । न चैतदितेत्यस्य विरहे लभ्यते ।

नवीनास्तु सहाऽऽसमन्तादेतीति सहेता मध्यमो वर्णः । अन्त्येनादिः अणित्यादिसंज्ञको भवतीत्यर्थः । आद्यन्तसमभिव्याहाराच्च सहेता मध्यमो वर्णो लभ्यते । स्वं रूपमिति चानुवर्तते । वृद्धिगुणादिसंज्ञास्विवेहापि सामानाधिकरण्यात्संज्ञात्वावगतिः । अस्मिंश्च व्याख्याने "हलन्त्यम्" (पा० सू० १-३-३) इत्यत्रेतरेतराश्रयशङ्काऽपि नास्तीत्याहुः । आद्यन्तावयवद्वारा समुदायानुकरणेन सिद्धेऽन्त्यव्यावृत्तये इदम् ।

येन विधिस्तदन्तस्य (पा० सू० १-१-७२) ॥ विशेषणं तदन्तस्य संज्ञा स्यात् स्वस्य च रूपस्य । "एरच्" (पा० सू० ३-३-५६) चयः, जयः, अयः । "ओरावश्यके" (पा०सू० ३-१-१२५) अवश्यलाव्यम् । इह येनेति करणे तृतीया, न तु कर्त्तरि, कृद्योगलक्षणषष्ठ्या बाधितत्वात् । विधिरिति हि कर्माणि किप्रत्ययः । तेन कर्मणोऽभिहितत्वाद् "उभयप्राप्तौ" (पा० सू० २-३-६६) इति नियमस्य नायं विषयः । करणं च परतन्त्रं, कर्त्रधिष्ठितस्यैव करणत्वात् । एवञ्चेह तृतीयया पारतन्त्र्यं लक्ष्यते "सुब् विभक्तौ न लक्षणा" इति नैयायिकोद्घोषस्तु निर्मूलः । न च प्रत्ययानुशासनवैयर्थ्यापत्तिस्तन्मूलम्, तिङ्क्ष्वपि तस्य तुल्यत्वात्, 'रथो गच्छति' इत्यादौ व्यापारे लक्षणायास्त्व(१)यापि

(१) नैयायिकेनेत्यर्थः । स हि आख्यातस्य कृतौ शक्तिं मन्यमानोऽचेतने रथे कृतेरसत्त्वाद् व्यापारे लक्षणां वदति ।

स्वीकारात्। अत एव "प्रयाजशेषेण हवींष्यभिघारयति" इत्यत्र प्रयाजशेषं हविष्युक्षारयेदिति मीमांसका व्याचख्युरिति दिक्। न च "एरच्" (पा० सू० ३-३-५६) इत्यादाविकारादीनां पारतन्त्र्यं धात्वादीनां च स्वातन्त्र्यं वास्यादीनामिव तक्षादीनामिव च स्वरूपतः सम्भवति, किं तु वैवक्षिकम्। तेन विशेषणमप्रधानं तच्चात्मान्तस्य विशेष्यस्य संज्ञेति फलितम्।

विशेष्यसान्निधौ च विशेषणत्वं भवति। सन्निधिस्तु क्वचित्साक्षान्निर्देशेन, यथा "ईदूदेद् द्विवचनम्प्रगृह्यम्" (पा०सू०१-१-११) इति द्विवचनस्य, क्वचिच्छब्दाधिकारात्, यथा "एरच्" (पा० सू०३-३-५६) इत्यत्र धातोः, क्वचिदाक्षेपाद्यथा "इको झल्" (पा० सू० १-२-९) इत्यत्र सना धातोः। "इको यणचि" (पा० सू० ६-१-७७) "एचोऽयवायावः" (पा०सू० ६-१-७८) इत्यादौ तु न कथञ्चिदपि विशेष्यसन्निधिः। अतो नेदं प्रवर्त्तते।

स्यादेतत्। "उदोष्ठ्यपूर्वस्य" (पा० सू० ७-१-१०२) इत्यत्र ओष्ठ्यपूर्वकत्वं धातोरेव विशेषणं स्यान्न तु ऋकारस्य। स(१) हि विशेषणत्वात्तदन्तस्य संज्ञा। संज्ञा च संज्ञिनं प्रत्याययति, न तु स्वयं विशेषणादियोगमनुभवति। ततश्च 'सङ्कीर्णम्' इत्यादावतिव्याप्तिः, 'पूर्त्तम्' इत्यादावव्याप्तिश्च। एवम् "उतश्च प्रत्ययात्" (पा० सू० ६-४-१०६) इत्यत्राप्यसंयोगपूर्वत्वमङ्गस्य प्रत्ययस्य वा विशेषणं स्यान्न तूकारान्तस्य। ततश्च 'अश्नुहि' इत्यादावतिव्याप्तिः। विशेषणं च यद्यङ्गस्य, तदा 'तक्ष्णुहि' इत्यादावतिव्याप्तिः। अथ प्रत्ययस्य, तर्हि 'तक्ष्णुहि' इत्यादि सिद्ध्यतु, 'अश्नुहि' इत्यादौ तु दोष एवेति।

अत्राहुः। गुणप्रधानभावसापेक्षेयं संज्ञा। तथाच "उतश्च प्रत्ययात्" (पा० सू० ६-४-१०६) इत्यादौ विशेषणसम्बन्धवेलायां गुणभावास्फुरणात्तमनुभूय पश्चाद्विशेष्यसम्बन्धे विशिष्टा संज्ञा भवति। इह हि विशिष्टस्य वैशिष्ट्यम्, न तु विशेष्ये विशेषणमिति, व्याख्यानात्। अत एव न विशिष्टे वैशिष्ट्यं नाप्येकत्र द्वयमिति दिक्। तथाच वार्तिकम्—"येन विधिस्तदन्तस्येति चेत्? ग्रहणोपाधीनां तदन्तोपाधिताप्रसङ्गः। सिद्धं तु विशेषणविशेष्ययोर्यथेष्टत्वात्" इति। ग्रहणोपाधीनां गृह्यमाणविशेषणत्वेन सम्मतानामोष्ठ्यपूर्वत्वादीनामित्यर्थः। यथेष्टत्वादित्यनेनेदं दर्शयति—चतुर्विधेषु विशिष्टवैशिष्ट्यबोधेषु मध्ये विशिष्टस्य वैशिष्ट्यमेवेह सम्मतं न त्वितरत्त्रिकं व्याख्यानाल्लक्ष्यानुरोधाच्च।

(१) ऋकारः।

इह सिद्धान्ताभिमतं विशेषणविशेष्यभावं स्फुटीकर्त्तुं बहूनि वार्त्तिकानि प्रवृत्तानि। तद्यथा–"समासप्रत्ययविधौ प्रतिषेधः" (का० वा०) "द्वितीयाश्रित" (पा० सू० २-१-२४) इत्यादौ श्रितादयो विशेष्यास्तद्विशेषणं च सुप्। एवं "नडादिभ्यः फक्" (पा० सू० ४-१-९९) इत्यादौ नडादि विशेष्यं प्रातिपदिकं विशेषणमिति फलितोऽर्थः। एतेन "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति" इत्यपि व्याख्यातं तस्याप्युदाहृतप्रतिषेधसमानविषयकत्वस्य"दिव उत्"सूत्रे कैयटादिभिरुक्तत्वात्। अत एव "गोस्त्रियोः" (पा० सू० १-२-४८) इति सूत्रे गोन्तं यत्प्रातिपदिकमिति व्याख्यातम्। एतेन "शेषो घ्यसखि" (पा० सू० १-४-७) इत्यादौ ग्रहणवतेति प्रतिषेधं सञ्चारयन्तो हरदत्तादयः प्रत्युक्ताः।

प्रकृतमनुसरामः, श्रितादयो विशेष्या इत्युक्तम्। तेन "द्वितीया श्रित" (पा० सू० २-१-२४) इति समासः 'कृष्णाश्रितः' इत्यत्रैव भवति, न 'कृष्णं परमाश्रितः' इत्यादावपि। तथा "नडादिभ्यः फक्" (पा० सू० ४-१-९९) नाडायनः। नेह सूत्रनडस्यापत्यं सौत्रनाडिः। अनुशतिकादित्वादुभयपदवृद्धिः। ननु "कृष्णं परमश्रितः' इत्यत्र समासप्राप्तिरेव नास्ति। अत्र हि समासात्सुब् विहितः। तेन श्रितान्तं सुबन्तमेव भवति। अत्र कैयटहरदत्तौ–सम्बुद्ध्यन्तमुदाहर्त्तव्यं 'कृष्णं परमश्रित' इति। एताद्धि प्रत्ययलक्षणेन सुबन्तं भवति, श्रितान्तं च श्रूयते इति। स्यादेतत्। सिद्धान्ते श्रितादीनां विशेष्यत्वेऽपि तत्र सुबन्तत्वं बाधितम्। न चात एवान्वयानुपपत्त्या श्रितादिशब्दानां तत्प्रकृतिके लक्षणेति वाच्यम्, सम्बुद्ध्यन्ते एव मुख्यार्थपुरस्कारेणावकाशलाभात्। तथाच 'कृष्णश्रितम्' इत्यादि न सिद्ध्येदिति। उच्यते, समासतद्धितप्रकरणे सर्वत्र श्रितादीनां नडादीनां च तत्तत्प्रकृतिके लक्षणैव "खट्वा क्षेपे" (पा० सू० २-१-२६) "नदीभिश्च" (पा० सू० २-१-२०) इत्यादावभेदस्य बाधात्। न हि तत्र सम्बुद्ध्यन्तता सम्भवति। "पूर्वकालैक" (पा० सू० २-१-४९) इत्यादौ सम्बुद्ध्यन्ततासम्भवेपि "एकविभक्तौ" (पा० सू० ए० १-२-६४)इत्यादिसौत्रनिर्देशो न सिध्येत्। तस्मात्सामान्यापेक्षज्ञापकबलेनैकरूप्याय सर्वत्र तत्तत्प्रकृतिके लक्षणेति स्थिते इहत्यभाष्यवृत्त्योः कैयटहरदत्तकृतं भङ्गवा व्याख्यानमनादेयमित्यवधेयम्।

अस्यापवादमाह–उगिद्वर्णग्रहणवर्जमिति। उगिता वर्णेन च प्रातिपदिकं विशेष्यते इति फलितोऽर्थः। महान्तमतिक्रान्ता अतिमहती। उपसर्ज-

नत्वाद्गौरादिलक्षणस्य ङीषोऽभावे उगिदन्तत्वात् ङीप्। बृहन्महतोर्गौरादित्वं नास्तीत्यपि केचित्। युक्तं चैतत्। "महते सौभगाय" इत्यादौ विभक्तेरुदात्तत्वसिद्धये "शतुरनुमः" (पा०सू०६-१-१७३) इति सूत्रे "नद्यजाद्युदात्तत्वं बृहन्महतोरुपसंख्यानम्" (का०वा०) इति वार्त्तिकस्यारम्भसामर्थ्यान्ङीपोऽप्युदात्तत्वसिद्धेः। "अत इञ्" (पा०सू०४-१-९५) दाक्षिः। न चेह सामर्थ्यात्तदन्तविधिः, अस्यापत्यमिः काम इत्यत्र चरितार्थत्वात्। न चैवमिञो ञित्त्वं व्यर्थं स्यादिति वाच्यम् "बाह्वादिभ्यश्च" (पा० सू० ४-१-९६) इत्यत्र यथायथं वृद्धयाद्युदात्ताभ्यां चरितार्थत्वात्। नन्वेवमपि 'औपगविः' इत्यादावेव स्यान्न तु 'दाक्षिः' इति, अकारस्येहानर्थकत्वादिति चेत्? न, वर्णग्रहणे अर्थवत्परिभाषाया अप्रवृत्तेः। तथाचैतत्सूत्रशेषे वार्तिकम्—अलैवानर्थकेनेति। अत एव संघातेनार्थवतैव। तेन "स्त्रियाः" (पा०सू०६-४-७९) इतीयङ् इहैव भवति 'स्त्रियौ' 'परमस्त्रियौ' नेह 'शस्त्र्यौ' 'शस्त्र्यः'। तथा "इन्हन्पूषार्यम्णां शौ" (पा०सू० ६-४-१२) "सौ च" (पा० सू० ६-४-१३) इत्यत्र इन् इत्यत्र संघातग्रहणे प्लीहन्ग्रहणं न। तेन 'प्लीहानौ' इत्यादौ "सौ च" (पा०सू० ६-४-१३) इति नियमाप्रवृत्तेः दीर्घः सिध्यति। "उदः स्थास्तम्भोः" (पा०सू०८-४-६१) इत्यत्र "वा पदान्तस्य" (पा० सू० ८-४-५९) इत्यतः पदग्रहणानुवृत्तिपक्षेऽप्युदेव विशेष्यः। अननुवृत्तौ तु न काचित् क्षतिः। उभयथाप्यनर्थकस्याग्रहणान्नेह 'गर्मुत्स्थास्यति' 'गर्मुत्सुवर्णतृणयोः'। ननु 'शस्त्र्यौ' 'प्लीहानौ' इत्यत्र प्राप्तिरेव नास्ति 'पदाङ्गाधिकारे तस्य तदुत्तरपदस्य च" (प० भा०-२९) इति वचनात्। न हीदन्तस्यापि तदुत्तरमिति चेत्? सत्यम्, 'पदाङ्गाधिकारे' इति वचनसत्त्वे तथैव, किं त्वेतद् दूषितं भाष्ये, सौत्रेण तदन्तविधिनैव गतार्थत्वात्। अत एव परमश्चासावतिमहांश्चेति विग्रहे 'परमातिमहान्' इति सिध्यति वचनाश्रयणे तु नैतत्सिध्येत्। अतिमहच्छब्दस्य महदुत्तरपदत्वेऽप्यनङ्गत्वात्, परमाविशिष्टस्याङ्गत्वेऽपि महदुत्तरपदत्वाभावात् सौत्रेण तदन्तविधिना तु "सान्तमहतः" (पा० सू० ६-४-१० ) इति दीर्घमुगिल्लक्षणो नुमागमश्चेह सिध्यति। न चेह "ग्रहणवता" ( प० भा० ३१ ) इति निषेधः शङ्क्यः "समासप्रत्ययविधौ ( का० वा० ) इत्यनेन सह समानविषयः स इत्युक्तत्वात्। एतेन

वीतजन्मजरसः परं शुचि ब्रह्मणः पदमुपैतुमिच्छताम्। (कि०५-२२)

इति भारविप्रयोगो व्याख्यातः। 'अलैव' इत्यस्यापवादः पठ्यते भाष्ये, "अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोज-

यन्ति" ( प० भा० १६ ) इति । अन्-'राज्ञा' इत्यर्थवता, 'साम्ना' इत्यनर्थकेन । इन्-'दण्डी' इत्यर्थवता, 'वाग्मी' इत्यनर्थकेन, अस्-'सुपयाः' इत्यर्थवता, 'सुस्रोताः' इत्यनर्थकेन । मन्-'सुशर्मा' इत्यर्थवता, 'सुप्रथिमा, इत्यनर्थकेन । तच्च "इणः षीध्वम्" ( पा० सू० ८-३-७८ ) इति सूत्रेऽङ्गग्रहणेनार्थवद्ग्रहणपरिभाषाया अनित्यत्वज्ञापनात्सिद्धम् । 'परिवेविषीध्वम्' इत्यत्र हि षीध्वंशब्दस्यानर्थकत्वादेवाग्रहणे सिद्धे किं तन्निवृत्त्यर्थेनाङ्गग्रहणेनेति दिक् ।

सूत्रस्योदाहरणान्तराण्याह वार्त्तिककारः—

प्रयोजनं सर्वनामाव्ययसंज्ञायाम् । अन्वर्थसंज्ञयाऽऽक्षिप्तः संज्ञी सर्वादिभिर्विशिष्यते इति फलितोऽर्थः ।

उपपदविधौ भयाढ्यादिग्रहणम् । भयञ्च आढ्यादयश्चेति द्वन्द्वः । तेन खच्प्रकरणे "मेघर्त्तिभयेषु कृञः" ( पा० सू०३-२-४३ ) इतिसूत्रे वाक्यं भित्त्वा उपपदेन मेघर्त्ती विशेष्येते भयेन तूपपदम् । यदि तु भयाढ्यशब्दयोर्द्वन्द्वं कृत्वा आदिशब्देन बहुव्रीहिः क्रियेत तदा क्षेमप्रियमद्रैरप्युपपदं विशेष्येत । सिद्धान्ते तु क्षेमादय उपपदेन विशेष्यन्ते । भयङ्करः, अभयङ्करः । आढ्यङ्करणं, स्वाढ्यंकरणम् ।

ङीप्प्रतिषेधे स्वस्रादिग्रहणम् । स्वसा, परमस्वसा ।

अपरिमाणबिस्तादिग्रहणं च । प्रतिषेधे प्रयोजनमित्यनुवर्त्तते । द्विगुना सन्निधापितमुत्तरपदं बिस्तादिभिर्विशेष्यते इति भावः । द्विबिस्ता, द्विपरमबिस्ता । द्व्याचिता, द्विपरमाचिता । दितिः-दैत्यः, आदित्यः । "दित्यदित्यादित्य" ( पा० सू० ४-१-८५ ) इति सूत्रेऽदितिग्रहणं न कर्त्तव्यं, परमदित्यादिभ्यस्त्वनभिधानान्न भवतीति भावः । रोण्या अण् "रोणी" ( पा०सू० ४-२-७८ ) इति सूत्रेण चातुरर्थिकः । रौणः, आजकरोणः, सैंहकरोणः ।

तस्य च । तस्य चेति वक्तव्यम् । उक्तानां वक्ष्यमाणानां च सर्वेषामयं शेषः । तथाचेह सूत्रे 'स्वं रूपम्' इत्यनुवर्त्तते इति फलितोऽर्थः । ननु व्यपदेशिवद्भावेन 'रौणः' इति सिद्धमिति चेत् ? न, "व्यपदेशिवद्भावोऽप्रातिपदिकेन" ( प० भा० ३२ ) इति निषेधादिति भाष्यकाराः । यद्यपि रोणीशब्दो न प्रातिपदिकं, तथाप्यप्रातिपदिकेनेत्यत्र वाक्ये प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात्स्त्रीप्रत्ययान्तैरपि व्यपदेशिवद्भावो नास्तीति भावः । यथाकथञ्चित्प्रातिपदिकग्रहणे लिङ्गविशिष्टग्रहणमिति हि ङ्याप्सूत्रे वक्ष्यते । ननु यदि तस्य चेत्युच्यते, स्वरूपग्रहणं चानुवर्त्यते, तर्हि "व्यपदेशिवद्भावोऽप्रातिपदिकेन"

( पा० भा० ३२ ) इत्यस्य निर्विषयत्वं स्यादिति चेत् ? न, "सूत्रान्ता-ठक्" ( पा० सू० ४-२-६० ) "दशान्ताड्डः" ( पा० सू० ५-२-४५ ) इत्यादौ सावकाशत्वात्। न च तत्रान्तग्रहणसामर्थ्यादेव व्यपदेशिवद्भावो न भविष्यतीति वाच्यम् "समासप्रत्ययविधौ प्रतिषेधः" ( का० वा० ) इत्येतद्बाधेनान्तग्रहणस्य चरितार्थत्वात्। ज्ञापकसिद्धेयं परिभाषा। पूर्वात्सपूर्वादिनिरिति वक्तव्ये "पूर्वादिनिः" ( पा० सू० ५-२-८६ ) "सपूर्वाच्च" ( पा० सू० ५-२-८७ ) इति योगविभागश्चेह ज्ञापकः। वस्तुतस्तु भयाद्यादाविव "सूत्रान्ताट्ठक्" (पा० सू० ए० ४-२-६० ) "दशान्ताड्डः" (पा० सू० ५-२-४-५) इत्यादावपि विशेषणविशेष्यभावव्यत्यासमात्रेण सिद्धे अन्तग्रहणसामर्थ्यमपि सूपपादमिति परिभाषाश्रयणं व्यर्थम्। न चैवं 'गोकुलम्' इत्यत्र ह्रस्वः स्यादिति वाच्यम्, उपसर्जनं यो गोशब्दस्तदन्तस्य प्रातिपदिकस्य ह्रस्वविधानात्। सन्निधानाच्च प्रातिपदिकं प्रत्येव विशेषणताश्रयणात्। गोशब्दे च तदभावात्। अत एव "राजकुमारीपुत्रः" इत्यत्र न ह्रस्वः। उपसर्जनं यत्स्त्रीप्रत्ययान्तं तदन्तस्य प्रातिपदिकस्येत्यत्रापि सन्निधानाश्रयणात्। एष एव तवापि गतिः। न ह्युक्तपरिभाषेह सम्भवति "व्यपदेशिवद्भावोऽप्रातिपदिकेन" ( प० भा० ३३ ) "ग्रहणवता" ( प० भा० ३१ ) इति च परिभाषाद्वयमपि प्रत्ययविधिविषयकमिति दिवउत्सूत्रे कैयटहरदत्ताभ्यामुक्तत्वात्। एवञ्च "पूर्वादिनिः" ( पा० सू० ५-२-८७ ) इति योगविभागो व्यर्थः। किम्बहुना "पूर्वादिनिः" ( पा० सू० ५-२-८७ ) इत्यत्र तदन्तग्रहणसम्भवात् "सपूर्वाच्च" (पा०सू० ५-२-८७) इति सूत्रं व्यर्थम्। व्यपदेशिवद्भावेन सिद्धे तस्येति प्रकृतवार्त्तिकमपि न कर्त्तव्यम्। स्वं रूपमिति तु प्रागेव प्रत्याख्यातमिति दिक्।

रथसीताहलेभ्यो यद्विधौ। "तद्वहति" ( पा० सू० ४-४-७६ ) इति यत्। रथ्यः; परमरथ्यः। सीत्यं, परमसीत्यं क्षेत्रम्। सीतयासम्मितं, सम्मतमित्यर्थः। "नौवयोधर्म" ( पा० सू० ४-४-९१ ) इति यत्। हलस्य कर्षो हल्यः "मतजनहलात्करणजल्पकर्षेषु" ( पा० सू० ४-४-७ ) इति यत्। यद्विधाविति किम् ? "हलसीराट्ठक्" (पा० सू० ४-३-१२४) इति ठग्विधौ तदन्तग्रहणं मा भूदिति कैयटः। अत्रेदं वक्तव्यम्। "हलसीरात्" ( पा० सू० ४-३-१२४ ) इति द्विः पठ्यते "तस्येदम्" ( पा० सू० ४-३-१२० ) इत्यधिकारे "तद्वहति" ( पा० सू० ४-४-८१ इत्यधिकारे च। तत्रोभयत्रापि तदन्तविधिरिष्ट एव। आद्यस्य प्राग्दीव्यतीयत्वाल्लुक्—द्विहलः। अपरस्य श्रवणम्—द्वैहालिकः। स्पष्टं चेदं चतुर्थे ह-

रदत्तग्रन्थे। युक्तं चैतत्। "रथाद्यत्" (पा० सू० ४-३-१२१) "तद्वहति" (पा० सू० ४-४-७६) इति रथशब्दस्य द्विरुपादानमेतदर्थमिति भाष्येऽप्युक्तत्वात्। वहत्याधिकारस्थरथहलयोरुपादानसामर्थ्याल्लभ्यो हि तदन्तविधिरविशेषादुभयत्रापि स्यादेव। न चैवमिह यद्विधावित्यसङ्गतमिति वाच्यम्, तस्योपलक्षणत्वात्। यद्वा, "रथाद्यत्" (पा० सू० ४-३-१२१) इति सूत्रे रथाद्रथाङ्गे इतिवद्बोढरीत्युक्तौ तत्प्रकारकशाब्दबोधस्योपपादयितुं शक्यत्वेऽपि हलग्रहणे तदुपपादनस्य वक्तुमशक्यत्वेन हलग्रहणेन न तदन्तविधिः। अस्तु वा संख्यापूर्वपद एवेति कैयटाशयः। "तस्मै हितम्" (पा० सू० ५-१-५) इति प्रकरणे "शरीरावयवाद्यत्" (पा० सू० ५-१-६) इति सूत्रे "रथाच्च" (का० वा०) इति वार्तिकम्। तत्राप्ययं तदन्तविधिर्बोध्यः। यत्तु तत्र कैयटो वक्ष्यति हलसीताशब्दाभ्यां साहचर्याच्चतुर्थाध्यायविहित एव यदिति तदन्तविधिमाहुरिति। तत्राहुरित्यस्वरसोद्भावनम् "असमासे निष्कादिभ्यः" इत्यसमासग्रहणेन तस्मिन्प्रकरणे विशिष्यापि तदन्तविधेर्ज्ञापिततया साहचर्याश्रयणेऽपि तदन्तविधेर्दुर्वारत्वादित्यवधेयम्।

सुसर्वार्द्धदिक्शब्देभ्यो जनपदस्य। सुपाञ्चालकः। सुमागधकः। सर्वपाञ्चालकः। अर्द्धपाञ्चालकः। "अवृद्धादपि बहुवचनविषयात्" (पा० सू० ४-२-१२५) इति वुञ्। "सुसर्वार्द्धाज्जनपदस्य" (पा० सू० ७-३-१२) इत्युत्तरपदवृद्धिः। दिक्शब्दः—पूर्वपाञ्चालकः। अपरपाञ्चालकः। पूर्ववद् वुञ्। "दिशोऽमद्राणाम्" (पा० सू० ७-३-१३) इत्युत्तरपदवृद्धिः।

ऋतोर्वृद्धिमद्विधाववयवानाम्। ऋतुवाचिनः शब्दाद्यो वृद्धिमान् वृद्धिनिमित्तः प्रत्ययस्तद्विधाने अवयवानां पूर्वपदत्वे इति शेषः। तदन्तविधिरिह वाचनिक एव। शरदः पूर्वो भागः पूर्वशरत्। "पूर्वापराधरोत्तरम्" (पा० सू० २-२-१) इत्येकदेशिसमासः। तत्र भवं पूर्वशारदम्। "सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्" (पा० सू० ४-३-१६)। "अवयवादृतोः" (पा० सू० ७-३-११) इत्युत्तरपदवृद्धिः। वृद्धिमदिति किम्? "प्रावृष एण्यः" (पा० सू० ४-३-१७) इत्यत्र तदन्तविधिर्मा भूत्। तेन तत्र ऋत्वणेव भवति—पूर्वप्रावृषमिति। अवयवानां किम्? पूर्वस्यां शरदि भवं पौर्वशारदिकमित्यत्राण् न भवति किं तु कालाट्ठञेव भवति। तत्र हि यथाकथञ्चित्कालवाचिनो गृह्यन्ते न तु रूढ्यैवेत्यसग्रहः, उत्तरत्र सन्धिवेलाद्यृतुनक्षत्रेभ्य इति विशेषणात्। अत एव सायम्प्रातिकः, पौनःपौनिकः, इत्यादि सिध्यति।

ठञ्विधौ संख्यायाः। द्वे षष्टी परिमाणमस्येति विग्रहे "तद्धितार्थ- (पा० सू० २-१-५१)इत्यनेन समासे कृते आर्हादू" (पा० सू० ५-१-१९) इति ठक् न भवति, संख्यायास्तदन्तविधौ सति संख्यान्तादपि ठक्- प्रतिषेधात्। तेन "प्राग्वतेः"( पा० सू० ५-१-१८ ) इति ठञेव भवति। "अध्यर्द्धपूर्व"(पा० सू० ५-१-२८) इति लुक्तु न भवति "सोस्यांशवस्न- भृतयः" ( पा० सू० ५-१-५६ ) इत्यतः सोऽस्येत्यनुवर्त्तमाने "तदस्य परिमाणं( पा० सू० ५-१-५७ ) इत्यत्र पुनःप्रत्ययार्थस्य समर्थविभक्तेश्च निर्देशात्। पुनर्निर्देशेन हि प्रकृताल्लुकसम्बद्धाद्विलक्षणमिदमिति सूच्यते। यद्वा, अनुवर्तमानेन सोस्येत्यनेन सहितं परिमाणं संख्याया इत्येतत्तावत्प्रत्ययं विधत्ते। ततस्तस्य लुकि कृते पुनः "तदस्यपरिमाणम्" ( पा० सू० ५-१-५७ ) इति वचनसामर्थ्यात्स्वार्थे तज्जातीयः प्रत्ययः। तस्य विधानसामर्थ्यात् द्विगुनिमित्तत्वाभावाद्वा लुङ् न भविष्यति। एतच्च वृत्तिकारमतमाश्रित्योक्तम्। भाष्यकारमते तु "तमधीष्ट"( पा० सू० ५-१-५८ ) इति सूत्रेण भूतार्थे प्रत्ययं कृत्वा "द्विषाष्टिकः" इत्यादि साध्यम्। न ह्यत्र "अध्यर्द्ध" (पा०सू०५-१-२८) इतिलुक् प्राप्नोति, अना- र्हीयत्वात्। यद्यपि "तमधीष्ट"(पा०सू०५-१-८६)इत्यत्र कालादिति वर्तते तथापि काले संख्येये वर्तमानात् षष्टिशब्दादुत्पत्तिर्न विरुध्यते रमणी- यादिभ्यस्त्वनभिधानान्न भवति। परिमाणार्थे तु लुक् दुर्वारः। तथाहि "प्राग्वतेष्ठञ्"(पा० सू० ५-१-१८)इति ठञ् "तदर्हति"(पा० सू० ५-१- ६३ )इत्यतः प्राक् "तेन क्रीतम्"(पा० सू० ५-१-६३)इत्येवमाद्या येऽर्था- स्तेषु भवति, अर्हत्यर्थे च । ततः परेऽपि येऽर्था वर्त्तयतत्यादयः "आ- कालिकडाद्यन्तवचने"( पा० सू० ५-१-११४ )इत्येवमन्तास्तेष्वपि भवति एवञ्च ठञ आर्हीयानार्हीयार्थसाधारणत्वेपि परिमाणस्य "तदर्हति" ( पा० सू० ५-१-६३ )इत्यतः प्राङ् निर्देशात्तत्रोत्पन्नष्ठञ् आर्हीय एव। न च तदस्येति पुनरुपादानमात्रेणार्हीयत्वमपगच्छति। न हि काको वाश्यत इत्यार्हीयत्वं निवर्त्तते। किञ्च, यद्यार्हीयत्वं निवर्त्तेत, तर्हि जीवितपरिमाणादन्यत्रापि लुङ् न स्यात्। द्वौ निष्कौ परिमाणमस्य द्विनिष्कः। न च "द्वित्रिपूर्वान्निष्कात्" ( पा० सू० ५-१-३० )इति वच- नसामर्थ्यात्स्यादिति वाच्यम्, परिमाणातिरिक्तेष्वार्हीयार्थेषु वचनस्य सावकाशत्वात्। तस्माद्यस्य षष्टिर्जीवितपरिमाणं षष्टिमसौ भूतो भव- तीति "तमधीष्टो भृत" ( पा० सू० ५-१-८० ) इत्येव द्विषाष्टिकः साध- नीयः। तदस्येति तु त्यक्तव्यं सोस्येत्यनुवृत्त्यैवेष्टसिद्धेरिति स्थितम्।

धर्माञ्ञ्ञः। "धर्मं चरति धार्मिकः। अधर्मं चरति आधर्मिकः।

"अधर्माच्च" ( का० वा० ) इत्येतन्न वक्तव्यम्।

पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च प्रयोजनम्। इष्टकेषीकामालानाञ्चिततूलभारिषु" ( पा० सू० ६-३-६५ ) इष्टकचितम्, पक्वेष्टकचितम्। इषीकतूलेन, मुञ्जेषीकतूलेन। मालभारी, उत्पलमालभारी। इहोत्तरपदाधिकारे प्रयोजनस्योदाहरणात्पदाङ्गेति पदशब्द उत्तरपदपर इति कैयटादयः।

अत एव 'परममहत्परिमाणम्' इत्यत्र परममहतो द्रव्यस्य परिमाणमिति षष्ठीतत्पुरुषः। सामानाधिकरण्ये हि "आन्महतः" ( पा० सू० ६-३-४६ ) इत्यात्वं स्यादित्युदयनाचार्या व्याचख्युः। यत्तु तत्र वर्द्धमानेनोक्तम्—"पदाङ्गाधिकारे" इत्यत्र केवलपदाधिकारो गृह्यते न तूत्तरपदाधिकारः। अन्यथा "इष्टकेषीकामालानाम्" ( पा० सू० ६-३-६५ ) इत्यत्र पुनस्तदन्तविध्युपसंख्यानं व्यर्थं स्यात्। तथा च 'परममहत्परिमाणमित्यत्र कर्मधारयपक्षेऽप्यात्वप्रसक्तिर्नास्त्येवेति तदेतदनवहिताभिधानम्, "इष्टकेषीक" (पा० सू० ६-३-६५) इत्यस्य प्रयोजनत्वेनोदाहरणात्, उपसंख्यानान्तरस्य गगनकुसुमायमानत्वात्"। तस्मादाचार्योक्तमेव सम्यक्। एतेन "सततनैशतमोवृतमन्यतः" ( कि० ५-२ ) इति भारविप्रयोगे "ओजः सहोम्भस्तमसस्तृतीयायाः" (पा० सू० ६-३-३) इत्यलुक् कुतो नेत्याशङ्क्य वर्धमानोक्तरीत्योत्तरपदाधिकारे तदुत्तरपदग्रहणं नास्तीति दुर्घटवृत्तिकारोक्तिरप्यपास्ता। यदपि "ओजः सह" (पा० सू० ६-३-३) इति सूत्रे हरदत्तेनोक्तम्—ओजः प्रभृतीनामुत्तरपदाक्षिप्तं पूर्वपदं प्रति विशेष्यत्वादिति तदपि वार्तिकविरोधादुपेक्ष्यम्, विशेष्यविशेषणभावानिर्णयायैवेहत्यवार्तिकानां प्रवृत्तिरिति कैयटवदेव स्वयमपि व्याख्यातत्वात्। भारविप्रयोगस्त्वित्थं समाधेयः। वृत्तं वृत्तिः नैशतमसो वृतमिति षष्ठीतत्पुरुषः। नपुंसके भावे क्तस्य योगे शेषत्वविवक्षायां षष्ठी। ततः सततं नैशतमसो वृतं यस्मिन्निति बहुव्रीहिः। यद्वा, "वृतु वर्तने" ( भ्वा० आ० ७५८ ) घञर्थे कविधानमिति भावे कः। सततं नैशतमसो वृतं वृत्तिर्यस्मिन्निति प्राग्वत्।

अङ्गाधिकारे प्रयोजनमाह—प्रयोजनं महदप्स्वसृनप्तॄणां दीर्घविधौ। महान्, परममहान्। आपस्तिष्ठन्ति, स्वापः। "न पूजनात्" (पा० सू० ५-४-६९) इति समासान्तनिषेधः। नन्वेवमपि "द्व्यन्तरुपसर्गेभ्योऽप ईत्" (पा० सू० ६-३-९७) इतीकारः प्राप्नोति। न ह्ययं समासान्तः येन "ऋक्पूः" ( पा० सू० ५-४-७४ ) इत्यप्रत्ययइव निषिध्येत इति चेत्? सत्यम्, "द्व्यन्तरुपसर्गेभ्य" ( पा० सू० ६-३-९७ ) इत्यत्रापि

इति कृतसमासान्तस्यानुकरणं प्रथमान्तम्। "अन्होऽदन्तात्" (पा० सू० ८-४-७) इतिवद्व्यत्ययेन षष्ठ्यर्थे प्रथमा। इत्थं "स्वाप" इति भाष्यं चास्मिन् व्याख्याने प्रमाणमित्यवधेयम्।

स्वसारौ, परमस्वसारौ। नप्तारौ, परमनप्तारौ।

पद्युष्मदस्मदस्थ्याद्यनडुहो नुम्। पद्भावः प्रयोजनम्। द्विपदः पश्य। केवलस्योदाहरणं तु पादयतेरप्रत्ययः, पात्, पदः, पदा, इत्यादि। इह क्वौ लुप्तत्वाण्णिलोपो न स्थानिवत्। उत्तरपदाधिकारे तु पादशब्दो विशेष्य एव। तेन "पादस्य पदाज्यातिगोपहतेषु" (पा० सू० ६-३-५२) इति पद्भावः 'पादेनोपहतं पदोपहतम्'इत्यत्रैव भवति। इह तु न दिग्ध-पादेनोपहतं दिग्धपादोपहतम्, इति। उत्तरसूत्रेष्वेवम्। तेन "पद्यत्यतदर्थे" (पा० सू० ६-३-५३) हिमकाषिहतिषु च (पा० सू० ६-६-५४) इति पद्भाव इहैव भवति-पादौ कषतीति पत्काषी। इह तु न-परमपादकाषी। यस्तु 'परमपत्काषी'ति प्रयोगः। स परमश्चासौ पत्काषी चेति विग्रहेण समा-धेय इति भाष्यकैयटयोः स्थितम्।

यूयं, वयम् अतियूयम् अतिवयम्। अस्थ्ना, परमास्थ्ना। अनड्-वान् परमानड्वान्।

द्युपथिमथिपुंगोसखिचतुरनडुत्त्रिग्रहणम्। द्यौः, सुद्यौः। पन्थाः, सुपन्थाः। "न पूजनात्" (पा० सू० ५-४-६९) इति समासान्ता-भावः। पन्थाः, परमपन्थाः। पुमान्, परमपुमान्। गौः, सुगौः। सखा, सुसखा। सखायौ, सुसखायौ। चत्वारः, परमचत्वारः। अनड्वाहः, परमानड्वाहः। त्रयाणां, परमत्रयाणाम्। भाष्ये तु परमपन्थाः, पर-मगौः इत्युदाहृतम्। तत्र समासान्तापत्तिः। "न पूजनात्" (पा० सू० ५-४-६९) इति निषेधस्तु नास्ति "स्वतिभ्यामेव" (का० वा०) इति वक्ष्यमाणत्वात्। अत एव क्वचित्कोऽयमपपाठ इति कैयटः। समासा-न्तविधेरनित्यतया वा समाधेयम्। यद्वा, परमुदाहरणान्तरमित्यर्थः। अपन्थाः, अगौरित्यत्र नञस्तत्पुरुषात् "पथो विभाषा" (पा० सू० ५-४-७२) इति साधुत्वम्। यत्तु 'परमसखायौ' इति पठितं भाष्ये। तत्र बहुव्रीहिर्बोध्यः। गौणत्वे ऽपि ह्यनङ्णित्वे इष्येते एवास्थ्याद्यन-ङ्वत्। एतच्च "मिदचोऽन्त्यात्" (पा० सू० १-१-४७) इत्यत्र "द्वितीया श्रित" (पा० सू० २-१-२४) इत्यत्र च स्पष्टम्। "अरूद्युक्षोवरुण इन्द्रसखा" "आग्नेयाहिमरुत्सखा" इत्यादि प्रयोगाश्चैवमेव सङ्गच्छन्ते। एतेन घिसंज्ञासूत्रे शोभनः सखा अस्य सुसखिरित्युदाहरन् हरदत्तो न्यासकारश्चापास्तः। "त्रेस्त्रयः" (पा० सू० ६-३-४८) इति तु त्रिः

शब्दार्थसमवेतसंख्याद्यभिधायिन्यामिपरे इति व्याख्यानाद्गौणे न भवति—प्रियत्रीणाम्, अतित्रीणाम्। प्राधान्ये तु स्यादेव—"परमत्रयाणाम्" इत्याहुः। अत्र व्याख्याने प्रमाणं मृग्यम्।

इह 'पदाङ्गाधिकार' इति कर्त्तव्यम्, तदन्तग्रहणेनैव सकलेष्टसिद्धेरित्युक्तं न विस्मर्त्तव्यम्।

"प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्" (प० भा० २३)। इह प्रत्ययाक्षिप्तस्य धातुप्रातिपदिकाद्यवयवकसमुदायस्य प्रत्ययेन विशेषणात्तदन्तविधिर्लभ्यते। अङ्गसंज्ञासूत्रे यस्मात्प्रत्ययविधिस्तदादिप्रत्यये इति योगं विभज्य परिभाषात्वेन व्याख्यानादंशान्तरलाभः। इदं च संज्ञाविधौ न प्रवर्त्तते, "सुप्तिङन्तं पदम्" (पा० सू० १-४-१४) इति ज्ञापकात्। उत्तरपदाधिकारेऽपि न प्रवर्त्तते "हृदयस्य हृल्लेखयदण्लासेषु" (पा० सू० ६-३-५०) इति सूत्रे लेखग्रहणाज्ज्ञापकादिति वक्ष्यते। अस्यापवादमाह—"प्रत्ययग्रहणं चापञ्चम्याः" (पा० भा० २४) इति। यत्र पञ्चम्यन्तं प्रत्ययस्य विशेषणं तत्र तदन्तग्रहणं नेत्यर्थः। यथा "रदाभ्यां निष्ठातः" (पा० सू० ८-२-४२) इत्यत्र। तेन 'दृषत्तीर्णा' इत्यत्र तृधातोस्तकारस्य निष्ठान्तप्रत्ययावयवीभूतस्य नत्वं न भवति। इह प्रघट्टके संज्ञाविधावुत्तरपदाधिकारे "रदाभ्यां" (पा० सू० ८-२-४२) "स्यतासी लृलुटोः" (पा० सू० ३-१-३३) इत्यादौ च प्रत्ययो विशेष्यतयाऽऽश्रीयते, इतरत्र तु विशेषणतयेति फलितोऽर्थः। तदिदं सकलं सूत्रेणैव सिद्ध्यतीति स्थितम्।

सौत्रस्य तदन्तविधेर्वाचनिकमपवादमाह वार्तिककारः—यस्मिन् विधिस्तदादावल्ग्रहणे। "अचि श्नुधातु" (पा० सू० ६-४-७७) इतीयङुवङ् च यथेह भवति श्रियौ, भ्रुवाविति, एवमिहापि सिद्ध्यति श्रियः, भ्रुवः इति। तदन्तविध्यपवादस्तदादिविधिरतो विशेषणेनैव॥

वृद्धिर्यस्याचामादिस्तद्वृद्धम् (पा० सू० १-१-७३)॥ यस्य समुदायस्यावयवानामचां मध्ये प्राथमिकोऽज् वृद्धिसंज्ञकः स वृद्धसंज्ञकः स्यात्। आम्रगुप्तीयः। "वृद्धाच्छः" (पा० सू० ४-२-११४)। अचामिति जातौ बहुवचनं तेन द्वयोरपि भवति—शालीयः। एकस्यापि च भवति व्यपदेशिवद्भावात्—ऐ ब्राह्मणी, तस्या अयं ऐयः। "वा नामधेयस्य" (का० वा०)—पौरुषेयं नाम तस्य वृद्धसंज्ञा वा स्यादित्यर्थः। उभयत्र विभाषेयम्, देवदत्तादीनामप्राप्ते वामनादीनां च प्राप्ते आरम्भात्। देवदत्तीयाः, देवदत्ताः। "विधाय मूर्तिं कपटेन वामनीम्" इति श्रीहर्षः। "गोत्रोत्तरपदस्य च"। नित्यं वृद्धसंज्ञा वक्तव्येति शेषः।

कम्बलचारायणीयाः। ओदनपाणिनीयाः। घृतरौढीयाः। कम्बलप्रियस्य चारायणस्य शिष्या इत्यादिरर्थः। पणनं पणः। "घञर्थे कविधानम्" इति कः। सोऽस्यास्तीति पणी। पणिनो गोत्रापत्यं पाणिनः। अण्। "गाथिविदथिकेशिगणिपणिनश्च (पा० सू० ६-४-१६५) इति प्रकृतिभावः। ततो यूनीञ्। पाणिनिः।

स्यादेतत्। "ण्यक्षत्रियार्षञितः" (पा० सू० २-४-५८) इति सूत्रेणेह इञो लुक् प्राप्नोति, आर्षाद् यून्युत्पन्नत्वादिति चेत्? न, आर्षग्रहणेन "ऋष्यन्धक" (पा० सू० ४-१-११४) इति सूत्रविहितस्य ऋष्यण एव ग्रहणात्। अस्य चौत्सर्गिकत्वात्। यद्वा, पणिन्शब्दो यौगिको न तु ऋषौ रूढः। लुग्विधौ तु रुढस्यैव ग्रहणम्। एतच्च शास्त्रान्ते "एकशेषनिर्देशाद्वा भगवतः पाणिनेः सिद्धम्" (का० वा०) इति वार्त्तिकनिर्देशाद् "दाक्षीपुत्रस्य पाणिनेः" (भा० इ०) इति भाष्यकारव्यवहाराच्च निर्णीयते।

नन्वेवमपि पाणिनेश्छात्राः पाणिनीयाः इति न सिध्यति। वृद्धाच्छं बाधित्वा "इञश्च" (पा० सू० ४-२-११२) इत्यणः प्रसङ्गात्। न च छे विवक्षिते "यूनि लुक्" (पा० सू० ४-१-९०) इतीञो लुकि सति नायमिञन्त इति वाच्यम्। प्रत्ययलक्षणेन इञन्तत्वानपायात्।

अत्राहुः। "इञश्च"(पा० सू० ४-२-११२)इत्यत्र "कण्वादिभ्योगोत्रे" (पा० सू० ४-२-१११)इत्यतो गोत्रग्रहणमनुवर्त्तते। तच्च पूर्वसूत्र एव स्वर्यते। तेनापत्याधिकारादन्यत्वेन प्राप्तं लौकिकं गोत्रं विहाय गोत्राधिकारो गृह्यते "स्वरितेनाधिकारः" (पा० सू० १-३-११) इति वचनात्। कण्वादिश्च गर्गाद्यन्तर्गणः। ततो "गर्गादिभ्यो यञ्"(पा०सू०४-१-१०५) इति विधीयमानो यञ् पारिभाषिक एव गोत्रे भवति, तत्रापत्याधिकारसत्त्वात्। तेन "इञश्च"(पा०सू०४-२-११२)इत्यत्रापि पारिभाषिके गोत्रे य इञ् तदन्ताच्छेषेऽणित्यर्थः फलितः। यद्वा, लक्षणप्रतिपदोक्तपरिभाषया कण्वादिसूत्रे यञेव गृह्यते स च पारिभाषिके विहितत्वात्तस्यैव प्रत्यायकः। एवञ्चार्थाधिकारादिञश्च (पा० सू० ४-२-११२)इत्यत्रापि तथा। पाणिनिरिति तु यूनि इञ्, न तु गोत्रे। तेनाणोऽप्राप्तेर्निर्बाधश्छप्रत्यय इति स्थितम्।

रूढस्यापत्यं रौढिः। "अत इञ्" (पा० सू० ४-१-९५)। अनन्तरे गोत्रे वा। न चैवम् "इञश्च" (पा० सू० ४-२-११२) इत्यिण् प्रसङ्गः, "न द्व्यचः प्राच्यभरतेषु" (पा० सू० ४-२-११३) इति निषेधात्।

स्यादेतत्। यदि गोत्रोत्तरपदस्य वृद्धसंज्ञा विधीयते, तर्हि पिङ्गल-

काण्व्यस्य छात्राः पैङ्गलकाण्वा इत्यत्र वृद्धाच्छः स्यात् । इष्यते तु "कण्वादिभ्यो गोत्रे" (पा०सू०४-२-१११) इत्यण् । सत्यम् । अत एवापरितोषादुक्तं वार्त्तिककृता "गोत्रान्ताद्वासमस्तवत्" (का०वा०) इति । शैषिकाधिकारे "प्राग्दीव्यतोऽण्" ( पा०सू०४-१-८३) इत्यत्र वा इत्थमतिदेशः कर्त्तव्य इत्यर्थः । अपत्याधिकारादन्यत्वाच्च लौकिकगोत्रग्रहणाद् "ओदनपाणिनीयाः" इत्यादि सिद्ध्यतीति भावः । किमविशेषेण ? नेत्याह । जिह्वाकात्यहरितकात्यवर्ज्जम् । कतशब्दो गर्गादिः । जिह्वा चपलो, हरितवर्णश्च कात्यः । तस्य छात्रा इत्यर्थेऽणेव भवति—जैह्वाकाताः, हारितकाताः ॥

त्यदादीनि च ( पा०सू०१-१-७४)। एतानि वृद्धसंज्ञानि स्युः । त्यदीयम् , अदसीयम् , इदमीयम् किमीयम् त्वादायनिः, मादायनिः । "उदीचां वृद्धाद्" (पा०सू०४-१-१५७)इति फिञ् । प्रत्ययोत्तरपदयोश्च" ( पा०सू०५-२-९८) इति त्वमावादेशौ ॥

एङ्प्राचां देशे ॥ (पा०सू०१-१-७५) । यस्याचामादिरिति मण्डूकप्लुत्याऽनुवर्त्तते । एङ् यस्याचामादिस्तद्वृद्धसंज्ञं वा स्याद्देशाभिधाने । एणीपचनीयः । गोनर्दीयः । भोजकटीयः । एङिति किम् ? आहिच्छत्रः। कान्यकुब्जः । विधेयसंज्ञासम्बन्धबलेन पृथग्विभक्त्युच्चारणाच्च प्राग्ग्रहणमाचार्यनिर्देशार्थम् । व्यवस्थितविभाषा चेयम् । तेन क्रोडदेवदत्तशब्दयोरप्राग्देशवाचिनोर्न वृद्धसंज्ञा तेन 'क्रौडः' 'दैवदत्तः' इत्यणेव भवति । प्राग्देशवाचिनस्तु देवदत्तशब्दस्य भवत्येव वृद्धसंज्ञा । ततः काश्यादित्वाद्वृद्धलक्षणौ ठञ्ञिठौ भवतः । शैषिकेष्विति वक्तव्यम् । सैपुरिकी, सैपुरिका । स्कौनगरिकी, स्कौनगरिका । सेपुरं स्कोनगरं च वाहीकग्रामौ । तत्र वृद्धत्वाद् "वाहीकग्रामेभ्यश्च (पा०सू०४-२-११७) इति ठञ्ञिठौ भवतः । शैषिकेष्विति वचनादपत्ये वृद्धलक्षणः फिञ् न। विकारे च "नित्यं वृद्ध" (पा०सू०४-३-१४४) इति मयण् न । तदेवं कुणिमतं भाष्यमतं चानुसृत्य प्राग्ग्रहणमाचार्यनिर्देशार्थमिति व्याख्यातम् । जयादित्यस्तु प्राचि देशे ये सन्ति ते प्राचः पुरुषास्तेषां यो देशस्तदभिधान इति व्याचख्यौ । प्राचामित्यस्य च श्रूयमाणदेशविशेषणत्वे सम्भवति अध्याहर्त्तव्येन मतेनेत्यनेनान्वयो न कल्प्य इति तस्याशयः । अस्मिन् पक्षे वाहीकग्रामे 'दैवदत्तः' इत्यत्र वाऽवृद्धत्वादेव ठञ्ञिठौ न भवत इति स्पष्टम् । किन्तु 'सैपुरिकी' इत्यादिभाष्योदाहृत वचनेनैव साधनीयं स्यादिति दिक् ।

देशइति किम् ? गोमती नाम प्राग्देशनदी, तत्र भवा मत्स्याः 'गौ-

मताः'। देशग्रहणेन नदी गृह्यते "नदीदेशोऽग्रामाः" (पा०सू०प०२-४-७) इति पृथगुपादानाल्लिङ्गात्। प्रागादिदेशविभागस्त्वित्थम् शरावतीनाम नदी उत्तरपूर्वाभिमुखी। तस्या दक्षिणपूर्वस्यां दिशि व्यवस्थितो देशः प्राग्देशः। उत्तरापरस्यामुदग्देशः। उक्तञ्च

प्रागुदञ्चौ विभजते हंसः क्षीरोदकं यथा।
विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती॥ इति।

अमरसिंहोप्याह—

लोकोऽयं भारतं वर्षं शरावत्यास्तु योऽवधेः।
देशः प्राग्दक्षिणः प्राच्यः उदीच्यः पश्चिमोत्तरः (अ०को०) इति।

अमरव्याख्यातारस्तु ऐशानीतो नैर्ऋत्यां पश्चिमाब्धिगामिनी शरावतीति वदन्ति। उभयथाऽपि प्रागुदक्स्वरूपे न विवादः। वाहीकदेशस्तु प्रागुदग्बहिर्भूतः। "बहिषष्टिलोपो यञ्च (का०वा०) इति व्युत्पादनादिति विवरणम्। तच्चिन्त्यम्, "अव्ययात्त्यप्" (पा०सू०४-२-१०४) इति सूत्रे "काश्यादिभ्यष्ठञ्ञिठौ" (का०वा०) इति वार्तिकं व्याचक्षाणेन भगवता शाकलनाम्नो ग्रामस्योदीच्यवाहीकोभयरूपताभ्युपगमात्। तत्र हरदत्तादिभिस्तथैवानुवादाच्च। तस्माद्वाहीको देशविशेष इत्येव तत्त्वम्। तथाच कर्णपर्वणि

पञ्चानां सिन्धुषष्ठानामन्तरं ये समाश्रिताः।
वाहीका नाम ते देशा न तत्र दिवसं वसेत्॥ इति।

एतेन धर्मबहिर्भूतत्वाद्वाहीका इत्युक्तं भवति। शतद्रूर्विपाशा इरावती वितस्ता चन्द्रभागेति पञ्च नद्यः, सिन्धुनदस्तु षष्ठः, तन्मध्यदेशो वाहीक इति तद्व्याख्यातारः। व्युत्पत्त्यन्तरं तु तत्रैव दर्शितम्।

वहिकश्च वहीकश्च विपाशायां पिशाचकौ।
तयोरपत्यं वाहीका नैषा सृष्टिः प्रजापतेः॥ इति।

एतच्च विवेचनं "वाहीकग्रामेभ्यश्च" (पा०सू०४-३-११७) इत्यादावुपयोक्ष्यत इति सर्वं सुस्थम्॥

इति श्रीविद्वन्मुकुटरत्नस्य लक्ष्मीधरसूरेः सूनुना भट्टोजिभट्टेन कृते
शब्दकौस्तुभे प्रथमाध्यायस्य प्रथमे पादे नवममाह्निकम्॥

पादश्चायं प्रथमः समाप्तः॥



# भैरवी-भावप्रकाश-सरलासहित-

# प्रौढमनोरमाशब्दरत्नयोः-

## विज्ञप्तिः ।

अथेदानीं काशिकराजकीयप्रधानसंस्कृतपाठशालीयपरीक्षासु कलिकाता-विहार-पञ्चनदाद्यनेकदेशीयपरीक्षासु च पाठ्यत्वेन निर्धारितायाः पाणिनिव्याकरणशास्त्रमूर्धन्य-ग्रन्थभूतायाः श्रीमत्सुगृहीतनामधेयवैयाकरणप्रवरभट्टोजीदीक्षितकृतायाः प्रौढमनोरमाया अपूर्वं विशिष्टं सर्वाङ्गसुन्दरं च नवीनं संस्करणं प्रस्तूयते । यद्यप्यस्य ग्रन्थस्यानेकविधानि संस्करणानि वर्तन्ते, तथापि तत्र कचिच्छब्दरत्नमात्रं क्वचिच्च भैरवीसहितं शब्दरत्नं संकलितं, न पुनः पायगुण्डे-वैद्यनाथ-कृतभावप्रकाशः शब्दरत्नटीका संकलितेति ।

अत्र संस्करणे प्रौढमनोरमाग्रन्थः सर्वोपरि संग्रथितस्तदधो हरिदीक्षितकृतमध्ययनाध्यापनादौ सर्वतः प्रचलितं प्रसिद्धतमं लघुशब्दरत्नं, तदधो भैरवमिश्रविरचिता शब्दरत्नव्याख्या भैरवी, तदधश्च पायगुण्डे वैद्यनाथविरचितः शब्दरत्नटीका भावप्रकाशः संग्रन्थितुमारभ्यते ।

विदितमेव श्रीमतां वैयाकरणानां तत्र भवतामध्यापकानां विद्यार्थिनां च दीपकनामकं टिप्पणं लघुशब्देन्दुशेखरस्य महामहोपाध्याय स्वर्गीय पं० श्रीनित्यानन्दपन्त-पर्वतीयसंकलितं कियदुपकारीति । तामेव रीतिमनुसृत्य तत्प्रदर्शितपथेनैव तदीयान्तेवासिभिः सुगृहीतनामधेयैः काशिकराजकीयसंस्कृतपाठशालायां व्याकरण-वेदान्त-धर्म-शास्त्राध्यापकैरनेकग्रन्थसम्पादकैः नेने-गोपालशास्त्रिभिरभिनवं 'सरला' नाम टिप्पणं संकलितमपि अस्मिन् संस्करणे मुद्रणार्थं दीयते इति महत्सौभाग्यम् । अनेन टिप्पणेन व्याकरणजिज्ञासूनां महान् लाभो भवेदिति निश्चप्रचम् ।

तदेवं मनोरमा-शब्दरत्न-भैरवी-भावप्रकाश-सरलाग्रन्थपञ्चकमव्ययीभावप्रकरणान्तं प्रथमतो भागद्वयेन प्रकाश्यते । तत्र काशिकराजकीयप्रधानसंस्कृतपाठशालीय-व्याकरण-शास्त्रिप्रथमवर्षे निर्धारितो भागः प्रथमो, द्वितीयवर्षे च निर्धारितो द्वितीयोभागो भवेत् ।

तत्र प्रथमो भागः श्रीमतां करकमलेषु आगामिभाद्रपूर्णिमायां समर्पितो भवेदित्याशासे ।

प्रतिभागं मूल्यं रूप्यकत्रयं, समग्रस्य च मूल्यं रूप्यकपञ्चकं भवेदिति ।

प्राप्तिस्थानम्- चौखम्बा संस्कृत सीरिज आफिस, बनारस सिटी